# AYURVEDA VIJNANAM

OR

HINDU SYSTEM OF MEDICINE

COMPILED BY

**Kaviraj Binod Lall Sen.**

Vol. II

*SECOND EDITION*

1916

# आयुर्व्वेदविज्ञानम् ।

उत्तरार्द्धम् ।

( निदान चिकित्सितस्थानम् । )

कविराज विनोदलाल सेन महोदयेन

सङ्कलितम ।

श्रीआशुतोष सेन श्रीपुलिनकृष्ण सेन कविराजाभ्यां

संस्कृत प्रकाशितञ्च ।

---

कलिकातायां

१४६ नं० लोयारचितपुरवर्त्मस्थितायुर्व्वेदयन्त्रे

श्रीगोपालचन्द्र चट्टोपाध्यायेन मुद्रितम ।

मूल्यं ४) मुद्रा ।

# विज्ञापनम्।

भगवत्कृपयेदानीमायुर्व्वेदविज्ञानस्योत्तरार्द्ध मुद्रित प्रचारितञ्च। अत्र रोगाणा निदान सम्प्राप्ति पूर्व्वरूप रूपमुपशयोऽनुपशयश्चिकित्सा पथ्यापथ्यविधिश्च सुविशद विवृतानि। वस्तुतस्त्विह चिकित्सायामवश्यज्ञातव्य कोऽपि विषयो न त्यक्त। चरकसहितादिविविधायुर्व्वेदग्रन्थेभ्य सारमाकृष्य सग्रहोऽय निबद्ध। एतेन चिकित्सकाना काचिदुपकृतिश्चेत्तदा मे श्रम सार्थक।

औषधकरणविधिस्त्वस्मत्प्रकाशितायां भैषज्यरत्नावल्या विवृतोऽस्ति। तत्रानुक्ताना भैषजानामुपादानादिकमत्र प्रकाशितम्। वस्तुतस्तु भैषज्यरत्नावल्यस्याङ्गविशेष एवेति स्वीकर्त्तव्यम्।

ग्रन्थस्यास्य निबन्धनेऽस्माभिर्महान् यत्न श्रमश्च कृत, फल कीदृग्जात सहृदयेषु विद्वत्स्वेव तद्विचारभार।

परमाराध्यो विपुलमतिरायुर्व्वेदमहाचार्य्यो मत्पितृव्यदेव श्रील-श्रीयुक्त-चन्द्रकिशोरसेनगुप्तमहोदयोऽस्य सग्रहणे विशेषेणानुकूलोबभूव। किमधिक वक्तव्य तच्चरणाशीर्व्वादबलादेवाहमस्य प्रचारे क्षमोऽभवम्।

अत्रेदमप्यवश्य वक्तव्य यन्मम चिरसुहृद्भक्तिभाजन आयुर्व्वेदपारदर्शी पूज्यपाद श्रीमद्योगीन्द्रकुमारविद्या

विनोदाख्यो भिषगस्य प्रणयणे भूयास यत्न श्रमञ्च कृत्वा मा चिरकृतज्ञतापाशेन सम्बद्धवानिति ।

कलिकाताया
आदि आयुर्वेदौषधालय ।
१८०९ शक ।

श्रीविनोदलालसेनगुप्त-
कविराजस्य ।

---

## द्वितीयसंस्करणस्य विज्ञापनम् ।

— o —

जगदीशप्रसादादस्य द्वितीयसंस्करणम् जातम् । प्रथम-संस्करणे यत्र या त्रुटि स्थिता सास्मिन् संस्करणे संशोधिता । प्रथमसंस्करणकाले ये रोगा भेषजानि च यथास्थान न निवेशिता अत्र संस्करणे ते यथायथ सन्निवेशिता । परम-पूजनीय मत्पितामहपादस्य श्रीमतो विनोदलालसेन महो-दयस्य तथा मत्तातपादस्य श्रीमतो आशुतोषसेन महाशयस्य पदाङ्कानुसारिणा मयाप्येतद्ग्रन्थस्य संस्करणादौ महानायासो-ऽर्थव्ययश्च स्वीकृत । परमपूजनीयेन श्रीरामगोपालकविरत्न भट्टाचार्य्यमहाशयेनास्य संस्करणे प्रभूतो यत्नं श्रमश्च स्वीकृत । अत्र यदि काचित् त्रुटि सा कृपया सुधीभिर्ज्ञापनीया । इत्यलम् ।

विनीत

१८३८ शकाब्दा ।

श्रीपुलिनकृष्णसेनगुप्त कविभूषणस्य ।

# आयुर्व्वेदविज्ञानस्य

## (निदानचिकित्सितस्थान) उत्तरार्द्धस्य

## सूचीपत्रम्।

# सूचीपत्रम्।

सूचीपत्र सम्पूर्णम्।

# अकारादिक्रमेणाधिकारसूचीपत्रम् ।

अकारादिक्रमेणाधिकारसूचीपत्र सम्पूर्णम्।

---

## अकारादिक्रमेणौषधसूचीपत्रम्।

अकारादिक्रमेणौषधसूचीपत्र सम्पूर्णम्।

# आयुर्व्वेदविज्ञानम् ।



## उत्तरार्द्धम् ।

### निदानचिकित्सितस्थानम् ।



### प्रथमोऽध्याय. ।

रोगस्वरूप तस्यापि ज्ञानोपायादिक भिषक् ।
ज्ञातु यतेत सिद्ध्यर्थं देहस्य प्रकृति तथा ॥

तत्र रोगस्वरूपनिर्णय ।

देहेऽसात्म्यस्य सयोगस्तत सात्म्यस्य सच्युति ।
व्याधिदु खविकारादि भाषया परिभाष्यते ॥
यद् देहस्य शुभाय स्याल्लिप्सा यस्य च जायते ।
दु खञ्चोपस्थितौ यस्य तच्चासात्म्य तदुच्यते ॥

अतएव व्याधिर्द्विविध । देहासात्म्यसयोगरूपो देह-सात्म्यविभागरूपश्च । ननु विकृतदेह एव व्याधि , अतोऽसात्म्य-सयोगेन देहस्य विकृतिरेव व्याधिरिति नोक्त्वा कथ देहसात्म्य सयोग एव व्याधिरित्युक्तम् । अत्रोच्यते । वस्तुनि वस्त्वन्तर सयोगस्ततो वा तदशविच्युतिरेव विकृतिरिति पारिभाष्यते । विकृतिशब्दस्य एतदतिरिक्तार्थस्य सर्व्वथैवासम्भव । अतएव तादृशसयोगस्य तादृशविभागस्य च विकृतिशब्दवाच्यत्वात्

तादृशसयोगस्तादृशविभागश्चैव व्याधिरिति मीमासा। देह मात्माविभाग इत्यत्र सात्म्यशब्देन देहस्यांशोऽपि बोध्य ।

व्याधि स त्रिविधो नाश्यो दम्योऽवार्य्यस्तथा स्मृत ॥
स नाश्य सर्व्वथा यस्तु नाश्यते भेषजादिभि ॥
दम्यते क्रियया यस्तु न नाश्येत कथञ्चन ।
निवृत्ताया क्रियायाञ्च य कालेन प्रकुप्यति ॥
दम्योऽसौ कीर्त्तितो व्याधिश्चिरकालानुबन्धन ॥
भेषजेनाथ पथ्येन य केनापि न वार्य्यते ।
अवार्य्योऽसौ गद प्रोक्त प्राणहन्ता महाबल ॥
नाश्य साध्याख्यया व्याधिर्दम्यो याप्याख्यया तथा ।
असाध्याभिधयाऽवार्य्य कथ्यते शास्त्रवेदिभि ॥
साध्यो गच्छति याप्यत्व याप्यो गच्छत्यसाध्यताम् ।
असाध्यस्तु हरेत् प्राणान् नरस्याप्रतिकारिण ॥
जातमात्रश्चिकित्स्य स्यान्नोपेक्ष्योऽल्पतया गद ।
वह्निशत्रुविषैस्तुल्य स्वल्पोऽपि विकरोत्यसौ ॥
व्याधावसात्म्यसयोगे देहात् तस्यापसारणम् ।
गदे सात्म्यच्युतौ कार्य्य तच्च तज्जनकार्पणम् ॥

रोगविज्ञानोपाया ।

निदानमथ सम्प्राप्ति पूर्व्वरूपञ्च लक्षणम् ।
तदुपशयो व्याधेर्विज्ञान पञ्चधा मतम् ॥

निदानम् ।

यद् भवेन्न विना येन निदान तस्य तन्मतम् ।
हेतुर्निमित्तमुत्थान प्रत्यय कारण तथा ।
बीजमायतनञ्चापि पर्य्यायस्तस्य भाषिता ॥

सम्प्राप्ति ।

यथा दुष्टेन दोषेण यथा चानुविसर्पिता।
निवृत्तिरामयस्यासौ सम्प्राप्तिर्जातिरागति ॥

येन कारणेन यस्य दोषस्य (वायो पित्तस्य कफस्य वा) यादृशी दुष्टि स्यात् तादृश्या दुष्ट्या विशिष्टेन, यादृश्या दुष्ट्या विशिष्टस्य दोषस्य यादृक् प्रसरण प्रकृति, तथा विसर्पता च दोषेण आमयस्य या निवृत्तिर्निष्पत्ति सा सम्प्राप्ति ।

पूर्व्वरूपम् ।

पूर्व्वरूपन्तु तद्व्याधि भाविन ज्ञापयेद्धि यत् ।
द्विविध तच्च सामान्यविशेषपरिभेदत ॥

सामान्यपूर्व्वरूपम् ।

वायुना वापि पित्तेन बलासेन कृतेन वा ।
असाधारणलिङ्गेन यन्न युक्तन्तु लक्षणम् ।
व्याधिमात्र वदेद्भव्य तत् सामान्यमुदाहृतम् ॥

विशेषपूर्व्वरूपम् ।

यस्य यल्लक्षण व्याधेस्तद्दोषव्यक्तता गतम् ।
यच्च विशेषदोषस्य बोधक तत्पर मतम् ॥

रूपम् ।

तदेव व्यक्तता यात रूपमित्यभिधीयते ।
सस्थान व्यञ्जन लिङ्ग लक्षण चिह्नमाकृति ॥

उपशय ।

औषधान्नविहाराणामुपयोग सुखावहम् ।
विद्यादुपशय व्याधे स हि सात्म्य इति स्मृत ॥

अत्रोपशयलक्षणे प्रथमतो "हेतुव्याधिविपर्य्यस्तविपर्य्यस्तार्थकारिणामिति" पाठो दृश्यते। परन्तु वैयर्थ्यात् कैश्चित् सुविज्ञैर्ग्रन्थकारै पाठोऽसौ परित्यक्त। अस्य वैयर्थ्यं प्रदर्श्यते हेतुव्याधिविपर्य्यस्तविपर्य्यस्तार्थकारिणामिति पदम् औषधान्न विहाराणामित्यस्य विशेषणम्। हेतुश्च व्याधिश्च हेतुव्याधी तयोर्व्यस्तसमस्तयोर्विपर्य्यस्ता प्रतिकूला विपरीता इति यावत तथा विपर्य्यस्तार्थकारिण विपरीतप्रयोजनसाधका हेतो समानगुणा व्याधेर्निदानसमानधर्म्मिणश्च रोगिणोऽनिष्टजनकत्वेन प्रसिद्धा इति यावत्। एवम्भूतानामौषधान्नविहाराणा सुखावह उपयोग आचरणमुपशय इति। अतएवायमर्थ फलति। औषधादिक हेतुव्याध्योर्विपरीत वा भवन्तु तयोर्विपरीतार्थकारि वा भवतु यदि तस्य प्रयोगेण रोगशान्तिर्भवेत् तर्हि स एव प्रयोग उपशय इति। अतएव सर्व्वविधस्यैव औषधादिकस्य सुखावह उपयोग उपशय इति निष्कृष्टोऽर्थ। यदि सर्वविधस्यैव औषधादिकस्य सुखकर उपयोग एव उपशयस्तत् कथम् एवम्भूतस्य औषधादिकस्य सुखावह उपयोग इत्युच्यते? केषाञ्चिदौषधान्नविहाराणा सुखावहोपयोगस्य उपशयत्वे केषाञ्चिन्न तथात्वे एवम्भूतानामुपयोग उपशय। अतोऽतिरिक्तानामनुपशय इत्येव पृथङ् उचित। सर्व्वेषानिर्द्देशादेव तथात्वे सामान्यनिर्द्देश एव सन्तोषकर। हेतुव्याध्योर्विपरीतार्थकारिभिरौषधादिभिर्व्याधिशान्तौ तदुपयोग उपशयाख्यो वा न वा इति सन्देहनिरासार्थं स्पष्टमुक्तमिति चेदुच्यते तदपि न प्रीतिकरम्। यदि सामान्यनिर्द्देशेन सर्वविधानामौषधादीनां सुखावह उपयोग उपशयाख्य इत्यर्थो गम्यते तत् कथ

कतिपयाना तादृशोपयोगस्य तथात्व न वा इति सन्देह स्यात्। सशयोत्पत्तौ सर्वथैव कारणाभाव । वस्तुतस्त्वयमुपदेश-श्चिकित्साविध्युपदेशाध्याये वाच्य नतूपशयलक्षण इति ।

विपरीतोऽनुपशयो व्याध्यसात्म्येति सज्ञित ॥
सख्याविकल्पप्राधान्यबलकालविशेषत ।
सप्राप्तिर्भिद्यते गुल्मा पञ्च चाष्टौ ज्वरा यथा ॥
दोषाणा समवेताना विकल्पोऽशाशकल्पना ।
नक्त दिनर्त्तुभुक्ताशैर्व्याधिकालो यथामलम् ॥
स्वातन्त्र्यपारतन्त्र्याभ्या व्याधे प्राधान्यमादिशेत्।
हेत्वादिकार्त्स्न्यावयवैर्बलाबलविशेषणम ॥
काले यथास्व सर्वेषा प्रवृत्तिर्वृद्धिरेव वा ।
सर्वेषा दोषाणा रोगाणाञ्च ।
सर्वेषामेव रोगाणा निदान कुपिता मला ।
तत्प्रकोपस्य तु प्रोक्त विविधाहितसेवनम ॥
मला वातादयो दोषा ।
विप्रकृष्ट सन्निकृष्ट निदान द्विविध मतत् ।
विरुद्धभोजनाद्याद्य पर वातादयो मला ॥
निदानार्थकरो रोगो रोगस्याप्युपजायते ।
तद्यथा ज्वरसन्तापाद्रक्तपित्तमुदीर्य्यते ॥
रक्तपित्ताज्ज्वरस्ताभ्या श्वासश्चाप्युपजायते ।
प्लीहाभिवृद्ध्या जठर जठराच्छोथ एव च ॥
अर्शोभ्यो जठर दु ख गुल्मश्चाप्युपजायते।
प्रतोश्यायादथो कास कासात् सञ्जायते क्षय ॥
क्षयरोगस्य हेतुत्वे शोषश्चाप्युपजायते ।

ते पूर्वं केवला रोगा पश्चाद्धेत्वर्थकारिण ॥
कश्चिद्धि रोगो रोगस्य हेतुर्भूत्वा प्रशाम्यति ।
न प्रशाम्यति चाप्यन्यो हेतुत्व कुरुतेऽपि च ॥

देहप्रकृति ।

जीवदेहेषु सर्वेषु शक्ति प्रकृतिरक्षणो ।
अनिर्वाच्याद्भुता नित्या बोज ससारशाखिन ॥
जीवयन्त्यनिश जोवान् वर्त्तते सहरन्त्यपि ।
सात्म्यग्रहण्यसात्म्यापसारण्येकैव सा द्विधा ॥
सा सात्म्यग्रहणो देहो यया गृह्णाति सात्म्यकम् ।
ख्याता सान्या यया चायमपसारयतीतरत् ॥
अनयैवाजपा जीव शक्त्या जपति सन्ततम् ।
बुभुक्षा च पिपासा च जायते ह्यत एव हि ॥
स्वेदमूत्रपुरीषाणि देहादपसरन्ति च ।
अतिभुक्ते विषे पीते छर्दिश्चाशु प्रजायते ॥
श्वासमार्गगत भोज्य वहिर्यात्यनयैव हि ।
औषधेन विना व्याधिरनयैव प्रशाम्यति ॥
यदा प्रकृतिरक्षिण्या शक्त्या व्याधिर्न शाम्यति ।
तदैव भेषज सेव्यमन्यथा तद् विगर्हितम् ॥
शक्ते प्रकृतिरक्षिण्या प्रतिघातात् पुन पुन ।
व्याधि सञ्जायते तस्यास्ततोऽनुसरण हितम् ॥
मानवैरवशैर्नित्य यथा सा प्रतिहन्यते ।
शक्ति प्रकृतिरक्षिनो जन्तुभिर्न तथेतरै ॥
अतस्त एव नियत क्लिश्यन्ते सर्व्वार्थनाशकै ।
व्याधिभि परिभूयन्ते दुर्भाग्या इव सृष्टिषु ॥

अवशैर्बहुनियमपरतन्त्रै । दुर्भाग्या इवेत्यत्र इवशब्द-प्रयोगाद् वस्तुतो न दुर्भाग्या इत्यर्थ । तेषामेव सर्वजीवेभ्य प्रभुत्वान्मोक्षाधिकारित्वाच्च ।

विहाराहारवृत्त्यादि भेदेन बहुधा नृणाम् ।
चिकित्सा भिद्यते देशकालजातिवशात् तथा ॥

जीवनम् ।

जीवन जीवधात्वर्थ प्राणन तस्य नाम च ।
आहरण निर्हरण श्वसन स्वनन गति ॥
ह्रासो वृद्धि सन्ततीना समुत्पादनमेव च ।
इत्याद्यास्तु क्रिया सर्वा ज्ञेया जीवनसञ्ज्ञया ॥
मनुजा पशव कीटा पक्षिणश्च सरीसृपा ।
जीवन्ति जन्तव सर्वे जीवन्ति च महीरुहा ॥

आहरणमाहार । देहाभ्यन्तरे देहपोषकपदार्थप्रवेशनम निर्हरण निर्हार । ततो जातदोषपदार्थापसारणम । आहरणा द्य कतिचित् क्रिया वृक्षादीनामप्यस्ति। अतस्तेऽपि जीवन्ति ।

आदावुपचयस्तेषा ततश्चापचयो भवेत् ।
तत स्यान्मरण तेऽतो धर्मत्रयसमायुता ॥

सुखेन तासामखिलक्रियाणा
निर्वाह एवाभिहित बुधैस्तु ।
स्वास्थ्य सदा सौख्यकर ततोऽन्या
व्याधिर्ह्यवस्था विपरीतधर्मा ॥

सञ्जीवकोपादानाना शोणित नरवर्ष्मसु ।
प्रधान प्रकृतिस्तस्य वर्ण्यते प्रथम तत ॥
सौक्ष्मिकैरणुभि शोणैरणुभिश्च तथा सितै ।

शोणित तोयबहुल सृष्टञ्च लवणादिभि ॥
यैरेष मानव काय पदार्थैर्वेधसा कृत ।
तैरेव शोणित सृष्ट यतस्तत् तस्य पोषणम् ॥
पोषणमत्र सजातीयपदार्थै परिमाणवृद्ध्यादि ॥
हृत्कोष्ठाच्छोणित कृत्स्न देह भ्रमति रहसा ।
धमन्यादिपथैर्नित्य फुप्फुसे तद विशुध्यति ॥

अजपा।

नासापथसमाकृष्ट पवन फुप्फुस गत ।
शोधयेच्छोणित दुष्ट तेन जीवन्ति जन्तव ॥
सोऽहशब्देन जीवाना श्वासोच्छ्वासौ निरन्तरम् ॥
स्याता वा हसशब्देनोच्छ्वासश्वासौ विपर्य्ययात् ॥
इत्यय द्व्यक्षरो मन्त्रो जीवजप्योऽजपा मता ॥
जपारम्भो हि जनन मरण तत्समापनम् ॥
तथाच दक्षिणामूर्त्तिसहितायाम्।
एकविशतिसाहस्र षट्शताधिकमीश्वरि ।।
जपते प्रत्यह प्राणी सान्द्रानन्दमयी पराम ॥
विना जपेन देवेशि । जपो भवति मन्त्रिण ।
अजपेय तत प्रोक्ता भवपाशनिकृन्तनी ॥
अन्यच्च षट् शतानि दिवारात्रौ सहस्राण्येकविशतिम् ।
एतत्सख्यान्वित मन्त्र जीवो जपति सर्वदा ॥
जात स इति वै शब्दमुच्चार्य्यारभते जपम् ।
महाप्रयाणसमये हमुच्चार्य्य समापयेत् ॥
शरीरमेतन्नियत प्रकृत्या याति सच्चयम् ।
श्वासभाषगतिस्पन्दचिन्तनाद्यैश्च कर्म्मभि ॥

क्षय तस्मिन् समापन्ने क्लेश कोऽपि प्रजायते ।
क्षुत्तृष्णादिरूपेण स एको हि विभिद्यते ॥
द्रवक्षयात् पिपासा स्याद् बुभुक्षान्यपरिक्षयात् ।
पानात् तृष्णा भोजनाच्च प्रणश्यति तथा क्षुधा ॥
पूरयित्वा प्रनष्टाश पीत भुक्तञ्च सन्ततम् ।
देह वर्द्धयते चापि स्वैर्गुणैर्देहपोषणै ॥
उष्णक्षये चोष्णलिप्सा ह्यन्यथा शीतकामिता ।
सर्वत्र कारण ज्ञेय शक्ति प्रकृतिरक्षणी ॥

सन्ताप ।

काय प्राणभृता नित्य वर्त्ततोष्णगुणान्वित ।
तस्यातिक्षयवृद्धिभ्या मृत्युर्वै भवति ध्रुवम् ॥
शोणितस्य प्रवाहेण स्पन्दाद्यैर्देहकर्म्मभि ।
श्वासानिलास्रसयोगाद् भुक्ताना परिणामत ॥
देहान्तर्बहुधा योगवियोगैरपि सन्ततम् ।
उत्पद्यते स तापो हि मुख्य जीवनलक्षणम् ॥
बालका स्थविराश्चापि युवभ्यस्तापवत्तरा ।
पुरुषेभ्यस्तथा नार्य्य इति प्राज्ञैरुदाहृतम् ॥
निशायामपि कल्ये च ताप शारीरिको नृणाम् ।
ह्रासमायाति च तथा सायाह्ने वर्द्धते पुन ॥
मूत्र पुरीष निष्ठ्यूत यद् यदन्यच्च देहत ।
निर्य्याति तै सहोत्ताप कियानप्यपसार्य्यते ॥
तापो रक्ष्य प्रयत्नेन नियत जीवनैषिभि ।
अङ्गत्राणादिभिर्यस्मात् तत्क्षयाद् व्याधिसम्भव ॥
शीतमारुतसस्पर्शात् प्रयाति स च सक्षयम् ।

तथोष्णानिलयोगेनानैसर्गो वृद्धिमेव च ॥
वृद्धिरप्यशुभाय स्यात् तापस्य चयवत् सदा ।
अत साम्येन त रक्षेत् सम स्वास्थ्यकरो हि स ॥
अङ्गे प्रकृतिरक्षिण्या प्रतिघातेन सर्वदा ।
तापस्य ह्रासवृद्धिभ्या शोणितादेश्च दोषत ॥
जायन्ते व्याधयो नृणा ज्वराद्या बहुदु खदा ।
ते भिषग्भिर्विशेषेण ज्ञातव्या सचिकित्सिता ॥
अतो ज्वरादिरोगाणा सर्वथा कारणादिकम् ।
प्रभाष्यते चिकित्सा च तत्र पथ्यादिक तथा ॥
इत्यायुर्वेदविज्ञाने निदानचिकित्सितस्थाने प्रथमोऽध्याय

---

## द्वितीयोऽध्याय: ।



### ज्वराधिकार ।

यत समस्तरोगाणा ज्वरो राजेति विश्रुत ।
अतो ज्वराधिकारोऽत्र प्रथम लिख्यते मया ॥
जन्मादौ निधने चापि प्रायो विशति देहिनम् ।
ऋते देवमनुष्याभ्या नान्यो विषहते हि तम् ॥
देहेन्द्रियमनस्तापो सर्वरोगाग्रजो बली ।
ज्वरोऽष्टधा पृथग्द्वन्द्वसघातागन्तुज स्मृत ॥

### ज्वरस्य निदान सप्राप्तिश्च ।

मिथ्याहारविहाराभ्या दोषा ह्यामाशयाश्रया ।
वह्निर्निरस्य कोष्ठाग्नि ज्वरदा स्यूरसानुगा ॥

### ज्वरस्य पूर्वरूपम ।

श्रमोऽरतिर्विवर्णत्व वैरस्य नयनप्लव ।
इच्छाद्वेषौ मुहुश्चापि शीतवातातपादिषु ॥
जृम्भाङ्गमर्द्दो गुरुता रोमहर्षोऽरुचिस्तम ।
अङ्गहर्षश्च शीतञ्च भवत्युत्पत्स्यति ज्वरे ॥
सामान्यतो विशेषात्तु जृम्भात्यर्थं समीरणात् ।
पित्तान्नयनयोर्दाह कफादन्नारुचिर्भवेत् ॥
रूपैरन्यतराभ्यान्तु संसृष्टैर्द्वन्द्वज विदु ।
सर्वलिङ्गसमावाय सर्वदोषप्रकोपजे ॥

### ज्वरस्य सामान्यलक्षणम ।

स्वेदावरोध सन्ताप सर्व्वाङ्गग्रहण तथा ।
युगपद् यत्र रोगे तु स ज्वरो व्यपदिश्यते ॥

### वातज्वरलक्षणम् ।

वेपथुर्विषमो वेग कण्ठौष्ठपरिशोषणम ।
निद्रानाश क्षवस्तम्भो गात्राणा रौक्ष्यमेव च ॥
शिरोहृद्गात्ररुग्वक्त्रवैरस्य गाढविट्कता ।
शूलाध्माने जृम्भणञ्च भवत्यनिलजे ज्वरे ॥

### पित्तज्वरस्य लक्षणम् ।

वेगस्तीक्ष्णोऽतिसारश्च निद्राल्पत्व तथा वमि ।
कण्ठौष्ठमुखनासाना पाक स्वेदश्च जायते ॥
प्रलापो वक्त्रकटुता मूर्च्छा दाहो मदस्तृषा ।
पीतविण्मूत्रनेत्रत्व पैत्तिके भ्रम एव च ॥

### कफज्वरस्य लक्षणम् ।

स्तैमित्य स्तिमितो वेग आलस्य मधुरास्यता ।

शुक्लमूत्रपुरीषत्व स्तम्भस्तृप्तिरथापि च ॥
गौरव शीतमुत्क्लेदो रोमहर्षोऽतिनिद्रता।
प्रतिश्यायोऽरुचि कास कफजेऽच्णोश्च शुक्लता ॥

वातपित्तज्वरस्य लक्षणम्।

तृष्णा मूर्च्छा भ्रमो दाह स्वप्ननाश शिरोरुजा।
कण्ठास्यशोषो वमथू रोमहर्षोऽरुचिस्तम ॥
पर्वभेदश्च जृम्भा च वातपित्तज्वराकृति ।

वातश्लेष्मज्वरस्य लक्षणम्।

स्तैमित्य पर्वणा भेदो निद्रा गौरवमेव च।
शिरोग्रह प्रतिश्याय कास स्वेदाप्रवर्त्तनम ॥
सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृति ।

पित्तश्लेष्मज्वरस्य लक्षणम।

लिप्ततिक्तास्यता तन्द्रा मोह कासोऽरुचिस्तृषा।
मुहुर्दाहो मुहु शीत पित्तश्लेष्मज्वराकृति ॥

सन्निपातज्वरस्य लक्षणम्।

क्षणे दाह क्षणे शीतमस्थिसन्धिशिरोरुजा।
सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने ॥
सस्वनौ सरुजौ कर्णौ कण्ठ शूकैरिवावृत ।
तन्द्रा मोह प्रलापश्च कास श्वासोऽरुचिर्भ्रम ॥
परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम।
ष्ठीवन रक्तपित्तस्य कफेनोन्मिश्रितस्य च ॥
शिरसो लोठन तृष्णा निद्रानाशो हृदि व्यथा।
स्वेदमूत्रपुरीषाणा चिराद्दर्शनमल्पश ॥
कृशत्व नातिगात्राणा प्रतत कण्ठकूजनम्।

कोठाना श्यावरक्तानां मण्डलानाञ्च दर्शनम् ॥
मूकत्व स्रोतसा पाको गुरुत्वमुदरस्य च ।
चिरात् पाकश्च दोषाणा सन्निपातज्वराकृति ॥
दोषे विबद्धे नष्टेऽग्नौ सर्व्वसम्पूर्णलक्षण ।
सन्निपातज्वरोऽसाध्य कृच्छ्रसाध्यस्ततोऽन्यथा ॥
सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि वा ।
पुनर्घोरतरो भूत्वा प्रशम याति हन्ति वा ॥
सप्तमी द्विगुणा चैव नवम्येकादशी तथा ।
एषा त्रिदोषमर्य्यादा मोक्षाय च बधाय च ॥
सन्निपातज्वरस्यान्ते कर्णमूले सुदारुण ।
शोथ सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥

सन्निपातज्वरस्य त्रयोदश विशेषा ।

एकोल्वणास्त्रयस्तेषु द्व्युल्वणाश्च तथेति षट् ।
त्र्युल्वणश्च भवेदेको विज्ञेय स तु सप्तम ॥
प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च षट् ।
सन्निपातज्वरस्यैव स्युर्विंशेषास्त्रयोदश ॥

तेषा नामानि ।

विस्फारकश्चाशुकारी कम्पनो बभ्रुसञ्ज्ञक ।
शोघ्रकारी तथा भल्लु सप्तम कूटपालक ॥
सम्मोहक पालकश्च याम्य क्रकच इत्यपि ।
तत कर्कटक प्रोक्तस्ततो वैदारिकाभिध ॥

तत्र विस्फारकस्य लक्षणम् ।

श्वास कासो भ्रमो मूर्च्छा प्रलापो मोहवेपथू ।
पार्श्वस्य वेदना जृम्भा कषायत्व मुखस्य च ॥

वातोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत्।
एष विस्फारको नाम्ना सन्निपात सुदारुण ॥

आशुकारिणो लक्षणम्।

अतिसारो भ्रमो मूर्च्छा मुखपाकस्तथैव च।
गात्रे च विन्दवो रक्ता दाहोऽतीव प्रजायते ॥
पित्तोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत्।
भिषग्भि सन्निपातोऽयमाशुकारी प्रकीर्त्तित ॥

कम्पनस्य लक्षणम्।

जडता गद्गदा वाणी रात्रौ निद्रा भवत्यपि।
प्रस्तब्धे नयने चैव मुखमाधुर्य्यमेव च ॥
कफोल्वणस्य लिङ्गानि सन्निपातस्य लक्षयेत्।
मुनिभि सन्निपातोऽयमुक्त कम्पनसञ्ज्ञक ॥

वभ्र्वाख्यस्य लक्षणम्।

वातपित्ताधिको यस्तु सन्निपात प्रकुप्यति।
तस्य ज्वरो मदस्तृष्णा मुखशोष प्रमीलक ॥
आध्मानारुचितन्द्राश्च कासश्वासभ्रमश्रमा।
मुनिभिर्वभ्रुनामाय सन्निपात उदाहृत ॥

शीघ्रकारिणो लक्षणम्।

वातश्लेष्माधिको यस्य सन्निपात प्रकुप्यति।
तस्य शीतज्वरो मूर्च्छा क्षुत्तृष्णापार्श्वनिग्रह ॥
शूलमस्थिव्यमानस्य तन्द्रा श्वासश्च जायते।
असाध्य सन्निपातोऽय शीघ्रकारीति कथ्यते।
न हि जीवत्यहोरात्रमेतेनाविष्टविग्रह ॥

भल्लुनाम्नो लक्षणम् ।

पित्तश्लेष्माधिको यस्य सन्निपात प्रकुप्यति ।
अन्तर्दाहो वहि शीत तस्य तृष्णा प्रवर्द्धते ॥
तुद्यते दक्षिणे पार्श्वे उर शीर्षगलग्रह ।
ष्ठीवति श्लेष्मपित्तञ्च कृच्छ्रात् कोठश्च जायते ॥
विड्भेदश्वासहिक्काश्च वर्द्धन्ते सप्रमीलका ।
ऋषिभिर्भल्लुनामाय सन्निपात उदाहृत ॥

कूटपालकस्य लक्षणम् ।

सर्व्वदोषोल्वणो यस्य सन्निपात प्रकुप्यति ।
त्रयाणामपि दोषाणा तस्य रूपाणि लक्षयेत् ॥
व्याधिभ्यो दारुणश्चैव वज्रशस्त्राग्निसन्निभ ।
केवलोच्छ्वास परम स्तब्धाङ्ग स्तब्धलोचन ॥
त्रिरात्रात् परमेतस्य जन्तोर्हरति जीवितम ।
तदवस्थन्तु त दृष्ट्वा मूढो व्याहरते जन ॥
धर्षितो राक्षसैर्नूनमवेलाया चरन्ति ये ।
अथवा ब्रुवते केचिद् यक्षिण्या ब्रह्मराक्षसै ॥
पिशाचैर्गुह्यकैश्चैव तथान्यैर्मस्तके हृतम् ।
कुलदेवतार्च्चनाहीन धर्षित कुलदैवतै ॥
नक्षत्रपीडामपरे गरकर्म्मेति चापरे ।
सन्निपातमिम प्राहुर्भिषज कूटपालकम् ॥

सम्मोहकस्य लक्षणम् ।

प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च,य, ।
तेन रोगास्त्रय एवोक्ता यथादोषबलाश्रया ॥
प्रलापायासमोहकम्पमूर्च्छारतिभ्रमा ।

एकपक्षाभिघातश्च तत्राप्येते विशेषत ॥
एष समोहको नाम्ना पन्निपात सुदारुण ॥

पालकस्य लक्षणम् ।

मध्यप्रवृद्धहीनैस्तु वातपित्तकफैश्च य ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रया ॥
मोहप्रलापमूर्च्छा स्युर्मन्यास्तम्भ शिरोग्रह ।
कास श्वासो भ्रमस्तन्द्रा सज्ञानाशो हृदि व्यथा ॥
खेभ्यो रक्त विसरति सरक्तास्तब्धनेत्रता ।
तत्राप्येते विशेषा स्युर्मृत्युरर्वाक् त्रिवासरात् ॥
भिषग्भि सन्निपातोऽय कथित पालकाभिध ॥

याम्यस्य लक्षणम् ।

हीनप्रवृद्धमध्यैस्तु वातपित्तकफैश्च य ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रया ॥
हृदय दह्यते चास्य यकृत्प्लीहान्त्रफुप्फुसा ।
पचन्त्यत्यर्थमूर्द्धाध पूयशोणितनिर्गम ॥
शीर्णा दन्ताश्च मृत्युश्च तत्राप्येतद विशेषत. ।
भिषग्भि सन्निपातोऽय याम्यो नाम्ना प्रकीर्त्तित ॥

क्रकचस्य लक्षणम् ।

प्रवृद्धहीनमध्यैस्तु वातपित्तकफैश्च य ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रया ॥
प्रलापायाससमोहकम्पमूर्च्छारतिभ्रमा' ।
मन्यास्तम्भेन मृत्यु स्यात् तत्राप्येतद विशेषत' ॥
भिषग्भि सन्निपातोऽय क्रकच' सम्प्रकीर्त्तित ॥

कर्कटकस्य लक्षणम् ।

मध्यहीनप्रवृद्धैस्तु वातपित्तकफैश्च य ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रया ॥
अन्तर्दाहो विशेषोऽत्र न च वक्तु स शक्यते ।
रक्तमालक्तकेनेव लक्ष्यते मुखमण्डलम् ॥
पित्तेनाकर्षित श्लेष्मा हृदयान्न प्रसिच्यते ।
इषुणेवाहत पार्श्व तुद्यते खन्यते हृदि ॥
प्रमोलकश्वासहिक्का वर्द्धन्ते तु दिने दिने ।
जिह्वा दग्धा खरस्पर्शा गल शूकैरिवावृत ॥
विसर्ग नाभिजानाति कूजेच्चापि कपोतवत् ।
अतीव श्लेष्मणा पूर्ण शुष्करक्तौष्ठतालुक ॥
तन्द्रा निद्रातियोगार्त्तो हतवाङ् निहतद्युति ।
न रति लभते नित्य विपरीतानि चेच्छति ॥
आयस्यते च बहुशो रक्त ष्ठीवति चाल्पश ।
एष कर्कटको नाम्ना सन्निपात सुदारुण ॥

वैदारिकस्य लक्षणम् ।

हीनमध्यप्रवृद्धैस्तु वातपित्तकफैश्च य ।
तेन रोगास्त एवोक्ता यथादोषबलाश्रया ॥
अल्पशूल कटीतोदो मध्ये दाहो रुजा भ्रम ।
भृश क्लम' शिरोवस्तिमन्याहृदयवागुज ॥
प्रमीलकश्वासकासहिक्का जाड्य विसञ्ज्ञता ।
प्रथमोत्पन्नमेनन्तु साधयन्ति कदाचन ॥
एतस्मिन् सन्निवृत्ते तु कर्णमूले सुदारुण ।
पिडको जायते जन्तोर्यथा कृच्छ्रेण जीवति ॥

स वैदारिकसञ्ज्ञोऽय सन्निपात सुदारुण ।
त्रिरात्रात् परमेतस्य व्यर्थमौषधकल्पनम् ॥

अथ तन्त्रान्तरोक्ताना वातोल्वणादीना सन्निपातज्वर विशेषाणा त्रयोदशाना शीताङ्गादीनि त्रयोदश नामान्तराणि लक्षणान्तराणि चोच्यन्ते। यथा—

शीताङ्गस्तिमलोद्भवज्वरगणे तन्द्री प्रलापो ततो
रक्तष्ठीवयिता च तत्र गणित सम्भुग्ननेत्रस्तथा ।
साभिन्यासकजिह्वकश्च कथित प्राक्सन्धिगोऽथान्तको
रुग्दाह सहचित्तविभ्रम इह द्वौ कर्णकण्ठग्रहौ ॥

तत्र शीताङ्गस्य लक्षणम्।

हिमशिशिरशरीर सन्निपातज्वरी य
श्वसनकसनहिक्कामोहकम्पप्रलापै ।
क्लमबहुकफवाताद्दाहवस्यङ्गपीडा-
स्वरविकृतिभिरार्त्त शीतगात्र स उक्त ॥

तन्द्रिकस्य लक्षणम्।

तन्द्रातीव ततस्तृषातिसरण श्वासोऽधिक कासरुक्
सन्तप्तातितनुर्गले श्वयथुना सार्द्धञ्च कण्डू कफ ।
सुश्यामा रसना क्लम श्रवणयोर्मान्द्यञ्च दाहस्तथा
यत्र स्यात् स हि तन्द्रिको निगदितो दोषत्रयोत्थो ज्वर ॥

प्रलापकस्य लक्षणम्।

यत्र ज्वरे निखिलदोषनितान्तरोष-
जाते प्रलापबहुला सहसोत्थिताश्च ।
कम्पव्यथापतनदाहविसञ्ज्ञता स्यु
र्नाम्ना प्रलापक इति प्रथित पृथिव्याम ॥

रक्तष्ठीविनो लक्षणम ।

निष्ठीवो रुधिरस्य रक्तसदृश कृष्णा तनौ मण्डल
लौहित्य नयने तृषारुचिवमिश्वासातिसारभ्रमा ।
आध्मानञ्च विसज्ञता च पतन हिक्काङ्गपीडा भृश
रक्तष्ठीविनि सन्निपातजनिते लिङ्ग ज्वरे जायते ॥

भुग्ननेत्रस्य लक्षणम् ।

भृश नयनवक्रता श्वसनकासतन्द्रा भृश
प्रलापमदवेपथुश्रवणहानिमोहास्तथा ।
पुरो निखिलदोषजे भवति यत्र लिङ्ग ज्वरे
पुरातनचिकित्सकै स इह भुग्ननेत्रो मत ॥

अभिन्यासस्य लक्षणम् ।

दोषास्तीव्रतरा भवन्ति बलिन सर्व्वेऽपि यत्र ज्वरे
मोहोऽतीव विचेष्टता विकलता श्वासो भृश मूकता ।
दाहश्चिक्कणमाननञ्च दहनो मन्दो बलस्य क्षय
सोऽभिन्यास इति प्रकीर्त्तित इह प्राज्ञैर्भिषग्भि पुरा ॥

जिह्वकस्य लक्षणम ।

त्रिदोषजनिते ज्वरे भवति यत्र जिह्वा भृश
वृता कठिनकण्टकैस्तदनु निर्भर मूकता ।
श्रुतिक्षतिबलक्षतिश्वसनकाससक्तास्तथा
पुरातनभिषग्वरास्तमिह जिह्वक चक्षते ॥

सन्धिगस्य लक्षणम् ।

अथातिश्वयिता सविच्छ्यथुसंयुता सन्धिषु
प्रभूतकफता मुखे विमतनिद्रता कासरुक् ।

समस्तमिति कीर्त्तितं भवति लक्ष्म यत्र ज्वरे
त्रिदोषजनिते बुधैः स हि निगद्यते सन्धिगः ॥

अन्तकस्य लक्षणम्।

यस्मिन् लक्षणमेतदस्ति सकलैर्दोषैरुदीर्णे ज्वरेऽ-
जस्रं मूर्द्धविधूनन सकासन सर्वाङ्गपीडाधिका।
हिक्काश्वाससदाहमोहसहिता देहेऽतिसन्तप्तता
वैकल्यञ्च वृथा वचांसि मुनिभिः सकीर्त्तितः सोऽन्तकः ॥

रुग्दाहस्य लक्षणम्।

दाहोऽधिको भवति यत्र तृषा च तीव्रा
श्वासप्रलापविरुचिभ्रममोहपीडा।
मन्याहनुव्यथनकण्ठरुजः श्रमश्च
रुग्दाहसञ्ज्ञ उदितस्त्रिभवो ज्वरोऽयम् ॥

चित्तविभ्रमस्य लक्षणम्।

गायति नृत्यति हसति प्रलपति विकृतं निरीक्षते मुञ्चेत्।
दाहव्यथाभयार्त्तो नरस्तु चित्तभ्रमे ज्वरे भवति ॥

कर्णिकस्य लक्षणम्।

दोषत्रयेण जनिता किल कर्णमूले
तीव्रा ज्वरे भवति तु श्वयथुर्व्यथा च।
कण्ठग्रहो वधिरता श्वसनं प्रलापः
प्रस्वेदमोहदहनानि च कर्णिकाख्ये ॥

कण्ठकुब्जकस्य लक्षणम्।

कण्ठः शूकशतावरुद्धवदतिश्वासः प्रलापोऽरुचि-
र्दाहो देहरुजा तृषापि च हनुस्तम्भः शिरोऽर्त्तिस्तथा।
मोहो वेपथुना सहेति सकलं लिङ्गं त्रिदोषज्वरे

यत्र स्यात् स हि कण्ठकुब्ज उदित प्राच्यैश्चिकित्साबुधै ॥
सन्धिगस्तेषु साध्य स्यात् तन्द्रिकश्चित्तविभ्रम ।
कर्णिको जिह्वक कण्ठकुब्ज पश्चापि कष्टदा ॥
रुग्दाहस्त्वतिकष्टेन ससाध्यस्तेषु भाषित ।
रक्तष्ठीवी भुग्ननेत्र शीतगात्र प्रलापक ।
अभिन्यासोऽन्तकश्चैते षडसाध्या प्रकीर्त्तिता ॥

अथ तन्त्रान्तरोक्ताना वातोल्वणादीना सन्निपातज्वर-विशेषाणा त्रयोदशाना कुम्भीपाकादीनि त्रयोदश नामान्तराणि लक्षणान्तराणि चोच्यन्ते ।

कुम्भीपाक' प्रोर्णुनाव प्रलापी
ह्यन्तर्दाही दन्तपातोऽन्तकश्च ।
एणीदाहश्चाथ हारिद्रसञ्ज्ञो
भेदा एते सन्निपातज्वरस्य ॥
अजघोषभूतहासौ यन्त्रापीडश्च सन्न्यास ।
सशोषी च विशेषास्तस्येवोक्तास्त्रयोदशान्यत्र ॥

तत्र कुम्भीपाकस्य लक्षणम् ।

घोणाविवरक्षरद् बहुशोणासितलोहित सान्द्रम् ।
विलुठन्मस्तकमभित कुम्भीपाकेन पीडित विद्यात् ॥

प्रोर्णुनावस्य लक्षणम् ।

उत्क्षिप्य य स्वमङ्ग क्षिपत्यधस्ताश्रितान्तमुच्छ्वसिति ।
त प्रोर्णुनावजुष्ट विषिनकष्ट विजानीयात् ॥

प्रलापिनो लक्षणम् ।

स्वेदभ्रमाङ्गभेदा कम्पो दवथर्वमिर्व्यथा कण्ठे ।
गात्रञ्च गुर्वतीव प्रलापिजुष्टस्य जायते लिङ्गम् ॥

अन्तर्दाहस्य लक्षणम् ।

अन्तर्दाह शैत्य वहि श्वयथररतिस्तथा श्वास ।
अङ्गमपि दग्धकल्प सोऽन्तर्दाहादिति कथित ॥

दण्डपातस्य लक्षणम ।

नक्त दिवा न निद्रामुपैति गृह्णाति भूढधोर्नभस ।
उत्थाय दण्डपातो भ्रमातुर सर्व्वतो भ्रमति ॥

अन्तकास्य लक्षणम् ।

सपूर्य्यते शरीर ग्रन्थिभिरभितस्तथोदर मरुता ।
श्वासातुरस्य सतत विचेतनस्यान्तकार्त्तस्य ॥

एणीदाहस्य लक्षणम् ।

परिधावतीत गात्रे रुकपात्रे भुजङ्गपतङ्गहरिणगणा ।
वेपथुमत सदाहस्त्वेणीदाहज्वरार्त्तस्य ॥

हारिद्रकस्य लक्षणम् ।

यस्यातिपीतमङ्ग नयने सुतरा मलस्ततोऽप्यधिकम् ।
दाहोऽतिशीतता वहिरस्य स हारिद्रको ज्ञेय ॥

अजघोषस्य लक्षणम् ।

छगलकसमानगन्ध स्कन्धरुजावान् निरुद्धगलरन्ध्र: ।
अजघोषसन्निपातात्ताम्राभाच्च पुमान् भवति ॥

भूतहासस्य लक्षणम् ।

शब्दादीनधिगच्छति न स्वान् विषयान् यदेन्द्रियग्रामे ।
हसति प्रलपति परुष स ज्ञेयो भूतहासार्त्त ॥

यन्त्रापीडस्य लक्षणम् ।

येन मुहुर्ज्वरवेगाद् यन्त्रेणेवावपीड्यते गात्रम् ।
रक्त पीतञ्च वमेद् यन्त्रापीड स विज्ञेय ॥

सन्न्यासस्य लक्षणम् ।

अतिसरति वमति कूजति गात्राण्यभितश्चिर नर क्षिपति ।
सन्न्याससन्निपाते प्रलपत्युग्राक्षिमण्डलो भवति ॥

सशोषिणो लक्षणम् ।

मेचकवपुरतिमेचकलोचनयुगलो मलोत्सर्गात् ।
सशोषिणि सितपिडकामण्डलयुक्तो ज्वरे नरो भवति ॥

अथागन्तुज्वरस्य निदानम् ।

अभिघाताभिचाराभ्यामभिषङ्गाभिशापत ।
आगन्तुर्जायते दोषैर्यथास्व त विभावयेत् ॥

विषादिजातागन्तुज्वरलक्षणम् ।

श्यावास्यता विषकृते तथातीसार एव च ।
भक्तारुचि पिपासा च तोदश्च सह मूर्च्छया ॥
ओषधीगन्धजे मूर्च्छा शिरोरुग् वमथुस्तथा ।
कामजे चित्तविभ्रंशस्तन्द्रालस्यमभोजनम् ॥
भयात् प्रलाप शोकाच्च भवेत् कोपाच्च वेपथु ।
अभिचाराभिशापाभ्या मोहस्तृष्णा च जायते ॥
भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् ।
कामशोकभयाद् वायु क्रोधात् पित्त त्रयो मला ।
भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणा ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
ज्वराधिकारो द्वितीयोऽध्याय ।

## तृतीयोऽध्याय ।

— — ० ——

### अथ विषमज्वराधिकार ।

#### तत्र विषमज्वरस्य सम्प्राप्ति ।

दोषोऽल्पोऽहितसम्भूतो ज्वरोत्सृष्टस्य वा पुन ।
धातुमन्यतम प्राप्य करोति विषमज्वरम् ॥

#### विषमज्वरस्य लक्षणम ।

य स्यादनियतात् कालात् शीतोष्णाभ्या तथैव च ।
वेगतश्चापि विषमो ज्वर स विषम स्मृत ॥

तथाच सुश्रुत —
स चापि विषमो देह न कदाचित् प्रमुञ्चति ।
ग्लानिगौरवकार्श्येभ्य स यस्मान्न प्रमुच्यते ॥
वेगे तु समतिक्रान्ते गतोऽयमिति लक्ष्यते ।
धात्वन्तरेषु लीनत्वात् सौक्ष्म्यान्नैवोपलक्ष्यते ॥

#### विषमज्वरस्य भेदा ।

सन्तत सततोऽन्येद्युस्तृतीयकचतुर्थकौ ।
पञ्च स्युर्विषमा केचिद् ब्रुवन्ति चतुर परान् ॥

#### सन्ततादिनिदानम् ।

सन्तत रसधातुस्थ सतत रक्तधातुग ।
दोष क्रुद्धो ज्वर पुसा सोऽन्येद्यु पिशिताश्रित ॥
मेदोगतस्ततीयेऽह्नि चास्थिमज्जगत पुन ।
कुर्य्याच्चातुर्थक घोरमन्तक रोगसङ्करम ॥

सन्ततादीना लक्षणानि ।

सप्ताह वा दशाह वा द्वादशाहमथापि वा ।
सन्तत्या योऽविसर्गो स्यात् सन्तत स निगद्यते ॥
अहोरात्रे सततको द्वौ कालावनुवर्त्तते ।
जीवेद् भाग्यबलात् कश्चिदेतेनाविष्टविग्रह ॥
अन्येद्युष्कस्त्वहोरात्र एककाल प्रवर्त्तते ।
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थक ॥
केचिद्भूताभिषङ्गोत्थ ब्रुवते विषमज्वरम् ।
प्रायश सन्निपातोत्था विज्ञेया विषमज्वरा ॥

तृतीयकस्य त्रैविध्यम् ।

कफपित्तात्त्रिकग्राही पृष्ठाद्वातकफात्मक ।
वातपित्ताच्छिरोग्राही त्रिविध स्यात् तृतीयक ॥

चातुर्थकस्य विशिष्टा विवृति ।

चातुर्थको दर्शयति प्रभाव द्विविध ज्वर ।
जङ्घाभ्या श्लैष्मिक पूर्व्व शिरस्तोऽनिलसम्भव ॥
विषमज्वर एवान्यश्चातुर्थकविपर्य्यय ।
स मध्ये ज्वरयत्यह्नो आदावन्ते च मुञ्चति ॥
त्वक्स्थौ श्लेष्मानिलौ शीतमादौ जनयतो ज्वरे ।
तयो प्रशान्तयो पित्तमन्ते दाह करोति च ॥
करोत्यादौ तथा पित्त त्वक्स्थ दाहमतीव च ।
तस्मिन् प्रशान्ते त्वितरौ कुरुत शीतमन्तत ॥
द्वावेतौ दाहशीतादी ज्वरौ ससर्गजौ स्मृतौ ।
दाहपूर्व्वस्तयो कष्ट सुखसाध्यतमोऽपर ॥
काये दुष्ट यदा पित्त श्लेषा चान्ते व्यवस्थित ।

तनोष्णत्व शरीरस्य शीतत्व हस्तपादयो ॥
काये श्लेष्मा यदा दुष्ट पित्तञ्चान्ते व्यवस्थितम्।
शीतत्व तेन गात्राणामुष्णत्व हस्तपादयो ॥
समौ वातकफौ यस्य क्षीणपित्तस्य देहिन ।
रात्रौ प्रायो ज्वरस्तस्य दिवा हीनकफस्य तु ॥

वातवलासकस्य लक्षणम।

नित्य मन्दज्वरो रूक्ष शूनकस्तेन सीदति।
स्तब्धाङ्ग श्लेष्मभूयिष्ठो नरा वातवलासको ॥

प्रलेपकस्य लक्षणम्।

प्रलिम्पन्निव गात्राणि घर्मेण गौरवेण वा।
मन्दज्वरविलेपी च सशीत स्यात् प्रलेपक ॥

अर्द्धाङ्गज्वरस्य लक्षणम।

विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते।
तेनार्द्ध शीतल देहे चार्द्धञ्चोष्णा प्रजायते ॥

रसगतज्वरस्य लक्षणम्।

गुरुता हृदयोत्क्लेश सदन छर्द्यरोचकौ।
रसस्थे तु ज्वरे लिङ्ग दैन्य चास्योपजायते ॥

रक्तगतस्य लक्षणम्।

रक्तनिष्ठीवन दाहो मोहश्छर्दनविभ्रमौ।
प्रलाप पिडका तृष्णा रक्तप्राप्ते ज्वरे नृणाम ॥

मासगतस्य लक्षणम।

पिण्डिकोद्वेष्टन तृष्णा सृष्टमूत्रपुरीषता।
उष्मान्तर्दाहविक्षेपौ ग्लानि स्यान्मासगे ज्वरे ॥

मेदोगतस्य लक्षणम् ।

भृश स्वेदस्तृषा मूर्च्छा प्रलापश्छर्दिरेव च ।
दौर्गन्ध्यारोचकौ ग्लानिर्मेद स्थे चासहिष्णुता ॥

अस्थिगतस्य लक्षणम ।

भेदोऽस्थ्नां कूजन श्वासो विरेकश्छर्दिरेव च ।
विक्षेपणञ्च गात्राणामेतदस्थिगते ज्वरे ॥

मज्जगतस्य लक्षणम् ।

तम प्रवेशन हिक्का कास शैत्य वमिस्तथा ।
अन्तर्दाहो महाश्वासो मर्म्मभेदश्च मज्जगे ॥

शुक्रगतस्य लक्षणम् ।

मरण प्राप्नुयात् तत्र शुक्रस्थानगते ज्वरे ।
शेफस स्तब्धता मोक्ष शुक्रस्य तु विशेषत ॥

प्राकृतविकृतयोर्लक्षणम् ।

वर्षाशरद्वसन्तेषु वाताद्ये प्राकृत क्रमात् ।
वैकृतोऽन्य स दुसाध्य प्राकृतश्चानिलोद्भव ॥
वर्षासु मारुतो दुष्ट पित्तश्लेष्मान्वितो ज्वरम् ।
कुर्य्यात् पित्तञ्च शरदि तस्य चानुबल कफ ॥
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद् भयम् ।
कफो वसन्ते तमपि वातपित्त भवेदनु ॥

अन्तर्वेगवहिर्वेगयोर्ज्वरयोर्लक्षणम् ।

अन्तर्दाहोऽधिकस्तृष्णा प्रलाप श्वसन भ्रम ।
सन्ध्यस्थिशूलमस्वेदो दोषवर्च्चोविनिग्रह ॥
अन्तर्वेगस्य लिङ्गानि ज्वरस्यैतानि लक्षयेत् ।

सन्तापो ह्यधिको वाह्यस्तृष्णादीनाञ्च मार्दवम्॥
वहिर्वेगस्य लिङ्गानि सुखसाध्यत्वमेव च॥

आमज्वरस्य लक्षणम्।

लालाप्रसेको हृल्लासहृदयाशुद्ध्यरोचकाः।
तन्द्रालस्याविपाकास्यवैरस्य गुरुगात्रता॥
क्षुन्नाशो बहुमूत्रत्व स्तब्धता बलवान् ज्वरः।
आमज्वरस्य लिङ्गानि न दद्यात्तत्र भेषजम्॥
भेषजं ह्यामदोषस्य भूयो ज्वलयति ज्वरम्॥

पच्यमानस्य ज्वरस्य लक्षणम्।

ज्वरवेगोऽधिकस्तृष्णा प्रलापः श्वसनं भ्रमः।
मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम॥

पक्वस्य लक्षणम्।

क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्दवम्।
दोषप्रवृत्तिरष्टाहो निरामज्वरलक्षणम्॥
आसप्तरात्रं तरुणं ज्वरमाहुर्मनीषिणः।
मध्यं द्वादशरात्रन्तु जीर्णज्वरमतः परम्॥
बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः॥

अरिष्टलक्षणानि।

हेतुभिर्बहुभिर्जातो बलिभिर्बहुलक्षणः।
ज्वरः प्राणान्तकृद् यश्च शीघ्रमिन्द्रियनाशनः॥
ज्वरः क्षीणस्य शूनस्य गम्भीरो दैर्घरात्रिकः॥
असाध्यो बलवान् यश्च केशसीमन्तकृज्ज्वरः।
गम्भीरस्तु ज्वरो ज्ञेयो ह्यन्तर्दाहेन तृष्णया।
आनद्धत्वेन दोषाणां श्वासकासोद्गमेन च॥

आरम्भाद् विषमो यस्तु यश्च वा दैर्घ्यरात्रिक ।
क्षीणस्य चातिरूक्षस्य गम्भीरो यस्य हन्ति तम् ॥
विसञ्ज्ञस्ताम्यते यस्तु शेते निपतितोऽपि वा ।
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नर ॥
यो हृष्टरोमा रक्ताक्षो हृदि सङ्घातशूलवान् ।
वक्त्रेण चैवोच्छ्वसिति त ज्वरो हन्ति मानवम् ॥
हिक्काश्वासतृषायुक्त मूढ विभ्रान्तलोचनम् ।
सन्ततोच्छ्वासिन क्षीण नर क्षपयति ज्वर ॥
हतप्रभेन्द्रिय क्षीणमरोचकनिपीडितम् ।
गम्भीरतीक्ष्णवेगार्त्त ज्वरित परिवर्ज्जयेत् ॥

ज्वरस्योपद्रवा ।

श्वासो मूर्च्छारुचिश्छर्दिस्तृष्णातीसारविड्ग्रहा ।
हिक्काकासाङ्गदाहाश्च ज्वरस्योपद्रवा दश ॥

ज्वरमुक्ते पूर्व्वरूपम् ।

दाह स्वेदो भ्रमस्तृष्णा कम्पविड्भेदसञ्ज्ञिता ।
कूजन गात्रवैगन्ध्यमाकृतिर्ज्वरमोक्षणे ॥
त्रिदोषजे ज्वरे ह्येतदन्त्यवेगे च धातुगे ।
लक्षण मोक्षकाले स्यादन्यस्मिन् स्वेददर्शनम् ॥

ज्वरमुक्तस्य लक्षणम् ।

स्वेदो लघुत्व शिरस कण्डू पाको मुखस्य च ।
क्षवथुश्चान्नलिप्सा च ज्वरमुक्तस्य लक्षणम् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने ज्वराधिकार-
स्तृतीयोऽध्याय ।

# चतुर्थोऽध्याय ।

—— ० ——

अथ सामान्यतो ज्वरस्य चिकित्सा ।

अशाश यत्र दोषाणा विविक्ता नैव शक्नुयात् ।
क्रिया साधारणी तत्र विदधीत चिकित्सक ॥

सामान्यतो ज्वरी पूर्व्व निर्वाते निलये वसेत ।
निर्वातमायुषो वृद्धिमारोग्य कुरुते यत ॥
व्यजनस्यानिलस्तृष्णास्वेदमूर्च्छाश्रमापह ।
नवज्वरी भवेद यत्नाद गुरुष्णवसनावृत ॥
यथर्त्तुपक्कपानीय पिबेन किञ्चिन्निवारयन् ।
तृष्णा गरीयसो घोरा सद्य प्राणविनाशिनी ॥
तस्माद्देय तृषार्त्ताय पानीय प्राणधारणम् ॥

परिषेकान् प्रदेहाश्च स्नेहान् सशोधनानि च ।
दिवास्वप्न व्यवायञ्च व्यायाम शिशिर जलम ॥
क्रोधप्रवातभोज्यानि वर्ज्जयेत्तरुणज्वरी ।
शोथ छर्द्दि मद मूर्च्छा भ्रम तृष्णामरोचकम् ॥
प्राप्नोत्युपद्रवानेतान् परिषेकादिसेवनात् ।
व्यायामाज्ज्वरसहृद्धिर्व्यवायात् स्तम्भमूर्च्छनम् ॥
मृतिश्च स्नेहपानाद्यैर्मूर्च्छा छर्द्दिर्मदोऽरुचि ।
गुर्व्वन्नभोजनात स्वप्नाद विष्टम्भो दोषकोपनम ।
अग्निसाद खरत्वञ्च स्रोतसाञ्च प्रवर्त्तनम् ॥

आमाशयस्थो हत्वाग्नि सामो मार्गान् पिधापयन् ।
विदधाति ज्वर दोषस्तस्माल्लङ्घनमाचरेत् ॥

दोषेऽल्पे लङ्घन पथ्य मध्ये लङ्घनपाचनम् ।
प्रभूते शोधन तच्च मूलादुन्मूलयेन्मलान् ॥
बलाविरोधिना चैन लङ्घनेनोपपादयेत् ।
बलाधिष्ठानमारोग्य यदर्थोऽय क्रियाक्रम ॥
तत्तु मारुततृष्णाक्षुन्मुखशोषभ्रमान्विते ।
न कार्य्य गुर्विणीबालवृद्धदुर्ब्बलभीरुभि ॥
न क्षयाध्वश्रमक्रोधकामशोकचिरज्वरे ।
कफपित्ते द्रवे धातू सहेते लङ्घन महत् ॥
आमक्षयादूर्द्धमपि वायुर्न सहते क्षणम् ॥
कफोत्क्लेश सहृल्लास ष्ठीवनञ्च मुहुर्मुहु ।
कण्ठास्यहृदयाशुद्धिस्तन्द्रा स्याद्धीनलङ्घने ॥
पर्व्वभेदोऽङ्गमर्द्दश्च कास शोषो मुखस्य च ।
क्षुत्प्रणाशोऽरुचिस्तृष्णा दौर्ब्बल्य श्रोत्रनेत्रयो ॥
मनस सम्भ्रमोऽभीक्ष्णमूर्द्धवातस्तमो हृदि ।
देहाग्निबलहानिश्च लङ्घनेऽतिकृते भवेत् ॥
वातमूत्रपुरीषाणा विसर्गे गात्रलाघवे ।
हृदयोद्गारकण्ठास्यशुद्धौ तन्द्राक्लमे गते ॥
स्वेदे जाते रुचौ चापि क्षुत्पिपासासहोदये ।
कृत लङ्घनमादेश्य निर्व्यथे चान्तरात्मनि ॥
सद्योभुक्तस्य वा जाते ज्वरे सन्तर्पणोत्थिते ।
वमन वमनार्हस्य शस्तमित्याह वाग्भट ॥
अनवस्थितदोषाणा वमन तरुणज्वरे ।
हृद्रोग श्वासमानाह मोहञ्च कुरुते भृशम् ॥
छर्द्दिमूर्च्छामदश्वासभ्रमतृड्विषमज्वरान् ।

सशोधनस्य पानेन प्राप्नोति तरुणज्वरी ॥
निषिद्धमपि सशोधनमवस्थाविशेषे देयम्।

आरग्वधादि क्वाथ ।

आरग्वधग्रन्थिकमुस्ततिक्ता-
हरीतकोभि क्वथित कषाय ।
सामे सशूले कफवातयुक्ते
ज्वरे हितो दीपनपाचनश्च ॥

अनन्तादि ।

अनन्ता बालक मुस्त नागर कटुरोहिणी।
पिष्ट्वा सुखाम्बुना कल्क पाययेदक्षसमितम् ॥
कल्क स्वल्पेन कालेन हन्यात् सर्वज्वरामयान्।
विदध्यात् कोष्ठसशुद्धि दीपयेच्च हुताशनम् ॥

षडङ्गपानीयम्।

मुस्तपर्पटकोशीरचन्दनोदीच्यनागरे ।
शृतशीत जल देय पिपासाज्वरशान्तये ॥
कर्षमात्र तथा द्रव्य साधयेत् प्रास्थिकेऽम्भसि।
अर्द्धशृत प्रयोक्तव्य पाने पेयादिसविधौ ॥
न कषाय प्रशसन्ति नराणा तरुणज्वरे।
कषायेणाकुलीभूता दोषा जेतु सुदुस्तरा ॥
य कषाय प्रयुञ्जीत नराणा तरुणज्वरे।
प्रसुप्त कृष्णसर्प स कराग्रेण परामृशेत् ॥
सप्तरात्रात् पर केचिन्मन्यन्ते देयमौषधम्।
निरामस्तु तत प्रोक्तो ज्वर प्रायोऽष्टमेऽहनि ॥
अचिरज्वरितस्यापि भेषज्य दोषपाकत ॥

दोषपाकस्य लक्षणम् ।

मृदौ ज्वरे लघौ देहे प्रचलेषु मलेषु च ।
पक्वं दोषं विजानीयाज्ज्वरे देयं तदौषधम् ॥

एवं सति कषायदाने सप्तमाष्टमयोर्दिवसयोर्विकल्प । तत्रापि वयोबलाग्निदोषदेशकालोचितं कुर्य्यात् । भेषजमन्नञ्च दोषपाकं दृष्ट्वा दद्यादित्याह सुश्रुत ।

पैत्तिके च ज्वरे देयमल्पकालसमुत्थिते ।
अचिरज्ज्वरितस्यापि भेषज्यं दोषपाकत ॥ इति ।

अस्यायमर्थ । अल्पकालसमुत्थिते पैत्तिके ज्वरे दोषपाकं दृष्ट्वा भैषज्यं देयं न तु तत्र दशरात्रापेक्षा । तथा अचिरज्वरितस्यापि पैत्तिकेतरनवज्वरयुक्तस्यापि दोषपाकं दृष्ट्वा भैषज्यं देयमित्यर्थ ।

त्रिरात्रात् परमेतस्य व्यर्थमौषधकल्पनम् ॥

न दोषाणां न रोगाणां न पुंसाञ्च परीक्षणम् ।
न देशस्य न कालस्य कार्य्यं रसचिकित्सिते ॥

नागरादि ।

नागरं देवकाष्ठञ्च धान्यकं बृहतीद्वयम् ।
दद्यात् पाचनकं पूर्व्वं ज्वरितेभ्यो ज्वरापहम् ॥

धान्यपटोलम ।

दीपनं कफविच्छेदि वातपित्तानुलोमनम् ।
ज्वरघ्नं पाचनं भेदि शृतं धान्यपटोलयो ॥

अथ सामान्यज्वरे रसा ।

ज्वराङ्कुशो रस ।

शुद्धं सूतं विषं गन्धं धूर्त्तबीजं त्रिभि समम् ।

चतुर्णां द्विगुणं व्योषं चूर्णं गुञ्जाद्वयोन्मितम् ॥
आर्द्रकस्य रसं किंवा जम्बीरस्य रसैर्युतं ।
एष ज्वराङ्कुशो नाम्ना सर्व्वज्वरविनाशनः ॥

हुताशनो रसः ।

नागरं कर्षमात्रञ्च टङ्कनं कर्षकद्वयम् ।
मरिचं माड्कर्षं स्यात् तावद्दग्धवराटकम् ॥
विषं कर्षचतुर्थांशं सर्व्वमेकत्र योजयेत् ।
रसो हुताशनो नाम्ना खाद्यो गुञ्जामितो ज्वरे ॥

अत्र मृत्युञ्जय, हिङ्गुलेश्वर, स्वच्छन्दभैरवादयोऽपि रसाः प्रशस्तानुपानेन सह सेव्याः । एवं ज्वरत्यागात् परं त्रिलोचनादिरसाः शर्करान्विता चान्येनानुपानेन वा सह सेव्याः ।

अथ ज्वरिणोऽन्नदानकालः ।

क्षुत् सम्भवति पक्केषु रसदोषमलेषु च ।
काले वा यदि वाकाले सोऽन्नकाल उदाहृतः ॥
याममध्ये न भोक्तव्यं यामयुग्मं न लङ्घयेत् ।
याममध्ये रसोत्पत्तिर्यामयुग्माद् बलक्षयः ॥
शेषक्षये निवृत्तदोषा बलवाननलस्तदा ।
वेगापायेऽन्यथा तद्धि ज्वरवेगाभिवर्द्धनम् ॥
ज्वरे प्रमोहो भवति स्वल्पैरपि विचेष्टितैः ।
निषण्णं भोजयेत् तस्मान्मूत्रोच्चारौ च कारयेत् ॥
ज्वरितो हितमश्नीयाद् यद्यप्यस्यारुचिर्भवेत् ।
अन्नकाले ह्यभुञ्जानः क्षीयते म्रियतेऽपि वा ॥
गुर्वभिष्यन्द्यकाले च ज्वरी नाद्यात् कथञ्चन ।
न तु तस्याहितं भुक्तमायुषे वा सुखाय च ॥

सातत्यात् स्वाद्वभावाद् वा पथ्य द्वेष्यत्वमागतम् ।
कल्पना विधिभिस्तैस्तै प्रियत्व गमयेत् पुन ॥
रक्तशाल्यादय शस्ता पुराणा षष्टिक सह ।
यवाग्वोदनलाजार्थे ज्वरिताना ज्वरापहा ॥
मुद्गान् मसूराश्चणकान् कुलत्थान् समकुष्ठकान् ।
यूषार्थे यूषसात्म्याना ज्वरिताना प्रदापयेत् ॥
पटोलपत्र वार्त्ताकु कुलक कारवेल्लकम् ।
कर्कोटक पर्पटक गोजिह्वा बालमूलकम् ॥
पत्र गुडूच्या शाकार्थे ज्वरिताना ज्वरापहम् ।
मासार्थमेणलावादीन् युक्त्या दद्याद् विचक्षण ॥
कुक्कुटाश्च मयूराश्च तित्तिरिक्रौञ्चवर्त्तकान् ।
गुरूष्णत्वान्न शसन्ति ज्वरे केचिच्चिकित्सका ॥
लङ्घनेनानिलबल ज्वरे यद्यधिक भवेत् ।
भिषङ्मात्राविकल्पज्ञो दद्यात् तानपि कालवित् ॥
द्राक्षादाडिमखर्ज्जूरपियालै सपरूषकै ।
तर्पणार्थस्य दातव्य तर्पण ज्वरनाशनम् ।
कृशोऽल्पदोषो य क्षीणकफो जीर्णज्वरान्वित ।
विबन्धास्पष्टदोषश्च रूक्ष पित्तानिलज्वरी ॥
पिपासार्त्त सदाहश्च पयसा स सुखी भवेत ।
जीर्णज्वरे कफे क्षीणे क्षीर स्यादमृतोपमम् ।
तदेव तरुणे पीत विषवद्धन्ति मानवम ॥
व्यायामञ्च व्यवायञ्च स्नान चङ्क्रमण तथा ।
ज्वरमुक्तो न सेवेत यावन्न बलवान् भवेत् ॥
जन्तोर्ज्वरविमुक्तस्य स्नान कुर्य्यात् पुनर्ज्वरम ।

तस्माज्ज्वरवियुक्तोऽपि स्नान विषमिव त्यजेत् ॥
बलवर्णाग्निवपुषा यावन्न प्रकृतिर्भवेत् ।
तावज्ज्वरेण मुक्तोऽपि वर्ज्जनीयानि वर्ज्जयेत् ॥

अथ वातज्वरचिकित्सा ।

पञ्चमूलीक्वाथ ।

पञ्चमूलीकषायन्तु पाचन वातिके ज्वरे ।

किरातादि ।

किराताब्दामृतोदीच्यवृहतीद्वयगोक्षुरैः ।
त्रिपर्णीकलसीविल्वै क्वाथो वातज्वरापहः ॥

गुडूच्यादि ।

गुडूचीपिप्पलीमूलनागरैः पाचन स्मृतम ।
वातज्वरे तथा पेय कालिङ्ग सप्तमेऽहनि ॥

विश्वादि ।

विश्वामृताग्रन्थिकसिद्धतोय
मरुज्ज्वर स्यात् पिबत कुतोऽयम् ।
क्वाथोऽत्र कुस्तुम्बुरुदेवदारु-
क्षुद्रौषधैः पाचनमत्र चारु ॥

पञ्चमूल्यादि ।

पञ्चमूलीबलारास्नाकुलत्थ सह पौष्करैः ।
क्वाथो हन्याच्छिर कम्प पर्व्वभेद मरुज्ज्वरम् ॥

दशमूल्यादि ।

दशमूली कणा रास्ना कणामूल किरातक ।
शुण्ठी मुस्ता बला कुष्ठ बालद्राक्षा शताह्विका ॥

यासो गुडूचिका चैषा क्वाथो हन्ति सुयोजित ।
उपद्रवयुत घोर प्रभञ्जनकृत ज्वरम् ॥

पित्तज्वरचिकित्सा ।

पटोलयवधनि क्वाथो मधुना मधुरीकृत ।
तीव्रपित्तज्वराम्दीं पानात् तृड्दाहनाशन ॥
एक पर्पटक श्रेष्ठ पित्तज्वरविनाशन ।
किं पुनर्यदि युज्येत चन्दनोदीच्यनागरै ॥
व्युषित धन्याकजल प्रात पीत सशर्कर पसाम् ।
अन्तर्दाह शमयत्यचिराद्दूरप्ररूढमपि ॥

कफज्वरचिकित्सा ।

निम्बविश्वामृतादारुशटीभूनिम्बपौष्करम् ।
पिप्पल्यौ वृहतो चेति क्वाथो हन्ति कफज्वरम् ॥
सिन्धुवारदलक्वाथ सोषण कफजे ज्वरे ।
जङ्घायाश्च बले चोणे कर्णे वा पिहिते भवेत् ॥
कट्फल पौष्कर शृङ्गी कृष्णा च मधुना सह ।
श्वासकासज्वरहर श्रेष्ठो लेह कफान्तकृत् ॥
उर्द्ध्वजत्रुजरोगघ्नो साय स्यादवलेहिका ।
अधोरोगहरो या तु सा पूर्व्वं भोजनान्मता ॥
चोद्रोपकुल्या सयोग श्वासकासज्वरापह ।
प्लीहान हन्ति हिक्काञ्च बालानाञ्चापि शस्यते ॥

वातपित्तज्वरचिकित्सा ।

विश्वामृताब्दभूनिम्बै पञ्चमूलोसमन्विते ।
कृत कषायो हन्त्याशु वातपित्तोद्भव ज्वरम ॥
गुडूची निम्ब धन्याक पद्मक रक्तचन्दनम् ।

एष सर्व्वान् ज्वरान् हन्ति गुडूच्यादिस्तु दीपन ।
हृल्लासारोचकच्छर्द्दिपिपासादाहनाशन ॥
गुडूची चन्दन पद्मनागरेन्द्रयवासकम् ।
अभयारग्वधोदीच्यपाठा धान्याब्दरोहिणी ॥
कषाय पाययेदेत पिप्पलीचूर्णसयुतम् ।
कासश्वासज्वरान् हन्ति पिपासादाहनाशनम् ।
विण्मूत्रानिलविष्टम्भे त्रिदोषप्रभवेऽपि च ॥

अत्र घनचन्दनादिमुस्तादिक्काथौ सव्वदा प्रयुज्येते ।

वातश्लेष्मज्वरचिकित्सा ।

कफवातज्वरे स्वेदान् कारयेद्रूक्षनिर्म्मितान् ।
स्रोतसा मार्दव कृत्वा नीत्वा पावकमाशयम् ।
हत्वा वातकफस्तम्भ स्वेदो ज्वरमपोहति ॥

क्षुद्रामृतानागरपुष्कराह्वयै
कृत कषाय कफमारुतोत्तरे ।
सश्वासकासारुचिपार्श्वरुग्ज्वरे
ज्वरे त्रिदोषप्रभवेऽपि शस्यते ॥

अत्र पञ्चकोलदशमूलारग्वधादय क्वाथा प्रयोज्या ।

पित्तश्लेष्मज्वरचिकित्सा ।

अमृतेन्द्रयवारिष्टपटोल कटुरोहिणी ।
नागर चन्दन मुस्त पिप्पलीचूर्णसयुतम् ॥
अमृताष्टक इत्येष पित्तश्लेष्मज्वरापह ।
हृल्लासारोचकच्छर्द्दिपिपासादाहनाशन ॥
कण्टकार्य्यमृता भार्गी नागरेन्द्रयवासकम् ।
भूनिम्बश्चन्दन मुस्त पटोलकटुरोहिणी ॥

कषाय पाययेदेत पित्तश्लेष्मज्वरापहम् ।
दाहतृष्णारुचिच्छर्द्दिकासहृत् पार्श्वशूलनुत् ॥

सन्निपातज्वरचिकित्सा ।

लङ्घन वालुकास्वेदो नस्य निष्ठीवन तथा ।
अवलेहोऽञ्जनञ्चैव प्राक् प्रयोज्य त्रिदोषजे ॥
सन्निपातज्वरे पूर्व्वं कुर्य्यादामकफापहम् ।
पश्चात् श्लेष्मणि सच्चीणे शमयेत् पित्तमारुतौ ॥

लङ्घनम् ।

त्रिरात्र पञ्चरात्र वा दशरात्रमथापि वा ।
लङ्घन सन्निपातेषु कुर्य्यादारोग्यदर्शनात् ॥
दोषाणामेव सा शक्तिर्लङ्घने या सहिष्णुता ।
न हि दोषक्षये कश्चित् सहते लङ्घनादिकम् ॥

स्वेद ।

न स्वेदव्यतिरेकेण सन्निपात प्रशाम्यति ।
तस्मान्मुहुर्मुहु कार्य्य स्वेदन सन्निपातिनाम् ॥
सन्निपाते जलमयो नराणा विग्रहो भवेत् ।
विना वह्न्युपचारेण कस्त शोषयितु क्षम ॥
प्रयोगा बहव सन्ति सविषा निर्विषा अपि ।
वह्न्यस्त्राण विना प्रायो न वीर्य्य दर्शयन्ति ते ॥
प्रतिक्रियाविधावेव यस्य सञ्ज्ञा न जायते ।
पादतले ललाटे वा दहेल्लौहशलाकया ॥

नस्यम् ।

सैन्धव श्वेतमरिच सर्षप कुष्ठमेव च ।
वस्तमूत्रेण सपिष्य नस्य तन्द्राविनाशनम् ॥

मधूकसारसिन्धूत्थवचोषणकणा समा ।
श्लक्ष्णा पिष्ट्वाम्भसा नस्यं कुर्य्यात् सञ्ज्ञाप्रबोधनम् ॥
षड्ग्रन्थिसैन्धवकणा समधूकसारा
पिष्टा समेन मरिचेन जलैः कदुष्णैः ।
नस्यं निवारयति शोघ्रमचेतनत्वं
तन्द्राप्रलापसहितं शिरसो गुरुत्वम् ॥
लशुनं मरिचं पिष्टं नस्यं स्यात् श्लेष्मनाशनम् ।
सितिकुक्कुटिकाण्डजजलं पानान्नस्यादभ्यञ्जनाच्च ॥
दुःसाधनसन्निपातः प्रबलोऽप्याश्वेव शममेति ॥

निष्ठीवनम्।

आर्द्रकस्वरसोपेतं सैन्धवं सकटुत्रयम् ।
आकण्ठं धारयेदास्ये निष्ठोवेच्च पुनः पुनः ॥
तेनास्यहृदयाच्छ्लेष्मा मन्यापार्श्वशिरोगलात् ।
लीनोऽप्याकृष्यते शुष्को लाघवञ्चास्य जायते ॥
पर्व्वभेदो ज्वरो मूर्च्छा निद्रा कासगलामयाः ।
मुखाक्षिगौरवं जाड्यमुत्क्लेदश्चोपशाम्यति ॥
एकद्वित्रिश्चतुः कुर्य्याद् दृष्ट्वा दोषबलाबलम् ।
एतद्धि परमं प्राहुर्भेषजं सन्निपातिनाम् ॥

अवलेहः ।

कट्फलं पौष्करं शृङ्गी व्योषं यासश्च कारवी ।
श्लक्ष्णचूर्णीकृतं चैतन्मधुना सह लेहयेत् ॥
एषावलेहिका हन्ति सन्निपातं सुदारुणम् ।
हिक्कां श्वासञ्च कासञ्च कण्ठरोधं नियच्छति ॥

अङ्गग्रहप्रशमने उष्णे स्वेदादिकर्म्मणि ।
विरोध्युष्णे मधु त्यक्त्वा कार्य्यमार्द्रकजे रसे ॥

अञ्जनम् ।

शिरोषवीजगोमूत्रकृष्णामरिचसैन्धवै ।
अञ्जन स्यात् प्रबोधाय सरसोनशिलावचै ॥
असुराह्नपतङ्गस्य विट्चूर्ण मधुसयुतम् ।
अञ्जनाद् बोधयेन्मुग्ध तद्वित सन्निपातिनाम् ॥

दशमूलम् ।

विल्वश्योनाकगाम्भारीपाटलागणिकारिका ।
दीपन कफवातघ्न पञ्चमूलमिद महत् ॥
शालपर्णीपृश्निपर्णीवृहतीद्वयगोक्षुरम् ।
वातपित्तापह वृष्य कनीय पञ्चमूलकम ॥
उभय दशमूल हि सन्निपातज्वरापहम् ।
कासे श्वासे च तृष्णाया पार्श्वशूले च शस्यते ।
पिप्पलीचूर्णसयुक्त कण्ठहृद्ग्रहनाशनम् ॥

अत्र चतुर्दशाङ्ग भूनिम्बाद्यष्टादशाङ्ग वृहत्कट्फलादि-कारव्यादिप्रभृतय क्वाथा प्रयोज्या ।

सन्निपाते प्रकम्पन्त प्रलपन्त न वृहयेत् ।
तृष्णादाहाभिभूतेषु न दद्याच्छीतल जलम् ।
वातपित्तोल्वणे चैव घृत योज्य पुरातनम् ।
अभ्यङ्गाच्छमयत्याशु सन्निपात सुदारुणम् ।
स्वेदोद्गमे ज्वरे देयश्चूर्णो भृष्टकुलत्थज ॥

कर्णमूलशोथचिकित्सा।

रक्तावसेचनैः पूर्व्वं सर्पिः पानैश्च तं जयेत्।
प्रदेहैः कफवातघ्नैर्वमनैः कवडग्रहैः ॥
कुलत्थं कट्फलं शुण्ठी कारवी च समांशिकैः।
सुखोष्णैर्लेपनं दद्यात् कर्णमूले मुहुर्मुहुः ॥
गैरिकं पांशुजं शुण्ठी वचाकट्फलकाञ्जिकैः।
कर्णशोथहरो लेपः सन्निपातज्वरे नृणाम् ॥
सुखोष्णादशमूलेन प्रलेपोऽपि महाफलः।
वीजपूरकमूलानि अग्निमन्थं तथैव च ॥
सनागरं देवदारु चव्यचित्रकपेषितम्।
प्रलेपनमिदं श्रेष्ठं गन्ले श्वयथुनाशनम् ॥
एवं शोथहरैर्लेपैर्न स शाम्तं व्रजेट यदि।
तदा शोथस्य यत्नेन निदध्यात् पाचनीं क्रियाम्।
प्रलिम्पेदतसीं साज्यां सुखोष्णां बहुशो भिषक्।
पक्वे शस्त्रं प्रयुञ्जीत शस्त्रविद्याविशारदः ॥
व्रणशोथोक्तविधिना शोधनादिकमाचरेत्।
एवञ्च प्रशमं याति कर्णशोथः सुदारुणः ॥

जीर्णज्वरादिचिकित्सा।

निदिग्धिकानागरकामृताना
क्वाथं पिबेन्मिश्रितपिप्पलीकम्।
जीर्ण--रारोचककासशूल-
श्वासाग्निमान्द्यार्दितपीनसेषु ॥
हन्त्यूर्द्ध्वगामयं प्रायः सायं तेनोपयुज्यते।
एतद्रात्रिज्वरे सायमन्यथा प्रातरिष्यते ॥

पित्तानुबन्धे सन्त्यज्य पिप्पली प्रक्षिपेन्मधु ॥
पिप्पलीचूर्णसयुक्त क्वाथश्छिन्नरुहोद्भव ।
जीर्णज्वरकफध्वसी पञ्चमूलोक्ततोऽथवा ॥
पिप्पलीमधुसमिश्र गुडूचीस्वरस पिबेत् ।
जीर्णज्वरकफप्लीहकासारोचकनाशनम ॥
निदिग्धिकागण पथ्या तथा रोहीतको मत ।
क्वाथ कृत्वा पिबेत्तत्र यवक्षार कणायुतम् ॥
एतस्य पानमात्रेण प्लीहज्वरविनाशनम ॥
निदिग्धिकागण स्वल्पपञ्चमूलम् ।
गुडूची पर्पट भेकपर्णी च हिलमोचिका ।
पटोल पुटपाकेन रस एषा मधुप्लुत ॥
वातपित्तज्वर हन्ति चिरोत्थमपि दारुणम ।
मधुना सर्व्वज्वरनुच्छेफालीदलजो रस ॥
अजाजी गुडसयुक्ता विषमज्वरनाशिनी ।
अग्निमाद जयेत् सम्यग् वातरोगाश्च नाशयेत् ॥
गुडप्रगाढा त्रिफला पिबेद् वा विषमार्दित ॥
रसोनकल्क तिलतैलमिश्र
योऽश्नाति नित्य विषमज्वरार्त्त ।
विमुच्यते सोऽप्यचिराज्ज्वरेण
वातामयैश्चापि सुघोररूपै ॥
महौषधामृतामुस्तचन्दनोशीरधान्यकै ।
क्वाथस्तृतीयक हन्ति शर्करामधुयोजित ॥
उशीर चन्दन मुस्त गुडूची धान्यनागरम् ।
अम्भसा क्वथित पेय शर्करामधुयोजितम् ।

ज्वरे तृतीयके देय तृष्णादाहसमन्विते ॥
पटोलारिष्टमृद्वीकाश्यामाक त्रिफला वृषम् ।
क्वाथ ऐकाह्निक हन्ति शर्करामधुयोजित ॥
वासाधात्रीस्थिरादारुपथ्यानागरसाधित ।
सितामधुयुत क्वाथश्चातुर्थकविनाशन ॥
महाबलामूलमहौषधाभ्या
क्वाथो निहन्याद् विषमज्वरञ्च ।
शीत सकम्प परिदाहयुक्त
विनाशयेद् द्वित्रिदिनप्रयुक्त ॥
गुडूची मुस्तभूनिम्ब धात्री क्षुद्रा च नागरम् ।
विल्वादि पञ्चमूलञ्च कटुकेन्द्रयवासकम् ॥
निशाभव ज्वर वातकफपित्तसमुद्भवम् ।
चिरोत्थ द्वन्द्वज हन्ति सकण मधुमयुतम् ॥
कलिङ्गका पटोलस्य पत्र कटुकरोहिणी ।
पटोल शारिवा मुस्त पाठा कटुकरोहिणी ॥
निम्ब पटोल मृद्वीका त्रिफला मुस्तवत्सकौ ।
गुडूच्यामलक मुस्तमर्द्धश्लोकसमापना ।
कषाया शमयन्त्याशु पञ्च पञ्चविधान् ज्वरान् ॥
सन्तत सततान्येद्युस्तृतीयकचतुर्थकान् ।

जीर्णज्वरे विषमज्वरेषु च स्वल्पभार्ग्यादि बृहद्भार्ग्यादि-द्राक्षादि दार्व्यादि मुस्तादि मधुकादि प्रभृतय क्वाथा प्रयोज्या ।

शिरीषपुष्पस्वरसो रजनीद्वयसयुत ।
नस्य सर्पि समायोगाज्ज्वर चातुर्थक जयेत् ॥
नस्य चातुर्थक हन्ति रसो वागस्त्यपत्रज ॥

अपराजितधूपश्च धूपोऽष्टाङ्गाख्य एव च ।
तथा माहेश्वरो धूपो निहन्याद् विषमज्वरम् ॥
ज्वरा कषायैर्वमनैर्लङ्घनैर्लघुभोजनै ।
रूक्षस्य ये न शाम्यन्ति सर्पिस्तेषा भिषग्जितम् ॥

तत्र पिप्पल्याद्य-क्षीरषट्पलक-दशमूलषट्पलकाद्यानि घृतानि प्रयोज्यानि ।

अभ्यङ्गाश्च प्रदेहाश्च सस्नेहान् सावगाहनान् ।
विभज्य शीतोष्णकृतान् दद्याज्जीर्णज्वरे भिषक् ॥
तैराशु प्रशम याति वहिर्मार्गगतो ज्वर ।
लभन्ते सुखमङ्गानि बल वर्णश्च जायते ॥

तैले प्रयोज्ये अङ्गारक वृहदङ्गारक लाक्षादि महालाक्षादि कटुर किराताादि वृहत्पिप्पल्याद्य प्रभृतीनि तैलानि व्यवस्थेयानि ।

सुदर्शन ज्वरभैरव ज्वरनागमयूरादिचूर्णौषधानि जीर्णज्वरे प्रशस्तानि । माषकद्वयमानेन तोयादिना सह सेव्यानि ।

अभिघातज्वरो नश्येत् पानाभ्यङ्गेन सर्पिष ।
क्षताना व्रणितानाञ्च क्षतव्रणचिकित्सया ॥
ओषधि गन्धविषजौ विषपित्तप्रवाधनै ।
जयेत् कषायैर्मतिमान् सर्व्वगन्धकृतैस्तथा ॥
क्रोधजे पित्तजित् काम्या अर्था सद्वाक्यमेव च ।
आश्वासेनेष्टलाभेन वायो प्रशमनेन च ॥
हर्षणैश्च शम यान्ति कामशोकभयज्वरा ।
कामात् क्रोधज्वरो नाश क्रोधात् कामसमुद्भव ॥
याति ताभ्यामुभाभ्यान्तु भयशोकसमुद्भव ॥

### विविधतन्त्रोक्तज्वरचिकित्सा ।

नित्यज्वरे हित विद्याल्लङ्घन मृदु रेचनम् ।
पाक्यशीतकषायस्य पान प्रस्वेदकर्म्म च ॥
शिरोरुजाया वमथौ लोहितिम्नि च नेत्रयो ।
प्रलापादौ च शिरसि नरसाराम्बुसेचनम ॥
याश्चाणुवटिका प्रोक्ता वत्सनाभादिसयुता ।
सर्व्वास्ता प्रायशो योज्या विषमेऽपि ज्वरागमे ॥
मधुना मधुरोक्षत्य ताम्बुलीशृङ्गवेरयो ।
स्वरसेनाथ निर्गुण्ड्या अथवा त्रिफलाम्बुना ॥
पटोलस्य रसेनापि वीच्य दोषबलाबलम ।
द्रव्यस्थाने वर्णितानामन्येषाञ्च रसादिभि ॥
अनुपान न निर्द्दिष्ट तद्दोषाद्यमपेक्षते ।
भिषग्भिश्चिन्तनीय तद्देशकालाद्यपेक्षया ॥
अथाणुवटिका देया ज्वरे शान्ति समागते ।
त्रिलोचनाद्यभिख्या या हरिवोजसमायुता ।
सुनरञ्चानभिष्यन्दि देय लघ्वशन तत ।
एव ज्वर शम याति शान्तश्च न पुनर्भवेत् ॥

### सन्निपातज्वरचिकित्सा ।

लङ्घनादीनि कर्म्माणि षडेवादौ प्रयोजयेत् ।
क्वाथञ्च दशमूलादे पाययेद् विधिना भिषक् ॥
कस्तूरी रससिन्दूर कर्पूर वङ्गमात्रया ।
मधुना पर्णतोयेन तुलसी स्वरसेन वा ॥
ससर्द्ध पाययेज्जन्तु सन्निपातज्वरातुरम् ।
मृतसञ्जीवनी वापि दद्यान्मृगमदासवम् ॥

अत्यर्थं द्रुतगामिन्या धमन्या भ्रममोहयो ।
शीतत्वे हस्तपादस्य प्रलापे पिडकोद्गमे ॥
जिह्वाशोषेऽतिघर्म्मे च बलस्यातिच्चये तथा ।
अवश्य मात्रया देया मृतसञ्जीवनी सुधा ॥
कस्तूरीभैरवश्चक्री सूचिकाभरणो रस ।
कालानल पञ्चवक्त्रो मृतोत्थापन एव च ॥
चिन्तामणिश्च वेताल कालाग्निभैरवा रस ।
प्रतापतपन स्वेदशैत्यारिर्वाडवानल ॥
मात्रया चानुपानेन पीता एते रसोत्तमा ।
त्रिदोषज ज्वर घ्नन्ति भास्करस्तिमिर यथा ॥
सन्निपातात्मिका नाडी रसचूर्णनिषेवणात ।
विहाय विकृति घोरा सद्य प्रकृतिमृच्छति ॥
श्रीवासाभ्यक्तमाध्मात बध्नीयाद वाससोदरम् ।
श्रीवास फणिफेनेन पाययेद्वा तथा सति ॥
उदरस्य व्यथा हर्त्तु स्वेद एव चमो मत ।
शिरोरुजाया शान्त्यर्थं तत्र शीताम्बसेचनम् ॥
रक्तातिसारे सञ्जाते भेषज शस्ति पाचकम् ।
शोणितस्रुतिहृद यच्च तद् योज्यमववानत ॥
चन्दन शारिवा पाठा दार्व्वी मुस्तारुणा जलम् ।
कुशकाशशरेच्चूणा मूलानि वीरणस्य च ॥
छागेन पयसैतानि चीरपाकविधानत ।
पक्का त पाययेज्जन्त रक्तपित्तनिपीडितम् ॥
अतीसारे क्रिया धीर कुर्व्वीत तत्र चेरिताम् ।
अहिफेनासवाद्यच्च दद्यात्तस्य निहत्तये ॥

हिक्कायां कस्तूरी सेव्या कदलीमूलवारि वा।
सशर्करं तथा धूमो हिङ्गुमाषादिसम्भव ॥
त्वच क्रियाविवृद्ध्यर्थं सन्तापस्य च शान्तये।
अङ्गानामुष्णतोयेन मार्ज्जनं भिषजा मतम् ॥
द्राक्षादाडिमखर्ज्जूरफलानि बलदान्यथ।
मासूरयूषो मासस्य रसश्चेत्यखिलं हितम् ॥
प्रोक्तास्तु निखिला कार्य्या क्रिया वैद्यैरतन्द्रितै।
युध्यमानैर्यमेनैव सन्निपातचिकित्सकै ॥

विषमज्वरचिकित्सा।

विषमेषु ज्वरेष्वादौ क्रिया सशोधनी चरेत्।
सशोधनस्मृते व्यथ ज्ञेयमौषधकल्पनम् ॥
व्याधिक्षीणस्य जीर्णस्य दुर्ब्बलस्य जरावत।
शमणे न तु जायेत वमन वा विरेचनम् ॥
विशुद्धवर्ष्मणे तस्मै बुद्ध्वा दोषबलाबलम।
भेषज शमन देय यथामात्र विचक्षणे ॥
एरण्डतैलमभया पीतमूली त्रिवृत्तथा।
सर्व्वमेतद्धित विद्यान्निरपाय विरेचनम ॥
अथ सशमनार्थञ्च गुडूची विश्वभेषजम।
किराततिक्त निम्बञ्च प्रकीर्यञ्च पटोलकम् ॥
पक्ता सपाययेत क्वाथ पिप्पलीचूर्णसयुतम।
नेपालनिम्बज क्वाथ सद्यो ज्वरहर स्मृत ॥
वेगकालेऽणुवटिका वत्सनाभसमायुता।
वेगापाये तु देयाश्च हरिबीजयुता बुधै ॥
हरितालस्य यच्छ्वेत वोध्य तज्ज्वरहृत् परम्।

विरतौ सेवनीय तदर्द्धसर्षपमात्रया ॥
ज्वरकुञ्जरपारीन्द्री जयमङ्गल एव च ।
वृहत्सर्व्वज्वरहरो ज्वरान्तकरसस्तथा ॥
यथानुपानयोगेन पीता एते रसोत्तमा ।
अन्ये च त्वरया जीर्णं विषम घ्नन्ति च ज्वरम् ॥

श्वोथेऽतिसारे मधुना विमर्द्दित-
माभृष्टजीरेण च वल्लमात्रकम ।
मालूरपत्रद्रवसयुत तथा
दद्याद्धि लौह विषमज्वरान्तकम् ॥

त्र्याहिकारो रसो हन्ति तृतीयकज्वर ध्रुवम् ।
तथा चातुर्थकारिश्च घोर चातुर्थक ज्वरम् ॥
रसो विश्वेश्वरस्तद्वद्धन्ति रात्रिभव ज्वरम् ।
तालयुक्ता रसा सर्व्वे सर्व्वेष्वेव हिता मता ॥

प्रकीर्य्य निम्बो तुलसी किराती
वासामृता चम्पक कण्टकार्य्य ।
शेफालिका सिन्धुक भङ्गराश्च
वर्गोऽयमुक्त कफनुज्ज्वरघ्न ॥

विषमे च ज्वरे जीर्णे रूक्षदेहस्य रोगिण ।
घृत भेषजसिद्धञ्च तैलञ्चापि हित मतम् ॥
प्लीह्नि प्रवृद्धे मूत्रेण स्वेदस्तत्र प्रशस्यते ।
मृदुरेको विशेषेण नित्य तत्र हितो मत ॥
महासारञ्च कासीस प्रत्येक [illegible]म् ।
रसोनस्य रसेनैव मर्दयित्वा निषेवयेत् ॥
पीतमूलीं तथा शुण्ठी लौह गुञ्जाद्वयोन्मितम् ।

कणाक्काथेन समर्द्धौ पाययेद् वासकाम्भसा ॥
यक्कद्दृ्द्वौ च गोमूत्रस्वेदो च्चेय शुभावह ।
रेचन रसचूर्णेन यथामात्रेण शस्यते ।
रोहीतकाभयाशुण्ठौचित्रताना पल पलम् ।
चारस्य नरसारस्य कर्ष कर्ष विमर्दयेत् ॥
अस्य माष हिमाष वा शृतशौतेन वारिणा ।
पौत्वा स्वास्थ्यमवाप्नोति यक्कद्रोगी सुपथ्यभुक् ॥
स्वेदेन प्रशम याति यक्कज्जा ह्यङ्गवेदना ।
व्यथासु निखिलास्वेव स्वेद शुभकरो मत ॥
दौपनञ्चानभिष्यन्दि यद वातस्यानुलोमनम् ।
लघुपाक सुखजरमशन तज्ज्वरे हितम ॥

---

ज्वरस्योपद्रवाणा चिकित्सा ।

तत्रादौ श्वासस्य चिकित्सा ।

सिह्वौ व्याघ्रौ ताम्रमूलो पटोलौ
शृङ्गौ पद्मा पुष्कर रोहिणो च ।
शाक शुण्ठ्या शैलमल्लग्राश्व बौज
श्वास हन्यात् सन्निपात दशाङ्ग ॥
मधुना कृष्णा कट्फल कर्कटशृङ्गौभव चूर्णम् ।
श्वासामये मह्योग्रे लौढ़ा लोक सुखौभवति ॥

मूर्च्छायाश्चिकित्सा ।

आर्द्रकस्य रसैर्नस्य मूर्च्छायामाचरेन्नर ।
अञ्जनञ्च प्रयुञ्जीत मधुसिन्धुशिलोषणै ॥
शौताम्भसाच्चसेक सुरभिर्धूप सुगन्धि पुष्पञ्च ।
मृदुतालवृन्तवात कोमलकदलौदलस्पर्श ॥

अरुचेश्चिकित्सा ।

अरुचौ तु शृङ्गवेरजरसकै सोष्णो ससिन्धुजे कवल ।
सिन्धूत्थमातुलुङ्गीफलकेशरधारण वक्त्रे ॥

छर्द्दिश्चिकित्सा ।

गुडूच्या समधु क्वाथ पीतो वान्ति निवारयेत् ।
एलाचन्दनयुक्तश्च लाजमण्ड सशर्करं ॥

तृष्णायाश्चिकित्सा ।

लाजोदक मधुयुत शीत गुडविमर्दितम् ।
काश्मर्य्यशर्करायुक्त पिबेत्तृष्णार्दितो नर ॥

अतीसारस्य चिकित्सा ।

लङ्घनमेक मुक्त्वा नान्यदस्तीह भेषज बलिन ।
समुदीर्णदोषनिचय शमयति तत्पाचयेदपि च ॥

पाठामृता पर्पटमुस्तविश्वा-
किराततिक्तेन्द्रयवान् विपाच्य ।
पिबन् हरत्येव हठेन सर्व्वान्
ज्वरातिसारानपि दुर्निवारान् ॥

विड्ग्रहस्य चिकित्सा ।

विड्ग्रहे वातजित् कर्म्म कुर्य्यादत्रानुलोमनम् ।
मल प्रवर्त्तयेदाशु तीक्ष्णाभि फलवर्त्तिभि ॥
पथ्यारग्वधतिक्ता त्रिवृदामलकै शृत तोयम् ।
जीर्णज्वरेविबन्धे दद्यादाश्वेव विड्ग्रह शाम्येत् ॥

हिक्कायाश्चिकित्सा ।

नीरेण सिन्धूत्थरजोऽतिसूक्ष्म
नस्येन नून विनिहन्ति हिक्काम् ।

शुण्ठो हठाद् वा सितया समेता
धूपोऽथवा हिङ्गसमुद्भवश्च ॥

कासस्य चिकित्सा ।

कासे कणा कणामूल बृहती कण्टकारिका ।
विश्वभेषजमित्येषा क्वाथ पेय समाक्षिक ॥

दाहस्य चिकित्सा ।

दाहाधिकारे लिखित दाहे कुर्य्याच्चिकित्सितम् ।
पर ज्वरे विरुद्ध यन्नोचित तच्चिकित्सितम ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
ज्वराधिकारश्चतुर्थोऽध्याय ।

---

## पञ्चमोऽध्याय ।

---

ज्वरातिसाराधिकार ।

पित्तज्वरे पित्तभवोऽतिसार-
स्तथातिसारे यदि वा ज्वर स्यात् ।
दोषस्य दूष्यस्य समानभावा
ज्ज्वरातिसार कथितो भिषग्भि ॥

ज्वरातिसारयोरुक्त निदान यत् पृथक् पृथक् ।
भवेत्तन्मेलनाद्रोगो ज्वरातिसारसञ्ज्ञक ॥

तस्य चिकित्सा ।

ज्वरातिसारयोरुक्त भेषज यत् पृथक् पृथक् ।
न तन्मिलितयो कार्य्यमन्योन्य वर्द्धयेद् यत ॥

प्रायो ज्वरहर भेदि स्तम्भन त्वतिसारनुत् ॥
अतोऽन्योन्यविरुद्धत्वात् वर्द्धन तत् परस्परम ॥
ततस्तौ प्रतिकुर्व्वीत विशेषोक्तचिकित्सिते ॥
ज्वरातीसारिणामादौ कुर्य्याल्लङ्घनपाचने ।
प्रायस्तावामसम्बन्ध विना न भवतो यत ॥
ज्वरातिसारपेयादिक्रम स्याल्लङ्घिते हित ।
ज्वरातिसारो पेया वा पिबेत साम्ला श्टता नर ॥

ह्रीवेरादिक्काथ ।

ह्रीवेरातिविषामुस्तविल्वनागरधान्यकै ।
पिबेत् पिच्छाविबन्धघ्न शूलदोषामपाचनम ॥
सरक्त हन्त्यतीसार सज्वर वाथ विज्वरम् ॥

उशीरादि ।

उशीर बालक मुस्त धन्याक विश्वभेषजम् ।
समङ्गा धातकी लोध्र विल्व दीपनपाचनम् ॥

गुडूच्यादि ।

गुडूच्यतिविषाधान्यशुण्ठोविल्वाब्दबालकै ।
पाठाभूनिम्बकुटजचन्दनोशीरपद्मकै ॥
कषाय शीतल पेयो ज्वरातीसारशान्तये ।
हृल्लासारोचकच्छर्दिपिपासादाहशान्तिकृत् ॥

विल्वपञ्चकम् ।

शालपर्णी पृश्निपर्णी बला विल्व सदाडिमम् ।
विल्वपञ्चकमित्येतत् क्काथ कृत्वा प्रदापयेत् ॥
अतीसारे ज्वरे छर्द्दौ शस्यते विल्वपञ्चकम् ॥

नागरादि ।

नागरातिविषाविल्वगुडूचीमुस्तवत्सकै ।
कषाय पाचन शोथज्वरातीसारनाशन ॥

पञ्चमूल्यादि वृहत्पञ्चमूल्यादि दशमूलशुण्ठो-ान्य शुण्ठ्यादिकाथा अप्यत्र देया ।

व्योषादिचूर्ण चतुर्मासकमान तण्डुलतोयानुपान कुटजावलेह शाणमानश्छागोदुग्धानुपानस्तण्डलजलानुपानो वा तथा कलिङ्गादिगुडिका माषद्वयमाना तण्डलजलानुपाना एव मन्यान्यपि भेषजानि यथामात्राणि यथानुपानानि ज्वरातिसारे प्रयोज्यानि ।

रविप्रभावटो ।

अर्कमूलत्वचश्चर्ण रक्तिकाद्वयमात्रकम ।
आभारस माषमान फणिफेन यवोन्मितम् ॥
सर्वाण्येकत्र समर्द्य खादेच्छोताम्भसा नर ।
ज्वरातिसार हन्त्याशु वटिकेय रविप्रभा ॥
सिद्धप्राणेश्वरो वापि रस कनकसुन्दर ।
देयो हितानुपानेन रसो गगनसुन्दर ॥
अतोसारे ज्वरे चापि शुभा च कनकप्रभा ॥
ज्वरातिसारी द्विदल गुर्वन्न मैथुन श्रमम् ।
स्नान चक्रमण रौद्र वह्नितापञ्च सन्त्यजेत् ॥
छागोपयश्च मासूर यूष शृङ्गाटक फलम् ।
विल्व कमलवीजञ्च सदाभ्यवहरेच्च स. ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने ज्वरातिसार पञ्चमोऽध्याय ।

# षष्ठोऽध्याय ।



## प्लीहाधिकार ।

विदाह्यभिष्यन्दिरतस्य जन्तो
प्रदुष्टमत्यर्थमसृक् कफश्च ।
प्लीहाभिवृद्धिं कुरुत प्रवृद्धौ
त प्लीहसञ्ज्ञ गदमामनन्ति ॥
वामे स पार्श्वे परिवृद्धिमेति
विशेषत सीदति चातुरोऽत्र ।
मन्दज्वराग्नि कफपित्तलिङ्गै-
रुपद्रुत क्षीणबलोऽतिपाण्डु ॥

वातिक प्लीहगदस्य लक्षणम् ।

नित्यमानद्धकोष्ठ स्यान्नित्योदावर्त्तपीडित ।
वेदनाभि परीतश्च प्लीहा वातिक उच्यते ॥

पैत्तिकस्य लक्षणम् ।

सज्वर सपिपासश्च सदाहो मोहसयुत ।
पीतगात्रो विशेषेण प्लीहा पैत्तिक उच्यते ॥

श्लैष्मिकस्य लक्षणम् ।

प्लीहा मन्दव्यथ स्थूल कठिनो गौरवान्वित ।
अरोचकेन सयुक्त' प्लीहा कफज उच्यते ॥

ज्वराच्च विषमाद् वापि तथा दुर्बलजान्नृणाम् ।
वेदना प्लीह्नि जायेत तथा शोणितसञ्चय ॥

शोणिते च चय प्राप्ते प्लीह्नि देहस्य शीर्णता।
दौर्ब्बल्य कृष्णविट्कत्व तथा शोणितसञ्चय ॥
मोपदेहा च रसना मूत्रस्य च विवर्णता।
उत्साहहानिररतिर्नित्य मन्दज्वरस्तथा ॥
प्लोहरोगेऽप्रतिकृते श्वयथुश्वरणादिषु।
दुर्लभोपशमो नृणा कालेनाप्यभिजायते ॥
जलोदर दन्तपात स्रोतोभ्य शोणितस्रुति।
अरोचको बलाभाव कर्षन्ति प्लीहरोगिणम ॥

## प्लीहरोग चिकित्सा।

पातव्यो युक्तित क्षार चोरेणोदधिशुक्तिज।
तथा दुग्धेन पातव्या पिप्पल्य प्लीहशान्तये ॥
अर्कपत्र सलवण पुटदग्ध सुचूर्णितम्।
निहन्ति मस्तुना पीत प्लीहानमतिदारुणम् ॥
हिङ्गु त्रिकटुक कुष्ठ यवक्षारश्च सैन्धवम्।
मातुलुङ्गद्रवै पीत्वा प्लीहान हन्ति तद्गदो ॥
पलाशक्षारतोयेन पिप्पली परिभाविता।
प्लीहगुल्मार्त्तिशमनी वह्निमान्द्यहरी मता ॥
सुस्विन्न शाल्मलीपुष्प निशापर्य्युषित नर।
राजिकाचूर्णसयुक्त खादेत् प्लीहोपशान्तये ॥
गुडेश्चित्रकमूल वा रजन्यर्कदल तथा।
धातकीपुष्पचूर्ण वा प्रत्येक प्लीहनाशनम ॥
तालपुष्पोद्भव क्षार सगुड प्लीहनाशन।
प्लीहजिच्छरपुङ्खाया कल्कस्तक्रेण सेवित ॥
लशुन पिप्पलीमूलमभयाञ्चैव भक्षयेत्।

पिबेद् गोमूत्रगण्डूष प्लीहरोगनिवृत्तये ॥

रसेन जम्बीरफलस्य शङ्ख-
नाभीरज पीतमवश्यमेव ।
माषप्रमाण शमयेदशेष
प्लीहामय कूर्म्मसमानमाशु ॥
यमानिकाचित्रकयावशूक-
षड्ग्रन्थिदन्तीमगधोद्भवानाम् ।
चूर्ण हरेत् प्लीहगद निपीत
मुष्णाम्बुना मस्तुसुरासवैर्वा ॥

उष्णगोमूत्रसस्वेद प्रात प्लीह्नि निपीडनम् ।
शोभाञ्जनत्वच कल्को लेपायात्र च युज्यते ॥
मृदुरेको हितो नित्य भेषज वह्निदीपनम् ।
ज्वरघ्नमन्नपानञ्च तथाभिष्यन्दिवर्ज्जनम् ॥

## कासीसाद्या वटी ।

कासीस कर्षसम्मान रामठञ्च द्विकर्षकम ।
पीतमूली चतु कर्षा मर्दयेद् विधिना भिषक् ॥
माषमात्रा वटी कृत्वा सुरया चासवेन वा ।
रसोनस्य रसेनापि पाययेत् प्लीहरोगिणे ॥

## प्लीहारिवटिका ।

कासीसञ्च सहासार रसोनञ्चाप्यकञ्चुकम् ।
सर्व्वं समर्द्य वटिकामर्द्धमा[illegible] ॥
रचयित्वाथ सशोष्य योजयेत् प्लीहरोगिणे ।
प्लीहान नाशयेदेषा गुल्मञ्चापि सुदारुणम् ॥

अभयालवण गुडपिप्पल्यावुष्णतोयानुपाने लोकनाथरसो गुडजीरकानुपानो रोहीतकाद्य चूर्ण शीतजलानुपान तथा महामृत्युञ्जय लौहयकृ(प्लीहारिलौहचित्रकादिप्लीहप्लीहान्तक रसप्लीहारिरसाद्यान्यपि भेषजानि यथादोषानुपानानि सेव्यानि। माहाद्रावकादीन्यपि युक्तित सेवनीयानि।

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने प्लीहाधिकार षष्ठोऽध्याय ।

## सप्तमोऽध्याय ।

यकृद्रोगाधिकार ।

अधो दक्षिणतो ज्ञेया हृदयाद् यकृत स्थिति ।
व्याधयो बहवस्तत्र भवेयुर्भूरिदु खदा ॥
म्लाने तस्मिन् पुरीषस्याप्रवृत्ति स्वल्पपित्तता ।
पाण्डुत्व कर्द्दमाभत्वञ्चोदन्याविलमूत्रता ॥
उद्गारसदनाध्मानच्छर्द्दनोत्क्लेशनान्यपि ।
प्रातस्तिक्तास्यता नाड्या काठिन्य वह्निमन्दता ॥
देहस्य च मृदाभत्व रसना मलसयुता ।
लिङ्गान्येतानि जायन्ते तत्राप्याकृष्टिवद् व्यथा ॥
गते यकृति सवृद्धि वेदना तत्र जायते ।
उरोऽस्थ्नि दक्षिणे स्कन्धे सक्थ्नि चाप्यपसव्यगे ॥
दक्षिणस्य भवेज्जाड्य बाहोस्तिक्तरसास्यता ।
विवर्णत्व पुरीषस्य कासो लोहितमूत्रता ॥

अरतिर्बलहानिश्च ज्वरो बद्धाल्पविट्कता ।
पीताबत्वञ्च पार्श्वेन शेते सव्येन चातुर ॥
तोदभेदौ तथा दाह कामलाप्यस्य जायते ।
निद्रानाशस्तथा शोथस्तथा सत्त्वस्य सत्त्वय ॥
विद्रधिर्यकृति स्याच्च प्रायेण प्राणनाशन ।
तेन भाग्यबलात् कोऽपि जन्तुर्व्वेक प्रमुच्यते ॥
मद्यातिपानादत्युष्णगुर्व्वन्नस्य निषेवणात् ।
वेगरोधाद्दिवास्वप्नान्नाश चापि प्रजागरात् ॥
अतिव्यवायभाराध्वसेवनादभिघातत ।
तथान्य कर्म्मभिर्घोरैर्यकृद्रोगा भवन्ति हि ॥

### यकृद्रोगचिकित्सा ।

प्लीहोद्दिष्टा क्रिया सर्व्वा यकृद्रोगे समाचरेत् ।
प्रातर्मन्त्रेण सखेद प्लीहवत तत्र चेष्यते ॥
क्षार विडङ्गकृष्णाभ्या पूतीकस्याम्बु नि सृतम् ।
पिबेत् प्रातर्यथावह्नि यकृत्प्लीहप्रशान्तये ॥
जलौकोभिर्हरेद्रक्त क्षार वा तत्र पातयेत् ।
शिग्रुत्वग्राजिकाचूर्णैर्लेपस्तत्र च युज्यते ॥
तोयेन प्रस्थमानेन मद्यद्रावककर्षकम् ।
मेलयित्वाथ तत्स्थानमूर्व्वग्रग्राद्यच्च मर्दयेत् ॥
पातमूल्यभया धात्री द्राक्षारग्वधसिन्धुजै ।
रेचयेद्रसचूर्णेन तैलेनैरण्डजेन वा ॥

### अग्निप्रभा वटी ।

सैन्धव नरसारञ्च यवक्षार तथा विडम् ।
मर्द्दयेद्रससिन्दूर पटोलमूलजै रसै ॥

माषमाना वटी कृत्वा छायाशुष्का समाचरेत् ।
प्रात प्रात पाययेत्ता कोकिलाक्षाम्भसा समम् ॥
यकृद्रोग महाघोर प्लीहानमतिदारुणम् ।
वाताष्ठीला वह्निमान्द्य गुल्मञ्चैषा व्यपोहति ॥

यकृच्छूलविमर्दिनी वटिका ।

नरसार कर्षमान सैन्धवञ्च द्विकर्षकम् ।
कोकिलाक्षोद्भव वीज त्वच रोहितकस्य च ॥
यमानी चित्रकञ्चापि दशकर्षप्रमाणकम् ।
समर्द्य वदरास्थ्याभा वटिका पूतिकाम्बुना ॥
कृत्वा ता योजयेद्धीमान् कारवेल्लाम्भसा समम् ।
हन्त्येषा यकृतो व्याधीन् गुल्मप्लीहोदराणि च ॥
वाताष्ठीलामामवात वह्निमान्द्य सुदारुणम् ।
शूलञ्च वटिका नाम यकृच्छूलविमर्दिनी ॥

कलधौतादिरस ।

रसगन्धकलौहाभ्रतारमाक्षिकसयुतम् ।
सूतपादमित हेम मर्दयेत् कन्यकाद्रवै ॥
धान्यराशौ निशास्तिस्रो वासयेद्रसकर्मवित् ।
रसोऽय कलधौतादिर्वल्लमात्र प्रयुज्यते ॥
वातव्याधीनपस्मार यकृद्रोग ज्वर क्रिमीन् ।
क्लैव्यमुन्मादमत्युग्र कासाश्वाय व्यपोहति ॥

यकृद्दारणसिंहो रस ।

सिन्दूरमभ्रक ताल्र लौह कर्षप्रमाणत ।
माक्षिकञ्चाभयाक्वाथैर्मर्दयेदतियत्नत ॥
वल्लमात्रा वटी कृत्वा छायाशुष्का समाचरेत् ।

यकृद्दारणसिद्धोऽसौ रसो यकृन्निकृन्तन ॥

यकृदरिलौहरसराजविद्याधररसरोहीतकलौहादीनि भेषजानि यथा दोषानुपानानि तथा प्लीहाधिकारोक्तान्यपि प्रयोज्यानीति ।

जीर्णज्वराधिकारकथितानि भेषजानि प्रायशो नैखिल्येन प्लीहामये यकृद्दे च देयानि ।

विद्रधि यकृति ज्ञात्वा हिक्काश्वासव्यथादिभि ।
शस्त्र त्रिकूर्चक तत्र प्रयुञ्ज्याच्छस्त्रकोविद ॥
पाययित्वा सुरा पूर्व्व बलसत्त्वापयोगिनीम् ।
अशोपहरणीयोक्त समाहृत्य जलादिकम् ॥
सत्येनाप्यनृतेनापि वचसाश्वास्य चातुरम् ।
ईश्वर मनसा ध्यात्वा सर्व्वापद्विनिवारणम् ॥
क्षिप्रहस्तो बली धीर स्थिरचित्तो विचक्षण ।
बहुशो दृष्टकर्म्मा च कृतकर्म्माभयो भिषक् ॥
शस्त्र शस्त्रगुणोपेत परिगृह्य त्रिकूर्चकम् ।
सवेदन शोथयुत भित्त्वा चर्म्म सुलोहितम् ॥
अन्त प्रवेशयेदाशु विद्रधिर्भिद्यते यथा ।
बहिर्नयेत्तत शस्त्र तस्य नाडिकया विना ॥
अवधानन तत्कार्य्य नानिलोऽन्तर्यथा विशेत् ।
ततो जलाभिषेकाद्यै शस्त्रपातव्यथाकुलम ।
समाश्वास्यापसव्येन पार्श्वेन शाययेत्तु तम ।
मध्वोरमतसीकल्क माज्य तत्र च लेपयेत् ॥
अहिफेनासव सम्यङ्मात्रया परियोजयेत् ।
क्षीर मासरसञ्चैन पाययेद्बलसाधनम ॥

ततो मासद्वयं यावदातुरः प्राप्तजीवितः।
सुखं तिष्ठेत् त्यजेच्छ्रान्तिं भुञ्जीत लघु पोषणम्॥
विद्रधौ महति प्राज्ञः शस्त्रमुत्पलपत्रकम्।
युञ्ज्याच्चोपक्रमेज्जन्तुः सञ्जातानेकविद्रधिम्॥
मद्यमम्ल्यातपं श्रान्तिं गुर्व्वन्नं विषमाशनम्।
तीक्ष्णाशनं दिवास्वापं निशि चापि प्रजागरम्॥
तीर्थ्यतिक्रमथास्थानं शोकचिन्ताभयानि च।
क्रोधवेगं वेगरोधं यकृद्रोगी परित्यजेत्॥
जीर्णज्वरे हितं यद्यत् तत्तदत्रहितं मतम्।
यकृत् प्लीहामये चापि तथा ज्ञेयं हिताहितम्॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
यकृत्प्लीहाविकारः सप्तमोऽध्यायः।

---

## अष्टमोऽध्यायः।

---

अथ पाण्डुकामलाहलीमकाधिकारः।

पाण्डुरोगाः स्मृताः पञ्च वातपित्तकफैस्त्रयः।
चतुर्थः सन्निपातेन पञ्चमो भक्षणान्मृदः।
तस्य विप्रकृष्टनिदानपूर्व्विका सम्प्राप्तिः।
व्यवायमम्लं लवणानि मद्यं मृदं दिवास्वप्नमतीव तीक्ष्णम्
निषेवमाणस्य विदूष्य रक्तं दोषास्त्वचं पाण्डुरतां नयन्ति

तस्य पूर्व्वरूपाणि ।

त्वक्स्फोटनिष्ठीवनगात्रसादमृद्भक्षणप्रेक्षणकूटशोथा ।
विण्मूत्रपीतत्वमथाविपाको भविष्यतस्तस्य पुर सराणि ॥

वातिकस्य पाण्डुरोगस्य लक्षणम ।

त्वङ्मूत्रनयनादीना रूक्षकृष्णारुणाभता ।
वातपाण्ड्वामये कम्पतोदानाहभ्रमादय ॥

पैत्तिकस्य लक्षणम ।

पीतत्वङनखविण्मूत्रो दाहतृष्णाज्वरान्वित ।
भिन्नविट्कोऽतिपीताभ पित्तपाण्ड्वामये नरः ॥

श्लैष्मिकस्य लक्षणम ।

कफप्रसेकश्वयथुतन्द्रालस्यातिगौरवे ।
पाण्डुरोगी कफाच्छुक्लैस्त्वङ्मूत्रनयनानने ॥

सान्निपातिकस्य लक्षणम् ।

सर्व्वान्नसेविन सर्व्वे दुष्टा दोषास्त्रिदोषजम् ।
त्रिदोषलिङ्ग कुर्व्वन्ति पाण्डुरोग सुदु सहम् ॥

मृज्जस्य सम्प्राप्ति ।

मृत्तिकादनशीलस्य कुप्यत्यन्यतमो मल ।
कषाया मारुत पित्तमूषरा मधुरा कफम् ॥
कोपयेन्मृद्रसादीश्च रौक्ष्याद्भुक्तञ्च रूक्षयेत् ।
पूरयत्यविपक्वैव स्रोतांसि निरुणद्धपि ॥
इन्द्रियाणा बल हत्वा तेजो वीर्य्यौजसी तथा ।
पाण्डुरोग करोत्याशु बलवर्णाग्निनाशनम ॥

तस्य लक्षणम्।

मृद्भक्षणाद्भवेत् पाण्डुस्तन्द्रालस्यनिपीडितः।
सकासश्वासशूलार्त्तः सदारुचिसमन्वितः॥
शूनाक्षिकूटगण्डभ्रूः शूनपान्नाभिमेहनः।
क्रिमिकोष्ठोऽतिसार्य्येत मलं सासृक्कफान्वितम्॥

पाण्डुरोगस्यारिष्टलक्षणम्।

ज्वरारोचकहृल्लासच्छर्द्दितृष्णाक्लमान्वितः।
पाण्डुरोगी त्रिभिर्दोषैस्त्याज्यः क्षीणो हतेन्द्रियः॥
पाण्डुरोगश्चिरोत्पन्नः खरीभूतो न सिध्यति।
कालप्रकर्षाच्छूनाङ्गो यो वा पीतानि पश्यति॥
बद्धाल्पविट् सहरितं सकफं योऽतिसार्य्यते।
दीनः श्वेतातिदिग्धाङ्गश्छर्द्दिमूर्च्छातृडर्द्दितः॥
स नास्त्यसृक्क्षयाद्यश्च पाण्डुः श्वेतत्वमाप्नुयात्।
पाण्डुदन्तनखो यस्तु पाण्डुनेत्रश्च यो भवेत्॥
पाण्डुसङ्घातदर्शी च पाण्डुरोगी विनश्यति॥

अन्तेषु शूनं परिहीनमध्यं
म्लानं तथान्तेषु च मध्यशूनम्।
गुदे च शेफस्यथ मुष्कयोश्च
शूनं प्रताम्यन्तमसञ्ज्ञकल्पम्॥
विवर्ज्जयेत् पाण्डुकिनं यशोऽर्थी
तथातिसारज्वरपीडितञ्च॥

---

कामलाया निदानपूर्व्विका सम्प्राप्तिः।

पाण्डुरोगी तु योऽत्यर्थं पित्तलानि निषेवते।
तस्य पित्तमसृङ्मांसं दग्ध्वा रोगाय कल्पते॥

तस्या लक्षणम ।

हारिद्रनेत्र स भृश हारिद्रत्वङ्नखानन ।
पीतरक्तशकृन्मूत्रो भेकवर्णो हतेन्द्रिय ॥
दाहाविपाकदौर्ब्बल्यसदनारुचिकर्षित ।
कामला बहुपित्तैषा कोष्ठशाखाश्रया मता ॥
कालान्तरात् खरीभूता कृच्छ्रा स्यात् कुम्भकामला ॥

कुम्भकामलाया अरिष्टलक्षणम् ।

छर्द्यरोचकहृल्लासज्वरक्लमनिपीडित ।
नाश्यति श्वासकासार्त्तो विडभेदी कुम्भकामली ॥

उभयोरपि कामलयोररिष्टलक्षणम् ।

कृष्णपीतशकृन्मूत्रो भृश शूनश्च मानव ।
सरक्ताक्षिमुखच्छर्दिविण्मूत्रो यश्च ताम्यति ॥
दाहारुचितृडानाहतन्द्रामोहसमन्वित ।
नष्टाग्निसज्ञ क्षिप्र हि कामलावान् विपद्यते ॥

हलीमकस्य लक्षणम ।

यदा तु पाण्डोर्वर्ण स्याद्धरितश्यावपीतक ।
बलोत्साहक्षयस्तन्द्रा मन्दाग्नित्व मृदुज्वर ॥
स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासतृष्णारुचिभ्रमा ।
हलीमक तदा तस्य विद्यादनिलपित्तत ॥

रोगापाण्ड्वादयो ह्यया यकृद्दोषसमुद्भवा ।
यकृत स्वस्थता प्राप्ते शाम्यन्ति व्याधयश्च ते ॥
पित्तकोषभव पित्त ग्रहणी नाविशेद्यदि
स्रोतोभिस्तत् समाकृष्ट दूषयत्यथ शोणितम ॥
अथवाम्लगुण पित्त यकृतो ग्रहणी गतम् ।

स्रोतोभिर्नीयते नित्यं शोणितं यत्स्वभावतः ॥
हेतुभिर्बहुभिर्दुष्टे शोणिते जनयेच्च तत् ।
पाण्डुरोगं मनुष्याणां बलवर्णाग्निनाशनम् ॥
सम्प्राप्तिः पाण्डुरोगस्य दक्षेणैव पुरोदिता ।
यां ज्ञात्वा न भिषङ्मोहं कदाचिदपि गच्छति ॥

अथैषां चिकित्सा ।

साध्यन्तु पाण्ड्वामयिनं समीक्ष्य
स्निग्धं घृतेनोर्द्ध्वमधश्च शुद्धम् ।
सम्पादयेत् क्षौद्रघृतप्रगाढैः
हरीतकीचूर्णमयैः प्रयोगैः ॥
पिबेद् घृतं वा रजनीविपक्वं
यत् त्रैफलं तैल्वकमेव वापि ।
विरेचनद्रव्यकृतं पिबेद्वा
योगांश्च वैरेचनिकान् घृतेन ॥
विधिः स्निग्धस्तु वातोत्थे तिक्तशीतोऽथ पैत्तिके ।
श्लैष्मिके कटुरूक्षोष्णः कार्य्यो मिश्रस्तु मिश्रके ॥
पाण्डुरोगे सदा सेव्या सगुडा च हरीतकी ॥
फलत्रिकामृतातिक्तानिम्बकैरातवासकैः ।
जयेन्मधुयुतः क्वाथः पाण्डुतां कामलां तथा ॥
त्रिफलाक्वथितं तोयं सघृतञ्च सशर्करम् ।
वातपाण्ड्वामयी पीत्वा स्वास्थ्यमाशु व्रजेद्ध्रुवम् ॥
द्विशर्करं त्रिवृच्चूर्णं पलार्द्धं पैत्तिकः पिबेत् ।
कफपाण्डौ तु गोमूत्रयुक्तां क्लिन्नां हरीतकीम् ॥
समरात्रं गवां मूत्रे भावितं वाप्ययोरजः ।

पाण्डुरोगप्रशान्त्यथ पयसाथ पिबेन्नर ॥

अयोमलन्तु सन्तप्त भूयो गोमूत्रशोधितम् ।
मधुसर्पिर्युत चूर्ण सह भक्तेन योजयेत् ॥

रेचन कामलार्त्तस्य स्निग्धस्यादौ प्रयोजयेत् ।
तत प्रशमनी कार्य्या क्रिया वद्येन जानता ॥

त्रिफलाया गुडूच्या वा दार्व्या निम्बस्य वा रस ।
प्रातर्माक्षिकसयुक्त शीलित कामलापह ॥

अञ्जन कामलार्त्तस्य द्रोणपुष्पीरस स्मृत ।
निशागैरिकधात्रीणा चूर्ण वा सप्रकल्पयेत् ॥

नस्य कर्कोटमूल वा घ्रेय वा जालिनीफलम ॥

सशर्करा कामहीना त्रिभण्डी
हिता गवाक्षी सगुडा च शुण्ठी ॥

धात्रीलौहरजोव्योषनिशाक्षौद्राज्यशर्करा ।
लीढ्वा निवारयन्त्याशु कामलामुद्धतामपि ॥

कुम्भाख्यकामलायान्तु हित कामलिकी विधि ।
गोमूत्रेण पिबेत् कुम्भकामलावान् शिलाजतु ॥

दग्ध्वाक्षकाष्ठैर्मलमायसन्तु
गोमूत्रनिर्वापितमष्टवारान् ।
विचूर्ण्य लीढ मधुना चिरेण
कुम्भाह्वय पाण्डुगद निहन्ति ॥

अपहरति कामलार्त्ति नस्येन कुमारिकाजल सद्य ॥

पाण्डुरोगक्रिया सर्व्वा योजयेच्च हलीमके ।
कामलायाञ्च यादिष्टा सापि कार्य्या भिषग्वरै ॥

मारितञ्चायसच्चूर्ण मुस्ताचूर्णेन सयुतम् ।

खदिरस्य कषायेण पिबेद्वन्तु हलीमकम् ॥
मितातिक्ताबलायष्टीत्रिफलारजनीयुग ।
लेह लिह्यात् समध्वाज्य हलीमकनिवृत्तये ॥
अमृतलता रसकल्कप्रसावित तुरगविहित सर्पि ।
चीर चतुर्गुणमितद्वितरेच्च हलीमकार्त्तिभ्य ॥
मधुरैरन्नपानैस्त वातपित्तहरैर्हरेत ॥
कामलाया तथा पाण्डौ रसचूर्णेन रचनम् ।
पटोलमूलजेनापि चूर्णेन हितमुच्यते ॥

पाण्डौ कामलाया हलीमके च नवायसलौहत्रिक त्रयादिलौहवज्रवटकमण्डूरपुनर्नवादिमण्डूरपञ्चामृतलौहमण्डूरादीनि भेषजानि यथामात्राणि यथादोषानुपानानि च देयानि।

चन्द्रसूर्यात्मकरस प्राणवल्लभरस पञ्चाननवटी पाण्डुसूदनरस पाण्डुपञ्चाननरसादयोऽप्यणुवटिका यथादोषानुपाना व्यवस्थेया ।

हरिद्राद्यमूर्वाद्यव्योषाद्यघृतानि पाण्ड्वादिषु हितानि ।
पुनर्नवातैलमत्राभ्यञ्जनीय यदि ज्वरवेगो न स्यात ।
तिलपिष्टनिभ यस्तु वर्च्च सृजति कामली ।
श्लेष्मणा रुद्धमार्ग तत् पित्त कफहरैर्जयेत् ॥
रूक्षशीत गुरुस्वादु व्यायामैर्वेगनिग्रहै ।
कफसम्मूर्च्छितो वायु स्थानात् पित्त क्षिपेद बहि ॥
हारिद्रनेत्रमूत्रत्वक्श्वेतवर्च्चास्तदा नर ।
भवेत् साटोपविष्टम्भो गुरुणा हृदयेन च ॥
दौर्बल्याल्पाग्निपार्श्वार्त्तिहिक्काश्वासारुचिज्वरै ।
निरुत्साहो निरोजा स्यात् पित्ते शाखासमाश्रिते ॥

वर्द्धितिक्तिरिदग्धाणा रुच्याम्ले कटके रसैः +
शुष्कमूलककौलत्थयूषैश्चान्नानि भोजयेत् ॥
मातुलुङ्गरस क्षौद्र पिप्पली मरिचान्वितम् ।
मनागर पिबेत् पित्त तथापैति स्वमाश्रयम ।
तथाम्ले कटरूक्षोष्णोर्लवणैश्चाप्युपक्रम ।
अपित्तरागाच्छकृतो वायोश्चाप्रशमाद्भवेत ॥
स्वस्थानमागते पित्ते पुरोषे पित्तरञ्जिते ।
निवृत्तोपद्रवस्यास्य पूर्व्व कामलिको विधि ॥
निर्घातयेच्छरीरात्त मृत्तिका भक्षिता भिषक् ।
युक्तिज्ञ शोधनैस्तोक्ष्णै प्रसमीक्ष्य बलाबलम ॥
शुद्धकायस्य सर्पों षि बलाधानानि योजयेत् ॥
व्योष बिल्व हरिद्रे द्वे त्रिफला द्वे पुनर्नवे ।
मुस्तान्ययोरज पाठा विडङ्ग देवदारु च ॥
वृश्चिकालो च भार्गी च सक्षोरैस्तै समैर्घृतम ।
साधयित्वा पिबेदयुक्तया नरो मृद्दोषपोडित ॥
यथादोष चिकित्सेच्च मृज्ज पाण्डु विचक्षण ।
हितश्चात्रापि गदित पाण्डुसाधारणो विधि ॥
पुराणयवगोधूमशाल्यश्च पुनर्नवा ।
मुद्गाढकोमसूराणा यूषो जाङ्गलजो रस ॥
पटोल वृद्धकुष्माण्ड तरुण कद ोफलम् ।
मत्स्येषु मद्गुर शृङ्गो तक्र धात्रभया घृतम ॥
रसोन पक्कमाम्रञ्च वार्त्ताकुरमृता निशा ।
इत्याद्यानि गदे पाण्डो हितान्युक्तानि पण्डितै ॥
धूमपान वेगरोध स्वेदन मैथन सुरा ।

दिवास्वप्नो मृदशन रामठ माषसर्षपौ ॥
तीक्ष्णाम्ललवणाध्याशगुर्वन्नानि जल बहु ।
पत्रशाकानि शिम्बो च गदे पाण्डौ न शर्म्मणे ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
पाण्डुकामलाद्यधिकारोऽष्टमोऽध्याय ।

---

## नवमोऽध्याय ।



### अथ शोथाधिकार ।

शोथस्य विप्रकृष्ट निदानम् ।

शुद्धामयाभक्तकृशाबलाना
क्षाराम्लतोक्ष्णोष्णगुरूपसेवा ।
दध्यामसृच्छाकविरोधि पिष्ट-
गरोपसृष्टान्ननिषेवणञ्च ॥
अर्शांस्यचेष्टा वपुषो ह्यशुद्धि
र्मर्मोपघातो विषमा प्रसूति ।
मिथ्योपचार प्रतिकर्म्मणाञ्च
निजस्य हेतु श्वयथो प्रदिष्ट ॥

तस्य सन्निकृष्ट निदानम ।

दोषे पृथग् द्वय सर्व्वैरभिघाताद्विषादपि ।
सर्व्वो हेतुविशेषैस्तु रूपभेदान्नवात्मक ॥

तस्य सम्प्राप्ति ।

रक्तपित्तकफान् वायुर्दुष्टो दुष्टान् वहि शिरा ।
नीत्वा रुद्धगतिस्तैर्हि कुर्य्यात् त्वङ्मांससंश्रयम् ॥
उत्सेध संहत शोथ तमाहुर्निचयादत ॥

तस्य सामान्य लक्षणम् ।

सगौरव स्यादनवस्थितत्व
सोत्सेधमुष्माथ शिराततत्वम् ।
सलोमहर्षञ्च विवर्णता च
सामान्यलिङ्ग श्वयथो प्रदिष्टम ॥

तस्य शोथस्य कि स्यादित्याकाङ्क्षायामाह । अनवस्थितत्व स्यादनियता स्थिति स्यादित्यर्थ । चिकित्साव्यतिरेकेणापि निवृत्त । तच्चा नवस्थितत्व सगौरव स्यात् गौरवमप्यनवस्थित स्यात् । अथच सोत्सेध स्यात् उन्नतत्वमप्यनवस्थित स्यादित्यर्थ । सलोमहर्षमितिपद शिराततत्वमित्यस्य विशेषणम् । लोमहर्ष शिराततत्वञ्च स्यातामित्यभिप्राय ।

तस्य पूर्व्वरूपम् ।

तत् पूर्व्वरूप दवथु शिरायामोऽङ्गगौरवम् ॥

सामान्यरूपकथनान्तर पूर्व्वरूपकथन वक्तु काम-चारित्वात् । दवथु सन्ताप, शिरायाम शिराप्रसारस्तत्प्रसार-वत् पीडा वा ।

वातिकस्य शोथस्य लक्षणम् ।

चलस्तनुत्वक् परुषोऽरुणोऽसित
प्रसुप्तिहर्षार्त्तियुतोऽनिमित्तत ।

प्रशाम्यति प्रोन्नमति प्रपीडितो
दिवा बली स्याच्छ्वयथुः समीरणात्॥

पैत्तिकस्य तस्य लक्षणम्।

मृदुः सगन्धोऽसितपीतरागवान्
भ्रमज्वरस्वेदतृषामदान्वितः।
य उष्यते स्पर्शरुगक्षिरागकृत्
स पित्तशोथो भृशदाहपाकवान्॥

श्लैष्मिकस्य लक्षणम्।

गुरुः स्थिरः पाण्डुररोचकान्वितः
प्रसेकनिद्रावमिवह्निमान्द्यकृत्।
स कृच्छ्रजन्मप्रशमो निपीडितो
न चोन्नमेद्रात्रिबली कफात्मकः॥
निदानाकृतिसंसर्गाच्छ्वयथुः स्याद्द्विदोषजः।
सर्वाकृतिः सन्निपाताच्छोथो व्यामिश्रलक्षणः॥
अभिघातजस्य शोथस्य सनिदानं लक्षणम्।
अभिघातेन शस्त्रादिच्छेदभेदक्षतादिभिः।
हिमानिलोदध्यनिलैर्भल्लातकपिकच्छुजः॥
रसैः शूकैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान्।
भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः॥

विषजस्य सनिदानं लक्षणम्।
विषजः सविषप्राणिपरिसर्पणमूत्रणात्।
दंष्ट्रादन्तनखाघातादविषप्राणिनामपि॥
विण्मूत्रशुक्रोपहतमलवद्वस्त्रसङ्करात्।

विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥
मृदुश्चलोऽवलम्बी च शीघ्रो बहुरुजाकर ॥
दोषा श्वयथुमूर्द्ध हि कुर्व्वन्त्यामाशये स्थिता ।
पक्वाशयस्था मध्ये तु वर्च्च स्थानगतास्त्वध ॥
कृत्स्न देहमनुप्राप्ता कुर्य्यु सर्व्वसर तथा ॥
यो मध्यदेशे श्वयथु स कष्ट सर्व्वगश्च य ।
अर्द्धाङ्गेऽरिष्टभूत स्याद यश्चोर्द्ध परिसर्पति ॥
ऊर्द्धगामी नर पद्भ्यामधोगामी मुखात् स्त्रियम् ।
उभय वस्तिसञ्जात शोथो हन्ति न सशय ॥
अन्यच्च। अनन्योपद्रवकृत शोथ पादसमुत्थित ।
पुरुष हन्ति नारीञ्च मुखजो गुदजो द्वयम् ॥
अन्यच्च। पादप्रवृत्त श्वयथुर्न्नृणा य प्राप्नुयान्मुखम् ।
स्त्रीणा वक्त्रात्पद याति वस्तिजश्च न सिध्यति ॥

शोथ पद्भ्यामुत्थाय ऊर्द्धगामी मुखगामी सन् पुरुष तथा मुखादधोगामी पादगामी सन् स्त्रिय हन्ति। वस्तिसञ्जात शोथ उभय नर नारीञ्च हन्ति। ऊर्द्धगामी सन् पुरुष अधोगामी सन् स्त्रियमित्यर्थ । स शोथ अनन्योपद्रवकृतश्चेत् तर्ह्येव मारक, अन्यथा नावश्यमारक इति। अनन्योपद्रवकृत, शोथादन्ये व्याधय अतीसारग्रहण्यर्श प्रभृतय तेषामुपद्रवेण कृत अन्योपद्रवकृत, न तादृशो भवतीत्यनन्योपद्रवकृत स्वहेतुभिरेव जात इत्यर्थ । अनन्योपद्रवकृत शोथ पादसमुत्थित पादाभ्यामुत्थित (मुखगामी इत्यूहनीयम्) पुरुष मुखज शोथो नारी हन्ति (अत्र पादगामी सन्निति बोध्यम्।) गुदजो गुह्यज शोथो द्वय हन्ति, मुखगामी सन्

पुरुष पादगामो सन् स्त्रियमित्यर्थ। इति द्वितीयश्लोकस्य व्याख्या। तृतीयश्लोके वस्तिज इत्यत्र पूर्व्ववद् व्याख्येयम्।

श्वास पिपासा छर्दिश्च दौर्व्वल्य ज्वर एव च।
यस्य चान्ने रुचिर्नास्ति शोथिन त विवर्ज्जयेत्॥

श्वयथ त विवर्ज्जयेदिति पाठे तस्य त श्वयथु विवर्ज्जयेदिति व्याख्या।

विवर्ज्जयेत् कुक्ष्युदराश्रितञ्च
तथा गले मर्म्मणि संश्रितञ्च।
स्थूल खरश्चापि भवेद् विवर्ज्या
यश्चापि बालस्थविराबलानाम्॥

छर्द्दिस्तृष्णारुचि श्वासो ज्वरोऽतीसार एव च।
सप्तकोऽय सदौर्बल्य शोथोपद्रवसग्रह॥
नवोऽनुपद्रव शोथ साध्योऽसाध्य पुररित॥

शोथस्य चिकित्सा।

लङ्घन पाचन शोथे शिर कायविरेचनम्।
वमनञ्च यथादोष भिषग् बुद्धा प्रकल्पयेत्॥
स्नेहोऽथ वातिके शोथे बद्धविट्के निरूहणम।
पयो घृत पैत्तिके तु कफजे रूक्षणक्रम॥

अथामज लङ्घनपाचनक्रमै-
र्विशोधनैरुल्वणदोषमादित।
शिरोगत शीर्षविरेचनैरधो
विरेचनैरूर्द्ध्वहरैस्तथोर्द्ध्वगम्॥
उपाचरेत् स्नेहभव विरूक्षणै

प्रकल्पयेत् स्नेहविधिञ्च रूक्षिते ॥
शुण्ठीपुनर्नवैरण्डपञ्चमूलोश्रृत जलम् ।
वातिके श्वयथौ शस्त दशमूलोजल तथा ॥
पटोलत्रिफलारिष्टदार्वीक्वाथ सगुग्गुलु
हन्ति पित्तकृत शोथ तृष्णाज्वरसमन्वितम् ॥
स्नुक्क्षीरभाविता कृष्णा पथ्या मूलेण वा युता ।
योजिता शमयन्त्याशु शोथ श्लेष्मसमुत्थितम् ॥
मिश्रे मिश्रक्रिया कुर्य्यात् सर्व्वजे सर्व्वरूपिणीम् ।
विल्वपत्ररस पूत सोषण त्रिभवे पिबेत् ॥
निम्बपत्ररस पेय सोषण श्वयथौ त्रिजे ।
शुण्ठीगुग्गुलुसयुक्त मूत्रञ्चाप्यत्र शस्यते ॥
शोथे त्वागन्तुजे कुर्य्यात् सेकलेपादिशीतलम् ॥
महिषीक्षीरसपिष्टैर्नवनीतसमन्वितै ।
तिलैर्लिप्त शम याति शोथो भल्लातकोत्थित ॥
यष्टीदुग्धतिलैर्लेपो नवनीतेन सयुत ।
शोथमारुष्कर हन्ति चूर्णं शालदलस्य च ॥
शूकानुद्धृत्य यत्नेन श्वयथौ कपिकच्छुजे ।
शीतलेपनसेकाद्य कर्म्म कुर्य्याद्विधानत ॥

सिंहास्यादि ।

सिंहास्यामृतभण्टाकीक्वाथ कृत्वा समाक्षिकम् ।
पीत्वा शोथ जयेज्जन्तु श्वास कास ज्वर वमिम ॥

पुनर्नवाष्टकक्वाथ ।

पुनर्नवा निम्ब पटोल शुण्ठी
तिक्तामृता दार्व्वभयाकषाय ।

सर्व्वाङ्गशोथोदरपार्श्वशूल-

श्वासान्वितं पाण्डुगदं निहन्ति ॥

स्थलपद्ममयं कल्कं पयसालोड्य पाययेत् ॥

पुनर्नवानिम्बपत्रनिष्पावपारिभद्रकैः ।

एकीकृतैः पुटस्वेदः शोथं हन्ति सुदारुणम् ॥

अपामार्गः कोकिलाक्षो निर्गुण्डी विजया तथा ।

एतैरपि पुटस्वेदः शोथं हन्ति सुदारुणम् ॥

मूत्रकृच्छ्राधिकारोक्तं भेषजञ्चात्र योजयेत् ॥

माणमण्ड ।

पुराणं माणकं पिष्ट्वा द्विगुणीकृततण्डुलम् ।

साधितं क्षीरतोयाभ्यामभ्यस्येत् पायसं तु तत् ॥

हन्ति वातोदरं शोथं ग्रहणीं पाण्डुतामपि ।

सिद्धो भिषग्भिराख्यातः प्रयोगोऽयं निरत्ययः ॥

पुनर्नवादिचूर्णं शोथारिचूर्णं पुनर्नवादिगुग्गुलु शोथारिमण्डूर रसाभ्रमण्डूर त्रिकट्वादिलौह शोथारिलौह शोथभस्मलौहादीनि भेषजानि गोमूत्र विल्वपत्ररसपुनर्नवादिरससहितानि यथादोषानुपानानि वा यथामात्राणि शोथे देयानि ।

दुग्धवटी चेत्रपालवटी-रसपर्पटी पञ्चामृतपर्पट्याद्यान्यौषधानि दुग्धानुपानानि सेव्यानि । एतेषु सेव्यमानेषु रोगी यावदारोग्यं लवणजलादिकं सर्व्वमेव वर्ज्जयित्वा दुग्धान्नमात्र-वृत्तिर्भवेत् ।

पुनर्नवातैलं शुष्कमूलकतैलान्यत्राभ्यञ्जनीयानि । किन्तु ज्वरे सति तानि न हितानीति ।

शोथे पथ्यापथ्यानि ।

पुराणा शालयो मुद्गा यवा शिम्बी पुनर्नवा ।
रक्तशिग्रुरसोनौ च माणमूलं पटोलकम् ॥
ताम्रचूडमयूरादिखगानामामिषरसम् ।
शृङ्गीमद्गुरयोर्यूषो यूष कूर्मामिषोद्भव ॥
निम्बपत्र हरिद्रा च तिक्तानि दीपनानि च ।
इत्याद्यानि विजानीयाद्धितानि श्वयथौ भिषक् ॥
गुर्वन्न मद्यमम्लञ्च शीततोय विदाहि च ।
दिवास्वाप मैथुनञ्च शोथरोगी परित्यजेत् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
शोथाधिकारो नवमोऽध्याय ।

---

# दशमोऽध्याय ।

---

अथोदररोगाधिकार ।

रोगा सर्व्वेऽपि मन्देऽग्नौ सुतरामुदराणि च ।
अजीर्णान्मलिनैश्चान्नैर्जायन्ते मलसञ्चयात् ॥

उदररोगस्य सम्प्राप्ति ।

रुद्ध्वा स्वेदाम्बुवाहीनि दोषा स्रोतांसि सञ्चिता ।
प्राणाग्न्यपानान् सन्दूष्य जनयन्त्युदर नृणाम् ॥

तस्य सामान्य लक्षणम्।

आध्मान गमनेऽशक्तिर्दौर्ब्बल्य दुर्ब्बलाग्निता।
शोथ सदनमङ्गाना सङ्गो वातपुरीषयो ॥
दाहस्तन्द्रा च सर्व्वेषु जठरेषु भवन्ति हि ॥

तस्य सन्निकृष्ट निदान सख्या च।

पृथग् दोषै समस्तैश्च प्लीहबद्धक्षतोदकै।
सम्भवन्त्युदराण्यष्टौ तेषा लिङ्ग पृथक् शृणु ॥

तत्र वातोदरस्य लक्षणम।

तत्र वातोदरे शोथ पाणिपान्नाभिकुक्षिषु।
कुक्षिपार्श्वोदरकटीपृष्ठरुक्पर्व्वभेदनम ॥
शुष्ककासाङ्गमर्दाधोगुरुता मलसग्रहा।
श्यावारुणत्वगादित्वमकस्माद्वृद्धिह्रासवत् ॥
सतोदभेदमुदर तनुकृष्णशिराततम।
आध्मातदृतिवच्छब्दमाहत प्रकरोति च ॥
वायुश्चात्र सरुक्शब्दो विचरेत् सर्व्वतो गति ॥

पित्तोदरस्य लक्षणम्।

पित्तोदरे ज्वरो मूर्च्छा दाहस्तृट् कटुकास्यता।
भ्रमोऽतिसार पीतत्व त्वगादावुदर हरित् ॥
पीतताम्रशिरानद्ध सस्वेद सोष्म दह्यते।
धूमायते मृदुस्पर्श क्षिप्रपाक प्रदूयते ॥

कफोदरस्य लक्षणम्।

श्लेष्मोदरेऽङ्गसदन स्वापश्वयथुगौरवम्।
तन्द्रोत्क्लेशोऽरुचि श्वास कास शौक्ल्य त्वगादिषु ॥

उदर स्तिमित स्निग्ध शुक्लराजीतत महत् ।
चिराभिवृद्धि कठिन शीतस्पर्श गुरु स्थिरम ॥

सन्निपातोदरस्य लक्षणम् ।

स्त्रियोऽन्नपान नखलोममूत्र-
विडार्त्तवैर्युक्तममाधुवृत्ता ।
यस्मै प्रयच्छन्त्यरयो गराश्च
दुष्टाम्बुदूषीविषसेवनाद्वा ॥
तस्याशु रक्त कुपिताश्च दोषा
कुर्य्यु सुघोर जठर त्रिलिङ्गम ।
तच्छीतवाते भृशदुर्दिने च
विशेषत कुप्यति दह्यते च ॥
स चातुरो मूर्च्छति हि प्रसक्त
पाण्डु कृश शुष्यति तृष्णया च ।
दूष्योदर कीर्त्तितमेतदेव
प्लीहोदर कीर्त्तयतो निबोध ॥

प्लीहोदरस्य लक्षणम ।

विदाह्यभिष्यन्दिरतस्य जन्तो
प्रदुष्टमत्यर्थमसृक् कफश्च ।
प्लीहाभिवृद्धि कुरुत प्रवृद्धौ
प्लीहोत्थमेतज्जठर वदन्ति ॥
तद्वामपार्श्वे परिवृद्धिमेति
विशेषत सीदति चातुरोऽत्र ।
मन्दज्वराग्नि कफपित्तलिङ्गै-
रुपद्रुत क्षीणबलोऽतिपाण्डु ॥

सव्यान्यपार्श्वे यकृति प्रवृद्धे
ज्ञेय यकृद्दाल्युदर तदेव ।
प्रोक्तोऽस्य लिङ्गान्यखिलानि चापि
पूर्व्वं मयोक्तानि यथा चिकित्सा ॥

बद्धगुदोदरस्य लक्षणम् ।

यस्यान्त्रमन्नैरुपलेपिभिर्वा
बालाश्मभिर्वा पिहित यथावत् ।
सञ्चीयते तस्य मलो नरस्य
शनै शनै सङ्करवच्च नाड्याम ॥
निरुध्यते तस्य गुदे पुरीष
निरेति कृच्छ्रादपि चाल्पमल्पम ।
हृन्नाभिमध्ये परिवृद्धिमेति
तस्योदर बद्धगुद वदन्ति ॥

क्षतोदरस्य लक्षणम् ।

शल्य तथान्नोपहित यदन्त्र
भुक्त भिनत्त्यागतमन्यथा वा ।
तस्मात् स्रुतोऽन्त्रात् सलिलप्रकाश
स्राव स्रवेद्वै गुदतस्तु भूय ॥
नाभेरधश्चोदरमेति वृद्धि
निस्तुद्यते दाल्यति चातिमात्रम् ।
एतत् परिस्राव्युदर प्रदिष्ट
दकोदर कीर्त्तयतो निबोध ॥

उदकोदरस्य लक्षणम् ।

य स्नेहपीतोऽप्यनुवासितो वा
वान्तो विरिक्तोऽप्यथवा निरूढ ।
पिबेज्जल शीतलमाशु तस्य
स्रोतांसि दुष्यन्ति हि तद्वहानि ॥
स्नेहोपलिप्तेष्वथवापि तेषु
दकोदर पूर्व्ववदभ्युपैति ।
स्निग्ध महत् तत् परिवृत्तनाभि
समन्तत पूर्णमिवाम्बुना च ॥
यथा दृति क्षुभ्यति कम्पते च
शब्दायते वापि दकोदर तत् ॥

जन्मनैवोदर सर्व्व प्राय कृच्छ्रतम मतम् ।
बलिनस्तदजाताम्बु यत्नसाध्य नवोत्थितम् ॥
पक्षाद्बद्धगुद तूर्द्ध्व सर्व्व जातोदक तथा ।
प्रायो भवत्यन्तरायच्छिद्रान्त्र चोदर नृणाम ।

उदररोगस्यारिष्टलक्षणम् ।

शूनाक्ष कुटिलोपस्थमुपक्लिन्नतनुत्वचम ।
बलशोणितमासाग्निपरिक्षीणञ्च वर्ज्जयेत ॥
पार्श्वभङ्गान्नविद्वेषशोफातीसारपोडितम् ।
विरिक्तञ्चाप्युदरिण पूर्य्यमाण विवर्ज्जयेत् ॥

उदररोगस्य चिकित्सा ।

सर्व्वमेवोदर प्रायो दोषसघातज यत ।
अतो वातादिशमनी क्रिया सर्व्वत्र शस्यते ॥
उदरे दोषसम्पूर्णे कुक्षौ मन्दो यतोऽनल

तस्माद्गोज्यानि योज्यानि दीपनानि लघूनि च ॥
रक्तशालीन् यवान् मुद्गान् जाङ्गलान् मृगपक्षिणः ।
पयोमूत्रासवारिष्टमधुसीधु च शीलयेत् ॥
दोषातिमात्रोपचयात् स्रोतोमार्गनिरोधनात् ।
सम्भवत्युदरं तस्मान्नित्यमेनं विरेचयेत् ।
पाययेत्तैलमैरण्डं समूत्रं सपयोऽपि वा ॥
वातोदरं बलवतः स्नेहस्वेदैरुपाचरेत् ।
स्निग्धाय स्वेदिताङ्गाय दद्यात् स्निग्धविरेचनम् ॥
हृते दोषे परिम्लानं वेष्टयेद्वाससोदरम् ।
यथास्यानवकाशत्वाद्वायुर्नाध्मापयेत् पुनः ॥
विरिक्ते च यथादोषहरैः पयः शृता हिता ॥
वातोदरे पयोऽभ्यासो निरूहो दाशमूलिकः ॥
वातोदरी पिबेत्तक्रं पिप्पलीलवणान्वितम् ।
शर्करामरिचोपेतं स्वादु पित्तोदरी पिबेत् ॥
यवानीसैन्धवाजाजीव्योषयुक्तं कफोदरी ।
त्र्यूषणक्षारलवणैर्युक्तं त्रैदोषिकोदरी ॥
गौरवारोचकार्त्तानाममृतत्वाय कल्पते ॥
सक्षीरं माहिषं मूत्रं निराहारः पिबेन्नरः ।
शाम्यत्यनेन जठरं सप्ताहादिति निश्चयः ॥
स्नुक्पयसा भावितत्तण्डुलचूर्णविनिर्मितः पूपः ।
उदरमुदारं हिंसाद्योगोऽयं सप्तरात्रेण ॥

पुनर्नवादिः क्वाथः ।

पुनर्नवा दारु निशा सतिक्ता
पटोलपथ्या पिचुमन्दमुस्ता ।

मनागरा च्छिन्नरुहेति सर्वै
कृत कषायो विधिना विधिज्ञै ॥
गोमूत्रयुग् गुग्गुलुना च युक्त
पीत प्रभाते नियत नराणाम ।
सर्व्वाङ्गशोथोदरपार्श्वशूल
श्वासान्वित पाण्डुगद निहन्ति ॥

नारायणचूर्णम ।

यमानी हवुषा धान्य त्रिफला चोपकुञ्चिका ।
कारवी पिप्पलीमूलमजगन्धा शटी वचा ॥
शताह्वा जीरक व्योष स्वर्णपत्री च चित्रकम् ।
द्वौ क्षारौ पौष्कर मूल कुष्ठ लवणपञ्चकम ॥
विडङ्गञ्च समांशानि दन्त्या भागत्रय भवेत् ।
त्रिवृद्विशाला द्विगुणा सातला स्याच्चतुर्गुणा ॥
एष नारायणो नाम चूर्णो रोगगणापह ।
एन प्राप्य निवर्त्तन्ते रोगा विष्णुमिवासुरा ॥
सामुद्राद्य तथा चूर्ण सान्न साज्य निषेवितम् ।
उदारमुदर हन्ति गदान् गुल्मादिकांस्तथा ॥

विन्दु-महाविन्दु-नाराच वृहन्नाराचाख्यानि घृतानि चतुर्माषकमानानि यथाबलयथादोषमात्राणि वा प्रयुञ्जीत ।

शोथाधिकारोक्तो माणमण्डोऽप्यत्र देय ।

इच्छाभेदि नाराच जलोदरारिरस शोथोदरारिलौहाभयावटी श्रीवैद्यनाथादेशवटिकाद्यानि भेषजानि यथादोषानुपानानि देयानि ।

जलोदरे शस्त्रप्रयोगविधि ।

उदरे जातसलिले गरे चापि जलोदरे ।
भेषजे वितथे तत्र शस्त्रं युञ्ज्याद्विचक्षण ॥
सव्ये पार्श्वे शयानस्य स्निग्धस्विन्नस्य रोगिण ।
आप्तै परिगृहीतस्य सान्त्वितस्य सुहृज्जनै ॥
औपस्थिकास्थि नाभ्यन्तरङ्गुष्ठोदरमात्रकम्।
त्रिकूर्चकेन सविध्येद्गाढ व्रीहिमुखेन वा॥
त्रप्वाद्यन्यतमकृता द्विद्वारा नाडिका तत ।
सयोज्य दोषसलिलमवसिञ्चेत् क्रमेण हि ॥
नैकस्मिन्नेव दिवसे नैखिल्येनाहरेज्जलम्।
सहसाखिलदोषाणा निर्हाराज्ज्वरतर्षणे ॥
भ्रमसोहौ पाददाहो वैवर्ण्यमङ्गमर्दनम ।
श्वासकासातिसाराश्च जायन्ते वा मृतिस्तथा ॥
अहरेकमथो द्वे वा गमयित्वाल्पमल्पकम्।
हरेद्दोषाम्बु विधिना भिषग् वीक्ष्य बलाबलम् ॥
नि सुते नि सुते दोषे वाससा पृथुनोदरम्।
वेष्टयेच्चर्मणा वापि वायुर्नाध्मापयेद्यथा ॥
षण्मासान् पयसैव वा जाङ्गलेन रसेन वा।
त्रीन् मासानर्द्धतोयेन पयसा वा रसेन वा ॥
मासत्रय ततोऽन्नेन लघुना जीवयेत् परम्।
गदो सवत्सरेणैव भाग्यतश्चागदी भवेत् ॥
आस्थापने चैव विरेचने च पाने तथाहारविधिक्रियासु।
सत्वादरिष्य कुशलै प्रयोज्य
क्षीर भृत जाङ्गलजो रसो वा ॥

## वारिशोषणो रस ।

चतुर्व्विंशति भागा स्युर्गन्धाद वङ्ग तदर्द्धकम् ।
वङ्गभागाद भवेदर्द्ध पारद कृष्णमभ्रकम् ॥
चतुर्द्दशविभाग स्यान मृत तद्दीयते पुन ।
मृतलौहमष्टभाग मृतताम्रनवात्र तत् ॥
मृतहेमद्वय तेषा मृतरूप्यञ्च सप्तकम् ।
अतिसूक्ष्ममतिस्थूल मृत चोर त्रयोदश ॥
भागा ग्राह्या माक्षिकस्य विशुद्धस्यात्र षोडश ।
अष्टादशमित ग्राह्य नव काशीशक पुन ॥
तुल्यकञ्च षडेरात्र नवीन ग्राह्यमेव च ।
तालकञ्च चतुर्भाग शिला योज्यास्त्रयो बुधे ॥
शैलेय पञ्च दातव्य सर्व्वमेकत्र नूतनम ।
मृत मौक्तिकभागैक सौभाग्य द्वयमेव च ॥
कुट्टयित्वा विचूर्ण्याथ जम्बीरस्य रसेन वै ।
भावयेत सप्तधा गाढ गुडिका तस्य कारयेत ॥
पानक द्वितये कृत्वा मुद्रयेत पानकद्वयम ।
घटमध्ये निवेश्याथ दत्वा पूर्व्वञ्च बालुकाम् ॥
ऊर्द्ध्वञ्च ता पुनर्दत्त्वा बालुका मुद्रयेन्मुखम् ।
अहोरात्र दहेदग्नौ स्वाङ्गशीत समुद्धरेत् ॥
वकुलस्य च वीजेन कण्टकारीद्वयेन च ।
गुडूची त्रिफला वारा भावयेत् सप्त सप्तत ॥
वृद्धदार रसेनापि तथा देयास्तु भावना ।
गिरिकन्यारसेनापि रोहित मत्स्यपित्तत ॥
एव सिद्धो भवेत् सम्यक् रसोऽसौ वारिशोषण ।

( ८, ८ )

देवान् गुरूण् समभ्यच्चर यतिन साधुमज्जनान् ॥
रक्तिकाद्वितय देय सन्निपाते समुच्छ्रये ।
मरिचेन सम देय तेन जागर्त्ति मानव ॥
जलोदरे यकृद्रोगे शोथे सार्व्वाङ्गिके तथा ।
श्लैष्मिके च गदे देय ग्रहण्यामग्निमान्द्यके ॥
शोङ्कि पाण्डौ प्रयोक्तव्य त्रिकटु त्रिफलाम्भसा
शूलरोगे प्रयोक्तव्यमम्लपित्ते विशेषत ॥
कुष्ठे सुदुष्टे देयाऽय काकोडुम्बरिकाम्भसा
अति वह्निकर श्रोटो बलवर्णाग्निवर्द्धन ॥
धन्वन्तरिकृत सद्यो रस परमदुर्लभ ।
सर्व्वरोगे प्रयोक्तव्या नि सन्देह भिषग्वर ॥

उदर पथ्यापथ्यानि ।

अब्दोत्पन्ना रक्तशालि यव मुद्ग कुलत्थका ।
माक्षिकञ्च सुरा सीधुर्जाङ्गला मृगपक्षिण ॥
रसोनमार्द्रक तक्र कुलक शिग्रुज फलम् ।
पुनर्नवा कारवेल्ल ताम्बूलैले पयस्तथा ॥
लघ्वन्न दीपन तिक्त वोच्य दोषानलौ बलम् ।
युञ्ज्यादुदरिणे वैद्य इत्याद्यानि यथातथम् ॥
पयोऽतिपान गुर्व्वन्न स्नेहन धूमसेवनम् ।
औदकानूपमासानि पत्रशाक तिलो दधि ॥
लवणाद्यन्नमुष्णानि विदाहीन्यम्बुदोषवत् ।
महेन्द्राद्रिभवानाञ्च सरिता सलिल तथा ॥

व्यायामश्च व्यवायश्च स्नान चङ्क्रमण तथा ।
एवम्विधानि चान्यानि त्याज्यान्युदरिभि सदा ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
उदररोगो दशमोऽध्याय ।

---

## एकादशोऽध्याय. ।

---

### अथ रक्तपित्ताधिकार ।

रक्तपित्तस्य निदानपूर्व्विका सम्प्राप्ति ।

घर्म्मव्यायामशोकाध्वव्यवायैरतिसेवितै ।
तीक्ष्णोष्णक्षारलवणैरम्लै कटुभिरेव च ॥
पित्त विदग्ध स्वगुणैर्विदहत्याशु शोणितम् ।
तत प्रवर्त्तते रक्तमूर्द्ध्वञ्चाधो द्विधापि वा ॥
आमाशयाद्व्रजेदूर्द्ध्वमध पक्वाशयाद्व्रजेत् ।
ऊर्द्ध्व नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरध ॥
कुपित रोमकूपैश्च समस्तैस्तत् प्रवर्त्तते ॥

तस्य पूर्व्वरूपम् ।

सदन शीतकामित्व कण्ठधूमायन वमि ।
लोहगन्धिश्च नि श्वासो भवत्यस्मिन् भविष्यति ॥
अपिच । विदाहोऽन्नस्य दौर्ब्बल्य गात्राणा सदन तथा ।
रक्तहरितहारिद्रशकृन्मूत्रादितारुचि ॥
द्रवलोहास्रमत्स्यामगन्धि श्वासोऽ मवेदना ।

पूर्व्वरूपाणि निर्द्दिष्टान्यस्रपित्ते भविष्यति ॥

अन्यच्च । नीललोहितपीताना श्यावानाञ्चाप्यभीक्ष्णश ।

अर्च्चिष्मताञ्च वस्तूना स्वप्ने दर्शनमङ्गतम ॥

तस्य विशिष्ट रूपम् ।

सान्द्रे सपाण्डु सस्नेह पिच्छिलञ्च कफान्वितम् ।

श्यावारुण सफेनञ्च तनु रूक्षञ्च वातिकम् ।

रक्तपित्त कषायाभ कृष्ण गोमूत्रसन्निभम् ।

मेचकागारधूमाभमञ्जनाभञ्च पैत्तिकम् ॥

संसृष्टलिङ्ग ससर्गात् त्रिलिङ्ग सान्निपातिकम ॥

ससर्गभेदेन मार्गभेद ।

ऊर्द्ध्वग कफसंसृष्टमधोग पवनानुगम् ।

द्विमार्ग कफवाताभ्यासुभाभ्यामनुवर्त्तते ॥

तस्य साध्यत्वादिकम् ।

ऊर्द्ध्व साध्यमधो याप्यमसाध्य युगपद्गतम् ।

एकदोषानुग साध्य द्विदोष याप्यमुच्यते ॥

यत् त्रिदोषमसाध्य स्यान्मन्दाग्नेरतिवेगवत् ।

व्याधिभि क्षीणदेहस्य वृद्धस्यानश्नतश्च यत् ॥

एकमार्ग बलवती नातिवेग नवोत्थितम् ।

रक्तपित्त सुखे काले साध्य स्यान्निरुपद्रवम् ॥

तस्योपद्रवा ।

दौर्ब्बल्यश्वासकासज्वरवमथुमदा पाण्डुतादाहमूर्च्छा

भुक्ते घोरो विदाहस्त्वधृतिरपि सदा हृद्यतुल्या च पीडा ।

तृष्णा कोष्ठस्य भेद शिरसि च तपन पूतिनिष्ठीवनञ्च

भक्तद्वेषाविपाकौ विकृतिरपि भवेद्रक्तपित्तोपसर्गात् ॥

तस्यारिष्ट लक्षणम् ।

मामप्रक्षालनाभ क्वथितमति च यत् कर्द्दमाम्भोनिभ वा
मेद पूयास्रकल्प यकृदिव यदि वा पक्वजम्बूफलाभम ।
यत् कृष्ण यच्च नील भृशमतिकुणप यत्र चोक्ता विकारा-
स्तद्वर्ज्य रक्तपित्त सुरपतिधनुषा यच्च तुल्य विभाति ॥

येन चोपहतो रक्त रक्तपित्तेन मानव ।
पश्येद्दृश्य वियच्चापि तच्चासाध्यमसशयम् ॥
लोहित छर्द्दयेद्यस्तु बहुशो लोहितेक्षण ।
लोहितोद्गारदर्शी च म्रियते रक्तपैत्तिक ॥
वाससो रञ्जन यत स्याद्दलमासविशातनम् ।
ऊर्द्ध्वगे रोमकूपेभ्य प्रवृत्तच्चाप्रतिक्रियम ॥

अथ रक्तपित्तस्य चिकित्सा ।

पित्तास्र स्तम्भयेन्नादौ प्रवृत्त बलिनो यत ।
हृत्पाण्डुग्रहणीकुष्ठप्लीहगुल्मज्वरादिकृत् ॥
अध प्रवृत्त वमनैरूर्द्ध्वगञ्च विरेचनै ।
जयेदन्यतरच्चापि क्षीणस्य शमनैरसृक् ॥
अतिप्रवृत्तदोषस्य पूर्व्व लोहितपित्तिन ।
अक्षीणबलमासाग्ने कर्त्तव्यमपतर्पणम ॥
लङ्घितस्य तत पेया विदध्यात् स्वल्पतण्डुलाम ।
तर्पण पाचन लेह्यान् सपीषि विविधानि च ॥
द्राक्षामधुककाश्मर्य्यसितायुक्त विरेचनम ।
यष्टीमधुकयुक्तञ्च सक्षौद्र वमन हितम् ॥
वृषपत्राणि निष्पीड्य रस समधुशर्करम् ॥
पिबेत्तेन शम याति रक्तपित्त सुदारुणम् ॥

वासकपत्र पुटेन पक्का तद्रसो ग्राह्य, इति वृद्धोपदेश ।
अभया मधुसयुक्ता पाचनी दीपनी मता ।
श्लेष्माण रक्तपित्तञ्च हन्ति शूलातिसारनुत् ॥
समाक्षिक फल्गुफलोद्भवो वा
पीतो रस शोणितमाशु हन्ति ॥
पक्कोडुम्बरकाश्मर्य्यपथ्याखर्ज्जूरगोस्तना ।
मधुना घ्नन्ति सलीढा रक्तपित्त पृथक् पृथक् ॥
वासकस्वरसे पथ्या सप्तधा परिभाविता ।
कृष्णा वा मधुना लीढा रक्तपित्त जयेद्द्रुतम ॥
खदिरस्य प्रियङ्गूणा कोविदारस्य शाल्मले ।
पुष्प चूर्णन्तु मधुना लिहन्नारोग्यमश्नुते ॥
लाक्षाचूर्ण सुक्षत क्षौद्राज्यसमन्वित सकृल्लीढम ।
शमयति सोद्धतवमन सरक्तपित्तस्य सिद्धमिदम ॥
घ्राणप्रवृत्ते जलमाशु देय
सशर्कर नासिकया पयो वा ।
द्राक्षारस क्षीरघृत पिबेद्वा
सशर्कर चेक्षुरस हित वा ॥
नस्य दाडिमपुष्पोत्थो रसो दूर्व्वाभवोऽथवा ।
आम्रास्थिज पलाण्डोर्वा नासिकास्रुतरक्तजित ॥
रसो दाडिमपुष्पस्य दूर्व्वारससमन्वित ।
अलक्तकरसोपेत पथ्यया वा समन्वित ॥
योजितो नस्यत क्षिप्र त्रिदोषमपि देहिनाम
नासाप्रवृत्त रक्तन्तु हन्यादेव न सशय ॥
नासाप्रवृत्तरुधिर घृतभृष्ट श्लक्ष्णपिष्टमामलकम्

सेतुरिव तोयवेग रुणद्धि मूर्द्ध्नि प्रलेपेन ॥
मेढ्रगेऽतिप्रवृत्ते तु वस्तिरुत्तरसञ्ज्ञित ।
शृत क्षीर पिबेद्वापि पञ्चमूल्या तृणाह्वया ॥
शतावरी गोक्षुरकै शृत वा
शृत पयो वाप्यथ पर्णिनीभि ।
रक्त छिनत्त्याशु विशेषतस्तु
यन्मूत्रमार्गात सरुज प्रयाति ॥
नासाप्रवृत्ते रुधिरे कर्म्म यद्भाषित मया ।
श्रुत्यादिभ्य स्रुते चापि वाह्य तद्धि हित मतम ॥
भेषज शमन चान्यत सर्व्वत्राभ्यन्तर समम ॥
छाग पयो लोहितचन्दनेनविल्वारुणा कौटजवल्कलेन ।
आभारसेनापि विपक्कमाशु
छिनत्ति पित्तास्रमध प्रवाहि ॥
रक्तातिसारयोगाश्च पित्तास्रेऽधोविसारिणि ।
असृग्दरहिताश्चापि योजयेत् कुशलो भिषक् ॥
जम्ब्वर्ज्जुनाम्रक्वथितञ्च तोय
करञ्जवोज मधुसर्पिषो च ।
मूलानि पुष्पाणि च मातुलुङ्गा
पिष्ट्वा पिबेत्तण्डुलधावनेन ॥
धन्वजानामसृग् लिह्यान्मधुना मृगपक्षिणाम् ।
सक्षौद्र ग्रथिते रक्ते लिह्यात् पारावत शकृत् ॥
वासाघृत दूर्व्वाद्यघृत तथा यक्ष्माधिकारोक्तानि घृतानि चात्र देयानि। सर्व्वाण्येव छागदुग्धाद्यनुपानानि प्रायेण द्वादशमाषकमात्राणि च प्रयोज्यानि ।

उशीरादिचूर्णैलादिगुडिका कुष्माण्डखण्ड वासाकूष्माण्ड खण्ड वासाखण्ड समशर्करलौह खण्डकाद्यलौहादीनि भेषजानि यथातथ छागादिदुग्ध मासरसाद्यनुपानानि यथादोषानुपानानि वा प्रायेण पक्वमाषकमानान्यत्र प्रयुज्यन्ते ।

रक्तपित्तान्तकलौहसुधानिधिरसाद्याष्यणुवटिका अत्र देया ।

ह्रीवेराद्यादीनि तैलानि चात्र मर्दनार्थं देयानि ।

रक्तपित्ते पथ्यापथ्यानि ।

पुराणा शालिगोधूमयवा मुद्गमसूरकौ ।
चणकस्तुवरी वृद्धकुष्माण्ड कदलीफलम् ॥
पटोलमपि वेत्राग्र फल पनसतालयो ।
विल्वदाडिमखर्ज्जर धात्री द्राक्षा उडुम्बरम ॥
परूषक नारिकेल कपित्थञ्च कशेरुकम ।
गव्य माहिषमाज वा सर्पिश्छाग पयस्तथा ॥
हिमव शीतसलिल चन्दन चन्द्ररश्मय ॥
मनोऽनुकूलमाख्यान श्रुतिरम्यञ्च कीर्तनम् ।
पीनोन्नतस्तनश्रोणिरम्याणा सुखवेशनाम् ॥
रूपयौवनमत्तानामाश्लेषो रमणं विना ।
एवंविधानि सर्व्वाणि हितानि रक्तपित्तिनाम ॥
ताम्बूल दिवानिद्रा विरुद्धानि पानान्न कोपमम्बु च ।
ताम्बूल दधि वार्त्ताकु मत्स्यो माषश्च सर्षप ॥
रसोनक्षारनिष्पावकुलत्थाश्च गुड सुरा ।
हययानयान व्यायाम क्रोध स्वप्नविपर्य्यय ॥
व्यवायोऽध्वाटन पाठ सन्तापो वह्निभास्वतो ।

रक्तस्रावो धूमपान क्षोभश्चपलता तथा ।
एवम्विधानि सर्व्वाणि वर्ज्जनीयानि नित्यश ॥
निदान रक्तपित्तस्य यत्किञ्चित् सम्प्रकाशितम् ।
जीविताऽऽरोग्यकामैस्तन्न सेव्य रक्तपित्तिभि ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
रक्तपित्ताधिकारैकादशोऽध्याय ।

---

## द्वादशोऽध्याय ।

### अथ राजयक्ष्माद्यधिकार ।

#### राजयक्ष्मणो निदानम् ।

वेगरोधात् क्षयाच्चैव साहसाद्विषमाशनात् ।
त्रिदोषो जायते यक्ष्मा गदो हेतुचतुष्टयात् ॥

#### तस्य सम्प्राप्ति ।

कफप्रधानैर्दोषैस्तु रुद्धेषु रसवर्त्मसु ।
अतिव्यवायिनो वापि क्षीणे रेतस्यनन्तरा ॥
क्षीयन्ते धातव सर्व्वे तत शुष्यति मानव ।

#### तस्य पूर्व्वरूपम् ।

श्वासाङ्गमर्द्दकफसंस्रवतालुशोष
वम्यग्निसादमदपीनसकासनिद्रा ।
शोषे भविष्यति भवन्ति स चापि जन्तु
शुक्लेक्षणो भवति मांसपरो रिरंसु ॥

स्वप्नेषु काकशुकशल्लकिनीलकण्ठ-
गृध्रास्तथैव कपय कृकलासकाश्च ।
त वाहयन्ति स नदीर्विजलाश्च पश्ये
च्छुष्कास्तरून् पवनधूमदवार्दिताश्च ॥

तस्य लक्षणम् ।

अंसपार्श्वाभितापश्च सन्ताप करपादयो ।
ज्वर सर्व्वाङ्गगश्चेति लक्षण राजयक्ष्मण ॥
अभिताप पीडा। सर्व्वाङ्गग सर्व्वधातुग ।

सुश्रुतोक्तानि षड्लक्षणानि ।

भक्तद्वेषो ज्वर श्वास कास शोणितदर्शनम् ।
स्वरभेदश्च जायन्ते षड्रूपे राजयक्ष्मणि ॥

तस्यैकादश लक्षणानि ।

स्वरभेदोऽनिलाच्छूल सङ्कोचश्चासपार्श्वयो' ।
ज्वरो दाहोऽतिसारश्च पित्ताद्रक्तस्य चागम ॥
शिरस परिपूर्णत्वमभक्तच्छन्द एव च ।
कास कण्ठस्य चोद्ध्वंसो विज्ञेय कफकोपत ॥
एक एव मत शोष सन्निपातात्मको गद ।
उद्रेकात् तत्र लिङ्गानि दोषाणा निपतन्ति हि ॥
एकादशभिरेभिर्वा षड्भिर्वापि समन्वितम् ।
त्रिभिर्वा पीडित लिङ्गैर्ज्वरकासासृगामयै ॥
जह्याच्छोषार्दित जन्तुमिच्छन् सुविमल यश ॥
तत्र विशेष । सर्व्वरर्द्धैस्त्रिभिर्वापि लिङ्गैर्मांसबलक्षये ।
युक्तो वर्ज्यश्चिकित्स्यस्तु सर्व्वरूपोऽप्यतोऽन्यथा ॥

ज्वरानुबन्धरहित बलवन्त क्रियासहम् ।
उपक्रमेदात्मवन्त दोप्ताग्निमकृश नरम ॥

यक्ष्मणोऽरिष्ट लक्षणम् ।

महाशन क्षीयमाणमतिसारनिपीडितम ।
शूनमुष्कोदरञ्चैव यक्ष्मिण परिवर्ज्जयेत् ॥
शुक्लाक्षमन्नद्वेष्टारमूर्द्ध्वश्वासनिपीडितम ।
कृच्छ्रेण बहुमेहन्त यक्ष्मा हन्तीह मानवम ॥
मेहन्त शुक्र क्षरन्तम् ।

यक्ष्मण स्थितिकालावधि ।

पर दिनसहस्रन्तु यदि जीवति मानव ।
सुभिषग्भिरुपक्रान्तस्तरुण शोषपीडित ॥

अस्यार्थ । शोषपीडितो मानवश्चेत् तरुणो भवन्ति सुभिषग्भिरुपक्रान्तो भवति तदा पर दिनसहस्र द्वितीय दिनसहस्र यदि जीवति तत्र जीवनविकल्प इत्यथ । एतेन शोषपीडितो मानवश्चेत तरुणो भवति सद्वैद्यैश्चि कित्सितो भवति तदा प्रथमदिनसहस्र जीवेदेवेत्युक्तम । ( इति भाव प्रकाश )।

व्यवायशोकवार्द्धक्यव्यायामाध्वप्रशोषितान् ।
व्रणोर क्षतसञ्ज्ञौ च शोषिणौ लक्षणै शृणु ॥
व्यवायशोषी शुक्रस्य क्षयलिङ्गैरुपद्रुत ।
पाण्डुदेहो यथापूर्व्व क्षीयन्ते चास्य धातव ॥
प्रध्यानशील स्रस्ताङ्ग शोकशोष्यपि तादृश ।
विना शुक्रक्षयकृतैर्विकारैरुपलक्षित ॥

प्रध्यानशील यस्याभावेन शोको जनितस्तद्ध्यानपर। स्रस्ताङ्ग शिथिलाङ्ग। तादृश व्यवायशोषिसदृश। तेन शुक्रादिसर्व्वधातुक्षययुक्तो भवति। पर शुक्रक्षयकृतैर्विकारै र्मेढ्रवृषणवेदनादिभिर्वर्ज्जितो भवति व्याधिस्वभावात्।

जराशोषी कृशो मन्दवुद्धिवीर्य्यबलेन्द्रिय।
कम्पनोऽरुचिमान् भिन्नकांस्यपात्रहतस्वर॥
ष्ठीवति श्लेष्मणा हीन गौरवारतिपीडित।
सप्रस्रुतास्यनासाक्ष शुष्करूक्षमलच्छवि॥
अध्वप्रशोषी स्रस्ताङ्ग सम्भृष्टपरुषच्छवि।
प्रसुप्तगात्रावयव शुष्कक्लोमगलानन॥
व्यायामशोषी भूयिष्ठमेभिरेव समन्वित।
लिङ्गरुर क्षतकृत संयुक्तश्च क्षत विना।
रक्तक्षयाद्वेदनाभिस्तथैवाहारयन्त्रणात।
व्रणितस्य भवेच्छोष स चासाध्यतम स्मृत॥
धनुषायस्यतोऽत्यर्थं भारमुद्वहतो गुरुम्।
युध्यमानस्य बलिभि पततो विषमोच्चत॥
वृष हय वा धावन्त दम्य वान्य निगृह्णत।
शिलाकाष्ठाश्मनिर्घातान् क्षिपतो निघ्नत परान्॥
अधीयानस्य वात्युच्चैर्दूर वा व्रजतो द्रुतम।
महानदी वा तरतो हयैर्वा सह धावत॥
सहसोत्पततो दूर तूर्णं चापि प्रनृत्यत।
तथान्यै कर्म्मभि क्रूरैर्भृशमभ्याहतस्य वा॥
स्त्रीषु चातिप्रसक्तस्य रूक्षाल्पप्रमिताशिन।
विक्षते वक्षसि व्याधिर्बलवान् समुदीर्य्यते॥

उरो विरुज्यतेऽत्यर्थं भिद्यतेऽथ विभज्यते ।
प्रपोड्येते तत पार्श्वे शुष्यत्यङ्ग प्रवेपते ॥
क्रमाद्वीर्य्य बल वर्णो रुचिरग्निश्च क्षीयते ।
ज्वरो व्यथा मनोदन्य विड्भेदोऽग्निबधस्तथा ॥
दुष्ट श्याव सुदुर्गन्ध पोता विग्रथितो बहु ।
कासमानस्य चाभीक्ष्ण कफ सासृक् प्रवर्त्तते ॥
स क्षत क्षोयतेऽत्यर्थं तथा शुक्रौजसो क्षयात् ।
अव्यक्त लक्षण तस्य पूर्व्वरूपमिति स्मृतम् ॥

उर क्षतस्य सुश्रुतोक्त निदानादिकम् ।

व्यायामभाराध्ययनैरभिघातातिमैथुनै ।
कर्म्मणा चाप्युरस्येन वक्षो यस्य विदारितम् ॥
तस्योरसि क्षते रक्त पूय श्लेष्मा च गच्छति ।
कासमानश्छर्द्दयेच्च पोतरक्तासितारुणम् ॥
सन्तप्तवक्षा सोऽत्यर्थं दूयनात् परिताम्यति ।
दुर्गन्धवदनोच्छ्वासो भिन्नवर्णस्वरो नव ॥

उर क्षतस्य विशिष्ट लक्षणम् ।

उरोरुक् शोणितच्छर्द्दि कासो वशेषिक क्षते ।
क्षोणे सरक्तमूत्रत्व पार्श्वपृष्ठकटिग्रह ॥
नते उर क्षतवति उरोरुक् शोणितच्छर्दि कासो वैशेषिका
तो भवत्येव । अस्मिन् उर क्षतवति सास्रकफशुक्रौजसा
क्षोणे सरक्तमूत्रत्व पार्श्वपृष्ठकटिग्रहश्च भवति ।

उर क्षतस्य साध्यत्वादिकम् ।

अल्पलिङ्गस्य दोप्ताग्ने साध्यो बलवतो नर ।
परिसवत्सरो याप्य सर्व्वलिङ्गन्तु वर्ज्जयेत् ॥

(द, ८)

अथ राजयक्ष्मचिकित्सा ।

बलिनो बहुदोषस्य पञ्चकर्म्माणि कारयेत् ।
यक्ष्मिणः क्षीणदेहस्य तत् क्षतं स्याद्विषोपमम् ॥
मलायत्तं बलं पुंसां शुक्रायत्तन्तु जीवनम् ।
तस्माद्यत्नेन संरक्षेद्यक्ष्मिणो मलरेतसी ॥
शालिषष्टिकगोधूमयवमुद्गादयो हिताः ।
मद्यानि जाङ्गलाः पक्षिमृगाः शस्ता विशुष्यताम् ॥
सपिप्पलीकं सयवं सकुलत्थं सनागरम् ।
दाडिमामलकोपेतं स्निग्धमाजं रसं पिबेत् ॥
द्रव्यतो द्विगुणं मांसं सर्व्वतोऽष्टगुणं जलम् ।
पादस्थं संस्कृतञ्चाज्ये षडङ्गो यूष उच्यते ॥

यव पल १ । कुलत्थ पल १ । छागमांस पलानि ४ । जल पलानि ४८ । शेष पलानि १२ । तत पलमितेन घृतेन संस्करणीयम् । तत्र कर्षमितं सैन्धवं देयम् । सौरभार्थं हिङ्गु देयम् । पिप्पली नागरञ्च पृथङ्माषमितं कल्कीकृत्य देयम् । दाडिमामलकाभ्यामम्लं साध्यम् ।

पारावतकपिच्छागकुरङ्गाणां पृथक् पृथक् ।
मांसं चूर्णं मजाक्षीरैः पीतं क्षयहरं परम् ॥
छागं मांसं पयश्छागं छागं सर्पिः सशर्करम् * ।
छागोपसेवा शयनं छागमध्ये तु यक्ष्मनुत् ॥
शर्करामधुसंयुक्तं नवनीतं लिहन् क्षयी ।
क्षीराशी लभते पुष्टिमतुल्ये चाज्यमाक्षिके ॥
घृतकुसुमरसालीढं क्षयं क्षयं नयति गजवल्लीमूलम् ॥

* सशर्करमित्यत्र सनागरमिति पाठान्तरम्

दुग्धेन केवलेन च वायसजङ्घा निपीतैव ॥
ककुभत्वङ् नागबला वानरीबीज विचूर्णित पयसा ।
पीत मधुघृतसयुक्त ससित यक्ष्मादिकामहरम ॥
धन्याकपिप्पलीविश्वदशमूलीजल पिबेत् ।
पार्श्वशूलज्वरश्वासपीनसादिनिवृत्तये ॥
कृष्णाद्राक्षासितालेह क्षयहा क्षौद्रतैलवान् ।
मधुसर्पिर्युतो वाश्वगन्धाकृष्णासितोद्भव ॥

सर्पिर्मधुभ्या त्रिकटु प्रलिह्या-
च्चव्याविडङ्गोपहित क्षयार्त्त ।
मासादमासेषु घृतञ्च सिद्ध
शोषापह क्षौद्रकणासमेतम् ॥

मधुताप्यविडङ्गाश्मजतुलौहघृताभया ।
घ्नन्ति यक्ष्माणमत्युग्र सेव्यमाना हिताशिना ॥
शतपुष्पा समधुक कुष्ठ तगरचन्दनम् ।
आलेपन स्यात् सघृत शिर पार्श्वांसशूलनुत् ॥
बला रास्ना तिला सर्पिर्मधुक नीलमुत्पलम् ।
पलङ्कषा देवदारु चन्दन केशर घृतम् ॥
वीरा बला विदारी च कुष्ठगन्धि पुनर्नवा ।
शतावरी पयस्या च कर्तृणं मधुक घृतम् ॥,
चत्वार एते श्लोकार्द्धे प्रदेहा परिकीर्त्तिता ।
शस्ता सद्वन्द्वदोषाणा शिर पार्श्वांसशूलिनाम् ॥
अम्लकरसे क्षौद्र रक्तवान्तिहर परम् ।
विशल्यकरणीक्वाथ कुकुरद्रुद्रवस्तथा ॥
यष्ट्याह्व चन्दनोपेत सम्यक्क्षीरप्रपेषितम् ।

क्षीरेणालोड्य पातव्य रुधिरच्छर्दिनाशनम् ॥
चन्दनमत्र रक्तं सङ्कोचनगुणत्वात् ।

---

व्यवायादिहेतुकाना शोषाणा चिकित्सा ।

तत्र व्यवायशोषस्य चिकित्सा ।

व्यवायशोषिण क्षीररसमासाज्यभोजनै ।
कुशलैर्मधुरैर्हृद्यजीवनीयैरुपाचरेत् ॥

शोकशोषस्य चिकित्सा ।

हर्षणाश्वासनै क्षीरै स्निग्धैर्मधुरशीतलै ।
दीपनैर्लघुभिश्चान्नै शोकशोषमुपाचरेत् ॥
व्यायामशोषिण स्निग्धै क्षतक्षयहितैर्हिमै ।
उपाचरेज्जीवनीयैर्विधिना श्लैष्मिकेण तु ॥

अध्वशोषस्य चिकित्सा ।

आस्यासुखैर्दिवास्वप्नै शीतैर्मधुरबृंहणै ।
अन्नमासरसाहारैरध्वशोषमुपाचरेत् ॥

व्रणशोषस्य चिकित्सा ।

व्रणशोष जयेत् स्निग्धैर्दीपनै स्वादुशीतलै ।
ईषदम्लैरनम्लैर्वा यूषमासरसादिभि ॥

उर क्षतस्य चिकित्सा ।

बलाश्वगन्धाश्रीपर्णीबहुपुत्रीपुनर्नवा ।
पयसा नित्यमभ्यस्ता शमयन्ति क्षतक्षयम् ॥

द्राक्षाघृतम् ।

द्राक्षाया प्रस्थमेकन्तु मधुकस्य पलाष्टकम् ।
पचेत्तोयाढके शुद्धे पादशेषेण तेन तु ॥

पलिके मधुकद्राक्षे पिष्टे कृष्णापलद्वयम् ।
प्रदाय सर्पिष प्रस्थ पचेत् क्षीरे चतुर्गुणे ॥
सिद्धे शीते पलान्यष्टौ शर्कराया प्रदापयेत् ।
एतद्द्राक्षाघृत सिद्ध क्षतक्षीणे सुखावहम् ॥
वात पित्त ज्वरश्वासविस्फोटकहलीमकान् ।
प्रदर रक्तपित्तञ्च हन्यान्मासबलप्रदम् ॥
वासाकुष्माण्डखण्डञ्च तद्वै ागुडिकामिह ।
रक्तपित्ताधिकारोक्तान् योगानन्यांश्च योजयेत् ।
यद्यच्च तर्पण शीतमविदाहि हित लघु ।
अन्नपान निषेव्य तत् क्षतक्षीणै सुखार्थिभि ॥
अजापञ्चकसञ्ज्ञञ्च जीवन्त्याद्य घृत तथा ।
लेह्यौ च च्यवनप्राशबृहद्वासाभिधानकौ ॥
सितोपलाद्य लेहञ्च यक्ष्मशोषिषु योजयेत् ॥
चूडामणिरसो देयो रसो राजमृगाङ्कक ।
महामृगाङ्कसञ्ज्ञश्च मृगाङ्काख्यश्च यो रस ॥
काञ्चनाभ्रश्च यक्ष्मारिलौह यक्ष्मान्तक तथा ।
शिलाजत्वादिलौहञ्च रसेन्द्रगुडिकापि च ॥
वक्ष्यमाणश्च कासेषु रस सर्व्वाङ्गसुन्दर ।
वसन्ततिलकोऽन्ये च राजयक्ष्मण्युर क्षते ॥

प्रमेहादिजनित यक्ष्मा ।

मेहेन चोपदंशेन रसेन देहगेन वा ।
धातुर्विकृतिमापन्नो यक्ष्माण जनयेदपि ॥
शिरोरुहाणा पतन निशास्वेदश्च जायते ।
रक्तनिष्ठीवनश्वासौ बलमासक्षयादय ॥

यक्ष्मामयाविना स्वप्ने रेतमश्च च्युतिर्भवेत्।
कस्तूरीप्रमुख तत्र निशास्वेदोपशान्तये॥
प्रलापे च प्रयोक्तव्य भेषज भिषजा वर॥

निशास्वेद रात्रौ खिन्नगात्रत्वम्।

यक्ष्मामये त्रिदोषोत्थे त्वचिरात् क्षयकारिणि।
भवेद्वैकालिको वापि ज्वरस्त्रैकालिकोऽपि वा।
अनिश जायते स्वेदो बुभुक्षा न प्रवर्त्तते।
करणानि विषीदेयु शय्या चाश्रोयतेतराम्॥
कश्चिदेव प्रमुच्येत गदादस्मात् सुदुस्तरात्।
प्रवालभस्म कस्तूरी मृतसञ्जीवनी तथा॥
अरिष्टमासवश्चात्र गदे सात्म्रमनुत्तमम्।
वोजन तालवृन्तेन स्वेदसन्ततिशान्तये॥
बलपुष्ट्यर्थक पथ्य मासयूष प्रकल्पयेत्।
अधिकारगतानन्यानगदान् सान्निपातिके॥
मेहजे चोपदशोत्थे रसोद्भूते च यक्ष्मणि।
प्रयुञ्जीत समोच्यापि गदागदबलाबलम्॥
वासारिष्ट मस्रहरारिष्ट मृगमदासव।
मृतसञ्जीवनी चैव कर्पूरासव एव च॥
उर क्षत रक्तपित्त राजयक्ष्माणमेव च।
कास पञ्चविधञ्चैव नाशयेदविकल्पत॥
उपद्रवा ज्वराद्यन्ये साध्या स्वै स्वैश्चिकित्सितै।
तेषु शान्तेषु रोगेषु पश्चाच्छोषमुपाचरेत्॥
श्लेष्मणश्चोर्द्ध्वगामित्वादुपदशादि दोषत।
जनयेत् शोणितो दुष्ट कण्ठे क्षत रुजान्वितम्॥

क्रमेणोर समाश्रित्य यक्ष्माणमतिदारुणम् ।
कास श्वास ज्वरञ्चैव रक्तनिष्ठीवनादिकम् ॥
यक्ष्मोक्तेन विधानेन चिकित्सेत् मतिमान् भिषक ।

कण्ठक्षतचिकित्सा ।

क्षीरिख्या वब्बुलस्यापि त्रिफला क्वाथकेऽपि च ।
प्रक्षिप्य टङ्कन चूर्ण कवल धारयेत्तत ॥
कण्ठक्षतादिनाशार्थं शिवेन भाषित पुरा ॥
कर्षमस्त्रहरारिष्ट मीषदुष्णास्य वारिण ।
पलद्वयेन सम्मिश्र कवल धारयेद्भिषक् ॥
कण्ठक्षत जयेदाशु तालुजिह्वादिकक्षतम् ॥

यक्ष्मणि पथ्यापथ्यनिर्णय ।

गोधूमश्चणको मुद्गो रक्तशालि पुरातन ।
छाग मास पयश्छाग छाग सर्पिश्च शर्करा ॥
मत्स्यखण्डिका च मदिरा कस्तूरी सितचन्दनम् ।
हर्म्यं स्रज स्मरकथा युवतीनाञ्च दर्शनम् ॥
मणिमुक्तादिभूषाणा धारण पवनो मृदु ।
धात्र्याम्रपनसानाञ्च फलानि वकुल फलम् ॥
गीत लास्य चन्द्ररश्मिर्गिर श्रुतिसुखप्रदा ।
एवम्भूतानि सर्व्वाणि शुभान्युक्तानि शोषिणाम् ॥
रूक्षान्नपान विषममशनञ्च विदाहि यत् ।
कटुतिक्तकषायाम्लशाकमाषरसोनका ॥
शिम्बी मत्स्यश्च ताम्बूल व्यायामो वेगधारणम् ।
साहसानि च कर्म्माणि श्रम स्वेदनमञ्जनम् ॥
उच्चसम्भाषण मार्गसेवन निशि जागर ।

विशेषतो निभुवन कर्म्मोरस्थमर्थतरत् ॥
निदानत्वेन गदित यच्च हेतुचतुष्टयम्।
सर्व्वाख्येतानि नियत वर्ज्जनीयानि यक्ष्मणि ॥
यत पथ्य यदपथ्यञ्च रक्तपित्ते मयोदितम्।
यक्ष्मण्यपि च तत् पथ्यमपथ्यञ्चापि तन्मतम् ॥

अन्यच्च। शोक स्त्रिय क्रोधमसूयताञ्च
त्यजेदुदारान् विषयान् भजेच्च।
तथा द्विजातीस्त्रिदशान् गुरूश्च
वाचश्च पुण्या शृणुयाद्दिजेभ्य ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
राजयक्ष्माधिकारो द्वादशोऽध्याय।

---

## त्रयोदशोऽध्याय।

अथ कासाधिकार।

कासस्य निदानसम्प्राप्तिपूर्व्वक सामान्यलक्षणम्।

धूमोपघाताद्रजसस्तथैव
व्यायामरूक्षान्ननिषेवणाच्च।
विमार्गगत्वाच्च हि भोजनस्य
वेगावरोधात् क्षवथोस्तथैव ॥
प्राणो ह्युदानानुगत प्रदुष्ट
सम्भिन्नकांस्यस्वनतुल्यघोष।

निरेति वक्त्रात् सहसा स दोषो
मनीषिभि कास इति प्रदिष्ट ॥
( स दोष तादृक् प्राणानिलरूप । सदोष इति समस्तपाठे सकफपित्त कफपित्तसहित प्राणानिल इत्यर्थ ) ।

पञ्च कासा स्मृता वातपित्तश्लेष्मक्षतक्षयै ।
क्षयायोपेक्षिता सर्व्वे बलिनश्चोत्तरोत्तरम् ॥
पूर्व्वरूप भवेत्तेषा शूकपूर्णगलास्यता ।
कण्ठे कण्डूश्च भोज्यानामवरोधश्च जायते ॥
( भोज्यानामवरोध कवलगिलने कण्ठव्यथा ) ।

वातिकस्य कासस्य लक्षणम् ।

हृच्छङ्खपार्श्वोदरमूर्द्धशूली
क्षामानन क्षीणबलस्वरौजा ।
प्रसक्तवेगस्तु समीरणेन
भिन्नस्वर कासति शुष्कमेव ॥

पैत्तिकस्य तस्य लक्षणम् ।

उरो विदाहज्वरवक्त्रशोषै-
रभ्यर्दितस्तिक्तमुखस्तृषार्त्त ।
पित्तेन पीतानि वमेत् कटूनि
कासेत् स पाण्डु परिदह्यमान ॥

श्लैष्मिकस्य लक्षणम् ।

प्रलिप्यमानेन मुखेन सीदन्
शिरोरुजार्त्त कफपूर्णदेह ।
अभक्तरुग्गौरवकण्डुयुक्त
कासेद्भृश सान्द्रकफ कफेन ॥

क्षतजस्य निदानपूर्व्विका सम्प्राप्तिः।

अतिव्यवायभाराध्वयुद्धश्वगजनिग्रहैः।
रूक्षस्योरः क्षतं वायुर्गृहीत्वा कासमावहेत्॥

तस्य लक्षणम्।

स पूर्व्वं कासते शुष्कं ततः ष्ठीवेत् सशोणितम्।
कण्ठेन रुजतात्यर्थं विभग्नेनेव चोरसा॥
सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना।
दुःखस्पर्शेन शूलेन भेदपीडाभितापिना॥
पर्व्वभेदज्वरश्वासतृष्णावैस्वर्य्यपीडितः।
पारावत इवाकूजन् कासवेगात् क्षतोद्भवात्॥

क्षयजस्य निदानपूर्व्विका सम्प्राप्तिः।

विषमासात्म्यभोज्यातिव्यवायाद्वेगनिग्रहात्।
घृणिना शोचतां नृणां व्यापन्नेऽग्नौ त्रयो मलाः।
कुपिताः क्षयजं कासं कुर्य्युर्देहक्षयप्रदम्॥

घृणिना विचिकित्सायुक्तानाम्।

तस्य लक्षणम्।

दुर्गन्धं हरितं श्यावं प्रततं कफमस्यति।
स्थानादुत्कासमानश्च हृदयं मन्यते च्युतम्।
अकस्मादुष्णशीतार्त्तो बह्वाशी दुर्व्बलः कृशः।
स्निग्धाच्छमुखवर्णत्वक् श्रीमद्दर्शनलोचनः॥
पाणिपादतले श्लक्ष्णे सततासूयको घृणी।
ज्वरो मिश्राकृतिस्तस्य पार्श्वरुक् पीनसोऽरुचिः॥
स गात्रशूलज्वरदाहमोहान्
प्राणक्षयञ्चोपलभेत कासी।

शुष्यन् विनिष्ठीवति दुर्ब्बलस्तु
प्रक्षीणमांसो रुधिर सपूयम् ॥
त सर्व्वलिङ्ग भृषदुश्चिकित्स्य
चिकित्सितज्ञा क्षयज वदन्ति ।
इत्येष क्षयज कास क्षीणाना देहनाशन ।
साध्यो बलवता वा स्याद्याप्यस्त्वेव क्षतोत्थित ॥
नवौ कदाचित् सिध्येतामपि पादगुणान्वितौ ॥
स्थविराणा जराकास सर्व्वो याप्य प्रकीर्त्तित ॥
त्रीन् पूर्व्वान् साधयेत् साध्यान् पथ्यैर्याप्यांस्तु यापयेत् ।

## कासस्य चिकित्सा ।

चिकित्सामत ऊर्द्धन्तु शृणु कासनिवर्हिणीम् ।
रूक्षस्यानिलज कासमादौ स्नेहैरुपाचरेत् ॥
घृते सपित्त सकफ जयेत् स्निग्धविरेचनै ॥
शटीशृङ्गीकणाभार्गीगुडवारिदयासकै ।
सतैलैर्वातकासघ्नो लेह्योऽयमपराजित ॥
पित्तकासे तनुकफे त्रिवृता मधुरैर्युताम् ।
दद्याद्घनकफे तिक्तैर्विरेकार्थं युता भिषक् ॥
द्राक्षामधुकखर्ज्जूर पिप्पलीमरिचान्वितम् ।
पित्तकासहर ह्येतल्लिह्यान्माक्षिकसर्पिषा ॥
बलिन वमनेनादौ शोधित कफकासिनम् ।
यवान्नै कटुरूक्षोष्णै कफघ्नैश्चाप्युपाचरेत् ॥
पार्श्वशूले ज्वरे श्वासे कासे श्लेष्मसमुद्भवे ।
पिप्पलीचूर्णसयुक्त दशमूलीजल पिबेत् ॥
स्वरस शृङ्गवेरस्य माक्षिकेण समन्वितम् ।

पाययेच्छ्वासकासघ्नं प्रतिश्यायकफापहम् ॥
कण्टकारीकृतः क्वाथः सकृष्णः सर्व्वकासहा ॥
विभीतकं घृताभ्यक्तं गोशकृत्परिवेष्टितम् ।
स्विन्नमग्नौ हरेत् कासं ध्रुवमास्यविधारितम् ॥
वासाया स्वरसः पेयो मधुयुक्तो हिताशिना ।
पित्तश्लेष्मकृते कासे रक्तपित्ते विशेषतः ॥
वासाया स्वरसं पूतं कणामाक्षिकसंयुतम् ।
अभ्यासान्मुच्यते पीत्वाप्यासाध्यात् कासरोगतः ॥
( पुटपाकेन उत्स्विन्नं वासकस्य रसो ग्राह्यः । अत्र क्वाथं व्यवहरन्ति वृद्धाः । )
समूलं चित्रकञ्चैव पिप्पलीचूर्णकं हरेत् ।
कासं श्वासञ्च हिक्काञ्च मधुयुक्तं द्विजोत्तम ॥
पिप्पलीमधुकं द्राक्षा लाक्षा शृङ्गी शतावरी ।
द्विगुणा च तुगाक्षीरी सिता सर्व्वैश्चतुर्गुणा ॥
लेहोऽयं मधुसर्पिर्भ्यां क्षतकासनिवर्हणः ॥
मुस्तकं पिप्पली द्राक्षा सुपक्वं वृहतीफलम् ।
घृतक्षौद्रयुतो लेहः क्षयकासनिवर्हणः ॥
हरीतकीनागरमुस्तचूर्णं गुडेन तुल्यं गुडिका विधेया ।
निवारयत्यास्यविधारितेयं
श्वासं प्रवृद्धं प्रबलञ्च कासम् ॥
मनःशिलालमरिचमांसीमुस्तेङ्गुदैः पिबेत् ।
धूमं त्र्यहञ्च तस्यानु सगुडञ्च पयः पिबेत् ॥
एवं कासान् पृथग् द्वन्द्वसर्व्वदोषसमुद्भवान् ।
शतैरपि प्रयोगाणां साधयेदप्रमादितान् ॥

मन शिला लिप्तदल वदर्य्या उपशोषितम् ।
सक्षीर धूमपानञ्च महाकासनिवर्हणम ॥

मरिचाद्यचूर्ण समशर्करचूर्ण व्याघ्रीहरीतकी वासाव-लेह तालिशाद्यमोदक पञ्चामृतरस चन्द्रामृतरस महाकालेश्वर-रस कासंसहारभैरव रसेन्द्रगुडिका समशर्करलौह कासलक्ष्मीवि लास शृङ्गाराभ्र-सर्व्वाङ्गसुन्दररस वसन्ततिलकाद्यान्यपि भेष-जानि यथादोषानुपानान्यत्र देयानि । छागाद्य घृतमपि कासे हितम् । चन्दनाद्य वासाचन्दनाद्यञ्च तैलमत्र शुभदम् ।

कासे पथ्यापथ्यानि ।

शालिषष्टिकगोधूमश्यामाकयवकोद्रवा ।
माषमुद्गकुलत्थाना रसा सपि पुरातनम् ॥
वास्तूक वायसीशाक वार्त्ताकुर्बालमूलकम् ।
छाग दुग्ध घृत छाग सुरोष्णसलिल मधु ॥
धन्वानूपभवानाञ्च मास मासाशिना तथा ।
द्राक्षादाडिमखर्ज्जूरफलान्यत्र हितानि च ॥
वस्तिर्नस्यमसृक्मोक्षो व्यायामो दन्तघर्षणम् ।
आतपो दुष्टपवनो रजोमार्गनिषेवणम् ॥
विष्टम्भीनि विदाहीनि रूक्षाणि विविधानि च ।
शकृन्मूत्रोद्गारकासवमिवेगविधारणम ॥
मत्स्य कन्द सर्षपश्च दुष्टाम्भस्तुम्बुरुपोदिका ।
रात्रौ जागरण ग्राम्यधर्म्म कासेऽहितानि च ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
कासाधिकारस्त्रयोदशोऽध्याय ।

---

# चतुर्दशोऽध्यायः ।

— ० —

## अथ स्वरभेदाधिकार ।

स्वरभेदस्य निदान सम्प्राप्ति सख्या पृथक् लक्षणानि च ।

अत्युच्चभाषणविषाध्ययनाभिघात
सदूषणै प्रकुपिता पवनादयस्तु ।
स्रोत सु ते स्वरवहेषु गता प्रतिष्ठा
हन्य स्वर भवति चापि हि षड्विध स ॥
वातादिभि पृथक् सर्व्वैर्मेदसा च क्षयेण च ।
वातेन कृष्णनयनानन मूत्रवर्च्चा
भिन्न शनैर्वदति गद्दभवत् स्वरञ्च ॥
पित्तेन पीतनयनाननमूत्रवर्च्चा
ब्रूयाद्गलेन स च दाहसमन्वितेन ।
ब्रूयात् कफेन सतत कफरुद्धकण्ठ
स्वल्प शनैर्वदति चापि दिवा विशेषात् ॥
सर्व्वात्मके भवति सर्व्वविकारसम्पत्
तञ्चाप्यसाध्यमृष स्वरभेदमाहु ।
धूप्येत वाक्क्षयकृते क्षयमाप्नुयाच्च
वागेष चापि हतवाक् परिवर्ज्जनीय ॥
अन्तगत स्वरमलक्ष्यपदञ्चिरेण
मेदोन्वयाद्वदति दिग्धगलस्तृषार्त्त ।
क्षीणस्य वृद्धस्य कृशस्य वापि
चिरोत्थितो यश्च सहोपजात ।

मेदस्विन सर्व्वसमुद्भवश्च
स्वरामयो यो न स सिद्धिमेति ॥

स्वरभेदस्य चिकित्सा ।

वाते सलवण तैल पित्ते सर्पि समाक्षिकम् ।
कफे सक्षार कटुक क्षौद्र कवड इष्यते ॥
गले तालुनि जिह्वाया दन्तमूलेषु चाश्रित ।
तेन निष्कृष्यते श्लेषा स्वरश्चास्य प्रसीदति ॥
स्वरोपघाते मेदोजे कफवद विधिरिष्यते ।
क्षयजे सर्व्वजे चापि प्रत्याख्याय चरेत् क्रियाम् ॥

चव्यादि चूर्णम् ।

चव्याम्लवेतस कटुत्रिक तिन्तिडीक-
तालीशजीरक तुगा दहनै समांशै ।
चूर्ण गुडैर्विमृदित त्रिसुगन्धि युक्त
वैस्वर्य्य पीनस कफारुचिषु प्रशस्तम् ॥

---

अजमोदा निशा धात्री क्षार वह्नि विचूर्णयेत् ।
मधुसर्पिर्युत लीढ्वा स्वरभेदमपोहति ॥
वदरीपत्रकल्क वा घृतभृष्ट ससैन्धवम ।
स्वरोपघाते कासे च लेहमेतत् प्रयोजयेत् ॥
पिप्पली पिप्पलीमूल मरिच विश्वभेषजम् ।
पिबेन्मूत्रेण मतिमान् कफजे स्वरसक्षये ॥

व्याघ्रीघृतम् ।

व्याघ्रीस्वरसविपक्व रास्ना वाट्याल गोक्षुर व्योषै ।
सर्पि स्वरोपघात हन्यात कासञ्च पञ्चविधम ॥

शुष्कद्रव्यमुपादाय सरसानामसम्भवे।
वारिण्यष्टगुणे साध्य ग्राह्य पादावशेषितम्॥

किन्नरकण्ठो रस।

रस गन्धकमभ्रञ्च माक्षिक लौहमेव च।
कर्षप्रमाण सगृह्य वैक्रान्त रसपादिकम्॥
वैक्रान्तार्द्ध तथा हेम रौप्य हेमचतुर्गुणम्।
वासायाश्च तथा भार्ग्या वृहत्योरार्द्रकस्य च॥
स्वरसेन सरस्वत्या भावयित्वा पृथक् पृथक्।
रक्तिद्वयमिता कुर्य्याद वटीश्छायाप्रशोषिता॥
स्वरभेदानशेषांश्च कासान् श्वासांश्च दारुणान्।
निखिलान् कफजान् व्याधीन् वावश्लेषमसमुद्भवान्॥
हन्यात किन्नरकण्ठाख्यो रसोऽसौ रुद्रनिर्म्मित।
किन्नरस्येव कण्ठस्य स्वरोऽस्य प्राशनाद् भवेत्॥

---

निदिग्धिकावलेहश्च घृत सारस्वताभिधम्।
चग्रम्बकाभ्रादिकञ्चापि भेषज स्वरभेदनुत्॥

स्वरभेदे पथ्यापथ्य व्यवस्था।

बलपुष्टिप्रद हृद्य कफघ्न स्वरशुद्धिकृत्।
अन्न पानञ्च निखिल स्वरभेदे हित मतम्॥
नात्राभिष्यन्दि ससेव्य न च शीतक्रिया हिता।
दिवास्वापो न कर्त्तव्यो न च वेगविधारणम्॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
स्वरभेदश्चतुर्दशोऽध्याय।

# पञ्चदशोऽध्याय ।

—— ० ——

## अथ हिक्काश्वासाधिकार ।

### हिक्काया विप्रकृष्ट निदानम् ।

विदाहि गुरु विष्टम्भि रूक्षाभिष्यन्दिभोजनै ।
शीतपानाशनस्थानरजोधूमातपानिलै ॥
व्यायामकर्म्मभाराध्ववेगाघातापतर्पणै ।
हिक्का श्वासश्च कासश्च नृणा समुपजायते ॥

### हिक्काना सम्प्राप्ति सङ्ख्या च ।

अन्नजा यमला क्षुद्रा गम्भीरा महती तथा ।
वायु कफेनानुगत पञ्च हिक्का करोति हि ॥

### तासा सामान्यलक्षण निरुक्तिश्च ।

मुहुर्मुहुर्वायुरुदेति सस्वनो
यकृत्प्लीहान्त्राणि मुखादिवाक्षिपन् ।
सदोषवानाशु हिनस्त्यसून् यत-
स्ततस्तु हिक्केत्यभिधीयते बुधै ॥

### तासा पूर्व्वरूपम् ।

कण्ठोरसोर्गुरुत्वञ्च वदनस्य कषायता ।
हिक्काना पूर्व्वरूपाणि कुक्षेराटोप एव च ।

### अन्नजा हिक्का ।

पानान्नैरतिसयुक्तै सहसा पीडितोऽनिल ।
हिक्कयत्यूर्द्ध्वगो भूत्वा ता विद्यादन्नजा भिषक् ॥

यमला।

चिरेण यमलैर्वेगैर्या हिक्का सम्प्रवर्त्तते।
कम्पयन्ती शिरोग्रीव यमला ता विनिर्दिशेत्॥

क्षुद्रा।

विकृष्टकालैर्या वेगैर्मन्दै समभिवर्त्तते।
क्षुद्रिका नाम सा हिक्का जत्रुमूलात् प्रधाविता॥

गम्भीरा।

नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी।
अनेकोपद्रववती गम्भीरा नाम सा स्मृता॥

महती।

मर्म्माख्युत्पीडयन्तीव सतत या प्रवर्त्तते।
महाहिक्केति सा ज्ञेया सर्व्वगात्रविकम्पिनी॥

हिक्कानामरिष्टलक्षणम्।

आयम्यते हिक्कतो यस्य देहो
दृष्टिश्चोर्द्ध्वं ताम्यते नित्यमेव।
क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्र
तौ द्वौ चान्त्यौ वर्ज्जयेद्धिक्कमानौ॥

अतिसञ्चितदोषस्य भक्तच्छेदकृशस्य च।
व्याधिभि क्षीणदेहस्य वृद्धस्यातिव्यवायिन॥
आसा या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम्।
यमिका च प्रलापार्त्तिमोहतृष्णासमन्विता॥
अक्षीणश्चाप्यदीनश्च स्थिरधात्विन्द्रियश्च य।
तस्य साधयितु शक्या यमिका हन्त्यतोऽन्यथा॥

अथ श्वासस्य निदानम्।

यैरेव कारणैर्हिक्का देहिना सम्प्रवर्त्तते।
तैरेव बहुभि श्वासो व्याधिर्घोर प्रजायते ॥

तस्य भेदा ।

महोर्द्धच्छिन्नतमकक्षुद्रभेदैस्तु पञ्चधा।
भिद्यते स महाव्याधि श्वास एको विशेषत ॥

तस्य पूर्व्वरूपम्।

प्राग्रूप तस्य हृत्पीडा शूलमाध्मानमेव च।
आनाहो वक्त्रवैरस्य शङ्खनिस्तोद एव च ॥

तस्य सम्प्राप्ति ।

यदा स्रोतासि सरुध्य मारुत कफपूर्व्वक ।
विष्वग्व्रजति सरुद्धस्तदा श्वास करोति स ॥

महाश्वासस्य लक्षणम्।

उद्धूयमानवातो य शब्दवद्दुखितो नर
उच्चै श्वसिति सरुद्धो मत्तर्षभ इवानिशम ॥
प्रनष्टज्ञानविज्ञानस्तथाविभ्रान्तलोचन ।
विवृताक्षाननो बद्धमूत्रवर्च्चा विशीर्णवाक्।
दीन प्रश्वसितञ्चास्य दूराद्विज्ञायते भृशम्।
महाश्वासोपसृष्टस्तु क्षिप्रमेव विपद्यते ॥

ऊर्द्ध्वश्वासस्य लक्षणम्।

ऊर्द्ध्व श्वसिति योऽत्यर्थं न च प्रत्याहरत्यध ।
श्लेष्मावृत मुखस्रोत क्रुद्धगन्धवहार्द्दित ॥
ऊर्द्ध्वदृष्टिर्विपश्यस्तु विभ्रान्ताक्ष इतस्तत ।
प्रमुह्यन् वेदनार्त्तश्च शुष्कास्योऽरतिपीडित ॥

ऊर्द्ध्वश्वासे प्रकुपिते ह्यध श्वासो निरुध्यते।
मुह्यतस्ताम्यतश्चोर्द्ध्वश्वासस्तस्य निहन्त्यसून्॥

छिन्नश्वासस्य लक्षणम्।

यस्तु श्वसिति विच्छिन्न सर्व्वंप्राणेन पीडित।
न वा श्वसिति दु खार्त्तो मर्म्मच्छेदरुगर्दित॥
आनाहस्वेदमूर्च्छार्त्तो दह्यमानेन वस्तिना।
विप्लुताक्ष परिक्षीण श्वसन् रक्तैकलोचन॥
विचेता परिशुष्कास्यो विवर्ण प्रलपन् नर।
छिन्नश्वासेन विच्छिन्न स शीघ्र विजहात्यसून्॥

तमकश्वासस्य लक्षणम्।

प्रतिलोम यदा वायु स्रोतासि प्रतिपद्यते।
ग्रीवा शिरश्च सङ्गृह्य श्लेष्मा।ण समुदीर्य्य च॥
करोति पीनस तेन रुद्धो घुर्घुरक तथा।
अतीव तीव्रवेगच्च श्वास प्राणप्रपीडकम्॥
प्रताम्यति स वेगेन तृष्यते सन्निरुध्यते।
प्रमोह कासमानश्च स गच्छति मुहुर्मुहु॥
श्लेष्मण्यमुच्यमाने तु भृश भवति दु खित।
तस्यैव च विमोक्षान्ते मुहूर्त्त लभते सुखम्॥
तथास्योद्ध्वसते कण्ठ कृच्छ्राच्छक्नोति भाषितुम्।
न चापि लभते निद्रा शयान श्वासपीडित॥
पार्श्वे तस्यावगृह्णाति शयानस्य समीरण।
आसीनो लभते सौख्यमुष्णञ्चैवाभिनन्दति॥
उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमर्त्तिमान्।
विशुष्कास्यो मुहुश्वासी मुहुश्चैवावधम्यते॥

मेघाम्बुशीतप्राग्वातै श्लेष्मलैश्च विवर्द्धते ।
स याप्यस्तमक श्वास साध्यो वा स्यान्नवोत्थित ॥

तमकस्यैव भेदस्य प्रतमकस्य लक्षणम् ।

ज्वरमूर्च्छापरोतस्य विद्यात् प्रतमकन्तु तम् ॥

प्रतमकस्यापर लक्षणम् ।

उदावर्त्तरजोऽजीर्णक्लिन्नकायनिरोधज ।
तमसा वर्त्ततेऽत्यर्थं शोतैश्चाशु प्रशाम्यति ।
मज्जतस्तमसोवास्य विद्यात् प्रतमकन्तु तम् ॥

क्षुद्रश्वासस्य लक्षणम ।

रूक्षायासोद्भव कोष्ठे क्षुद्रो वातमुदोरयन् ।
क्षुद्रश्वासो न सोऽत्यर्थं दु खेनाङ्गप्रबाधक ॥
हिनस्ति न स गात्राणि न च दु खो यथेतरे ।
न च भोजनपानाना निरुणद्ध्युचिता गतिम् ॥
नेन्द्रियाणा व्यथा नापि काञ्चिदुत्पादयेद्रुजम ।
स साध्य उक्तो बलिन सर्व्वे चाव्यक्तलक्षणा ॥

श्वासाना साध्यत्वादिकम् ।

क्षुद्र साध्यतमस्तेषा तमक कृच्छ्र उच्यते ।
त्रय श्वासा न सिध्यन्ति तमको दुर्ब्बलस्य च ॥
काम प्राणहरा रोगा बहवो न तु ते तथा ।
यथा श्वासश्च हिक्का च हरत प्राणमाशु वै ॥

हिक्काश्वासाना चिकित्सा ।

हिक्काश्वासातुरे पूर्व्वं तैलाक्ते स्वेद इष्यते ।
स्निग्धैर्लवणयोगैश्च मृदुर्वातानुलोमनम् ॥
ऊर्द्धाध शोधन शक्ते दुर्ब्बले शमन मतम ॥

यत् किञ्चित् कफवातघ्नमुष्णं वातानुलोमनम् ॥
भेषजं पानमन्नं वा हिक्काश्वासेषु तद्धितम् ॥
कोलमज्जाञ्जनं लाजा तिक्ता काञ्चनगैरिकम् ।
कृष्णा धात्री सिता शुण्ठी कासीसं दधिनाम च ॥
पाटल्याः सफलं पुष्पं कृष्णा खर्जूरमस्तकम् ।
षडेते पादिका लेह्या हिक्काघ्ना मधुसंयुताः ॥
मधुकं मधुसंयुक्तं पिप्पली शर्करान्विता ।
नागरं गुडसंयुक्तं हिक्काघ्नं नावनत्रयम् ॥

नावनं नस्यम् ।

स्तन्येन मक्षिकाविष्ठा नस्यं वालक्तकाम्बुना ।
योज्यं हिक्काभिभूताय स्तन्यं वा चन्दनान्वितम् ॥
मधुसौवर्च्चलोपेतं मातुलुङ्गरसं पिबेत् ।
हिक्कार्त्तस्य पयश्छागं हितं नागरसाधितम् ॥
अप्यसाध्यं नयत्यस्तं हिक्कां चौद्रविलेहनम् ॥
माषचूर्णभवो धूमो हिक्कां हन्ति न संशयः ।
असाध्यां साधयेद्धिक्कां सितयैलाभवं रजः ॥
शर्करा मरिचं चूर्णं लीढं मधुयुतं मुहुः ।
निहन्ति प्रबलां हिक्कामसाध्यामपि देहिनाम् ।
हिक्काघ्नं कदलीमूलरसं पेयं सशर्करं ॥
कृष्णामलकशुण्ठीनां चूर्णं मधुसितायुतम् ।
मुहुर्मुहुः प्रयोक्तव्यं हिक्काश्वासनिवारणम् ॥
हिक्कां हरति प्रबलां श्वासमतिप्रवृद्धं जयति ।
शिखिपुच्छभूतिपिप्पलीचूर्णं मधुमिश्रितं लीढम् ॥
हिक्काश्वासौ विनिघ्नन्ति सविश्वामुष्णवारिणा ।

नागर वा सिता भार्गी सौवर्च्चलसमन्वितम् ॥
कनकस्य फल शाखा पत्र सकुत्य यत्नत ।
शोषयित्वा च तद्धूमपानाच्छासो विनश्यति ॥

हरिद्रादिचूर्णम् ।

हरिद्रा मरिच द्राक्षा गुड रास्ना कणा शटीम् ।
जह्यात् तैलेन विलिहन् श्वासान् प्राणहरानपि ॥
गुड कटकतैलेन मिश्रयित्वा सम लिहेत् ।
त्रिसप्ताहप्रयोगेण श्वास निर्म्मूलतो जयेत् ॥
कुष्माण्डकाना चूर्णन्तु पेय कोष्णेन वारिणा ।
शोघ्र प्रशमयेच्छाम कासञ्चैव सुदारुणम् ॥
कृष्णासैन्धवचूर्णं स्वरसेन शृङ्गवेरस्य हि ।
यो लेढि शमनकाले स जयति समाहत श्वासान् ॥
गन्धक मरिच साज्य श्वासकासक्षयापहम ।
गन्धक घृतयोगेन श्वासकासक्षयापहम् ॥

शृङ्ग्यादिचूर्ण भार्गीगुड-शृङ्गीगुडघृत भार्गीशर्करा-महाश्वासारिलोह पिप्पल्याद्यलोहप्रभृतीनि भेषजानि यथादोषानुपानमात्राणि तथा श्वासकुठाररस श्वासभैरवरस सूर्य्यावर्त्तरस श्वासचिन्तामण्यादोन्यपि भेषजानि हिक्काश्वासेषु देयानि। वृहच्चन्दनादितैलमत्र हितम ।

हिक्काश्वासेषु पथ्यापथ्यानि ।

शालिषष्टिकगोधूमयवा शस्ता पुरातना ।
शशोऽहिभुक् तित्तिरिश्च दक्षो धन्वमृग शुक ॥
सर्पि पुरातन छाग दुग्ध मधु सुरा तथा ।
जीवन्तिका च वास्तूक रसोनश्च पटोलकम् ॥

द्राक्षा त्रुटि पौष्करञ्च वार्य्युष्ण कटुकत्रयम् ।
हिक्काश्वासेषु जानीयादित्याद्यानि हितानि हि ॥
विदाहि गुरु पानान्न व्यायामाध्वनिषेवणम् ।
श्वासी हिक्की ग्राम्यधर्म्म क्रोध चिन्ताञ्च सत्यजेत् ।

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
हिक्काश्वासाधिकार पञ्चदशोऽध्याय ।

## षोडशोऽध्याय ।



### हृद्रोगाधिकार ।

#### हृद्रोगस्य विप्रकृष्ट निदानम ।

अत्युष्ण गुर्व्वन्न कषाय तिक्त श्रमाभिघाताध्यशन प्रसङ्गै ।
सचिन्तनैर्वेग विधारणैश्च जायेत रोगो हृदयेऽतिघोर ॥

हृदये रोगो जायेत हृद्रोग स्यात्, अतिघोर कष्टप्रदो दुश्चिकित्स्यश्च ।

#### तस्य सम्प्राप्तिर्लक्षणञ्च ॥

दूषयित्वा रस दोषा विगुणा हृदय गता ।
हृदि वाधा प्रकुर्व्वन्ति हृद्रोग त प्रचक्षते ॥
वाधा दोषभेदेन नानाविधा व्यथाम् ।

#### वातिकस्य हृद्रोगस्य लक्षणम् ।

आयम्यते मारुतजे हृदय तुद्यते तथा ।
निर्म्मथ्यते दीर्य्यते च स्फोट्यते पाट्यतेऽपि च ।

पैत्तिकस्य तस्य लक्षणम ।

तृष्णोष्मदाह चोषा स्यु पत्तिके हृदयक्लम ।
धूमायनञ्च मूर्च्छा च स्वेद शोषो मुखस्य च ॥

श्लैष्मिकस्य तस्य लक्षणम् ।

गौरव कफसस्रावोऽरुचि स्तम्भोऽग्निमार्द्दवम् ।
माधुर्य्यमपि चास्यस्य वलासावतते हृदि ॥

सान्निपातिकस्य लक्षणम ।

विद्यात् त्रिदोषमप्येव मर्व्वलिङ्ग हृदामयम् ॥

क्रिमिजस्य हृद्रोगस्य विप्रकृष्ट निदान सम्प्राप्तिश्च ।

त्रिदोषजे तु हृद्रोगे यो दुरात्मा निषेवते ।
तिलक्षीर गुडादींश्च ग्रन्थिस्तस्योपजायते ॥
मर्म्मैकदेशे सक्लेद रसश्चाप्युपगच्छति ।
सक्लेदात् क्रिमयश्चास्य भवन्त्यपहृतात्मन ॥

तस्य लक्षणम् ।

उत्क्लेद ष्ठीवन तोद शूल हृल्लासकस्तम ।
अरुचि श्यावनेत्रत्व शोषश्च क्रिमिजे भवेत् ॥

शोषो यक्ष्मा ।

हृद्रोगस्योपद्रवा ।

क्लमस्तन्द्रा भ्रम शोषो ज्ञेयास्तेषामुपद्रवा ।
क्रिमिजे तु क्रिमीणा ये श्लैष्मिकाणा हि ते मता ॥

तन्त्रान्तरोक्ताना हृदयरोगाणा लक्षणादीनि ।

आवरणिक ।

आमवाताद वृक्कदोषात् शीतार्द्रत्वनिषेवणात् ।
हृत्कोष्ठावरणे क्षिप्र शीर्य्यते ह्यकृतात्मनः ॥

( द, ११ )

तत्र दाहोष्णता शोफो गौरवं भरुती तथा ।
कोष्ठप्रवेपनं कासो दौर्ब्बल्यं श्वासकृच्छ्रता ॥
नासामार्गेण रक्तस्य स्रुतिर्वह्नेश्च मन्दता ।
शाखासु शोफो धमनी भवेद्‌ विषमगामिनी ॥
नाम्नावरणिको ह्येष व्याधिर्विद्भिरुच्यते ।
जातमात्रश्चिकित्स्योऽयं नैवोपेक्ष्यः कदाचन ॥

कौष्ठिक ।

आमवातादभीघातात् तथावरणिकाद् गदात् ।
हृत्कोष्ठे जायते शोथो गद एष हि कौष्ठिकः ॥
ज्वरो दाहोऽरुचिः कम्पो वैवर्ण्यं वह्निसंचयः ।
श्वासः कासो राजयक्ष्मा कोष्ठे पूयस्य सञ्चयः ॥
मूर्च्छाक्षेपः प्रलापश्च नाडी विषमवाहिनी ।
गदाद्‌ घोरतरादस्माद् भाग्यात् कोऽपि प्रमुच्यते ॥

पृथुक ।

शोणितस्य गतौ कोष्ठे व्याहतायामनात्मनः ।
तत्पेशी पृथुतां याति मिथ्याहारविहारतः ॥
हृद्वेपथुर्व्यथा तत्र दौर्ब्बल्यं श्वासकृच्छ्रता ।
अरतिर्भ्रममोहौ च चिह्नानि पृथुके गदे ॥

आयामिका ।

हृत्कोष्ठप्रसृतिर्नाम्ना व्याधिरायामिका मता ।
श्वासः शोथो भ्रमो मूर्च्छा हृत्कम्पो वह्निमन्दता ॥
जलोदरमनिद्रत्वं बलमांसपरिक्षयः ।
एभिरन्यैश्च विज्ञेयश्चिह्नैरायामिको गदः ॥

परिच्चय ।

च्चयात् सञ्जायते घोरो व्याधिर्नाम्ना परिच्चय ।
कोष्ठपेश्या क्षय श्वासो दौर्ब्बल्य सदन श्रम ॥
हृद्वेपथर्वह्निमान्द्य क्रमाच्छोफश्च जायते ।
एतैरन्यैश्च विज्ञेयश्चिह्नैर्व्याधि परिच्चय ॥

मेद सूत्रम् ।

हृत्कोष्ठ पेशीसूत्रेषु मेद कणचयो गद ।
मेद सूत्राख्यया प्रोक्तो मुनिभिस्तत्त्ववेदिभि ॥
मन्द मन्द व्रजेन्नाडी भवेद्धृदयवेपथु ।
अवसादो भ्रमो मूर्च्छा स्नायूना बलसच्चय ॥
हृद्वृत्तेर्वापि सभेदान्मृत्युश्च सहसा भवेत ।
जातमात्रश्चिकित्स्योऽय व्याधि परमदारुण ॥

विक्षेपिका ।

हृत्कोष्ठाक्षेपको व्याधिर्नाम्ना विक्षेपिका मता ।
जातेऽस्मिन महति व्याधौ कोष्ठदेशेऽप्युरोऽस्थ्यध ॥
सव्यासास्थ्नि सव्यबाहौ ग्रीवाया पृष्ठदेशत ।
वेदना जायते तीव्रा मर्म्मप्राणप्रपीडनी ॥
तोदभेदौ समाकर्षो दाहस्तत्र च जायते ।
मुहुर्मुहु श्वासरोध शीता त्वक् स्वेदनिर्गम ॥
आध्मानानाह मोहाश्च वैवर्ण्य क्षमतारुचि ।
क्रमादिन्द्रिय विध्वसो मरण चाप्यनात्मन ॥

हृद्रोगस्य चिकित्सा ।

घृतेन दुग्धेन गुडाम्भसा वा पिबन्ति चूर्ण ककुभत्वचो ये ।
हृद्रोगजीर्णज्वर रक्तपित्त हत्वा भवेयुश्चिरजीविनस्ते ॥

हरीतकी वचा रास्ना पिप्पली नागरोद्भवम्।
शटीपुष्करमूलोत्थ चूर्णं हृद्रोगनाशनम्॥
पुटगन्ध हरिणशृङ्ग पिष्ट गव्येन सर्पिषा पिबत ।
हृत्पृष्ठशूल मचिरादुपैति शान्ति सुकष्टमपि॥
तैलाज्य गुडविपक्व चूर्णं गोधूम पार्थोत्थम्।
पिबति पयोभुक् स भवति जितसकलहृदामय पुरुष ॥

पिप्पल्यादि चूर्णम ।

पिप्पल्येला वचा हिङ्गु यवक्षारोऽथ सैन्धवम्।
सौवर्च्चलमथो शुण्ठी चाजमोदेति चूर्णितम्॥
दध्ना मद्येनासवेन काञ्जिकेन घृतेन वा।
पाययेच्छुद्धदेह हि वातिके हृदयामये॥
शीता प्रदेहा परिषेचनानि
तथा विरेको हृदि पित्तदुष्टे।
द्राक्षासिताक्षौद्र परूषकैः स्या-
च्छुद्धे च पित्तापहमन्नपानम्॥
पिष्ट्वा पिबेद्वापि सिताजलेन
यष्ट्याह्वय तिक्तकरोहिणीञ्च।
वचानिम्ब कषायाभ्या वान्त हृदि कफोत्थिते।
वातहृद्रोगहृच्चूर्णं पिप्पल्याद्य प्रपाययेत्॥
त्रिदोषजे लङ्घनमादित स्या
दन्नञ्च सर्व्वेषु हित विधेयम्।
हीनातिमध्यत्वमवेक्ष्य चैव
कार्य्य त्रयाणामपि कर्म्म शस्तम्॥

हिङ्गूग्रगन्धा विडविश्व कृष्णा-
कुष्ठाभयाचित्रक यावशूकम् ।
पिबेत मसौवर्च्चल पुष्कराव्य
यवाम्भसा शूलहृदामयघ्नम् ॥

पाठा वचा यवक्षारमभयामम्लवेतसम् ।
दुरालभा चित्रकञ्च त्र्यूषणञ्च फलत्रयम ॥
शटी पुष्करमूलञ्च तिन्तिडीक सदाडिमम् ।
मातुलुङ्गस्य मूलानि सूक्ष्म चूर्णानि कारयेत् ॥
सुखोत्केन मद्यैर्वा प्लुतान्येतानि पाययेत् ।
अर्श शूलञ्च हृद्रोग गुल्मञ्चाशु नियच्छति ॥
क्रिमिजे च पिबेन्मूत्र विडङ्गामय सयुतम् ।
हृदि स्थिता पतन्त्येवमधस्तात् क्रिमयो नृणाम् ॥
यवान्न वितरेच्चास्मै सविडङ्गमत परम् ॥

कासोसादि वटी ।

कासोस सैन्धव व्योम सम खल्वे विमर्दयेत् ।
गोधूमार्ज्जुनतोयेन भावयित्वा पृथक् पृथक् ॥
माषमाता वटी कृत्वा यवक्काथेन सयुता ।
दद्याद्धृद्रोगिणे धीमान् स्नेहेनान्यतमेन वा ॥

हृदयरत्न चूर्णम् ।

कासोसस्य च भागैक पार्थस्य पञ्चधा तथा ।
सूक्ष्म चूर्णीकृत दद्याद्धदामयनिवृत्तये ॥

हृदयेश्वरो रस ।

रसगन्धक लौहाभ्र विद्रुम मौक्तिक तथा ।
कन्याद्रवेण समर्द्य गुञ्जाद्वयमिता वटीम् ॥

कृत्वा सशोषयेद्द्रौद्रवह्नियोग विना भिषक ।
पार्थाम्भसा सर्पिषा च दद्याद्धृद्रोगशान्तये ॥

हेमामृत रस ।

भागमेक पारदस्य बलेर्भागद्वय तथा ।
हेम्न पादमित भागमेकैक तारवङ्गयो ॥
अर्ज्जुनस्य कष ेण मर्दी रतिकोत्मि ताम ।
वटी कृत्वा दापयेच्च रिताज्य मधुसयुताम् ॥
शाम्यन्त्यनेन हृद्रोगा सर्वे एव न सशय ।
श्रीमद गहननाथेन निर्मितोऽय र्स तम ॥

रत्नाकरो रस ।

हेमहोरक वैक्रान्त वङ्गाभ्र रस नन्दका ।
समभागमिता योज्या सर्व्वतुल्यमयो मतम् ॥
खल्ले निक्षिप्य सर्व्वाणि भावयेत् ककुभाम्भसा ।
गोधूमस्य यवस्यापि क्वाथेन सप्तधा पृथक् ॥
तत कन्याम्बुना प्राज्ञस्त्रीन् वारान् परिषिचयेत् ।
रक्तशाल्यन्तरे पिण्ड निशा सप्त च धापयेत ॥
समुद्धृत्य वटीश्चाथ कुर्य्यात स्विन्नकलायवत् ।
अर्ज्जुनस्य कषायेण काञ्जिकेनासवेन वा ॥
गोधूमस्य यवस्यापि क्वाथेन हविषापि वा ।
यथादोषानुपानैर्वा प्रदद्यात् परमौषधम ॥
वातिक पैत्तिकञ्चापि श्लैष्मिक सान्निपातिकम् ।
क्रिमिज हृद्गदञ्चापि कौष्ठिक पृथुक तथा ॥
तथावरणिक घोर गद विक्षेपिकाभि म ।
मेद सत्राभिध चापि परिक्षयगद तथा ॥

आयामिकाच्च यच्चाण वातपित्त कफामयान् ।
हन्त्यय निखिलान् रोगान् वृत्रानिन्द्राशनिर्यथा ॥

हृद्रोगेषु पथ्यापथ्यनिर्णय ।

पुरातनो रक्तशालिर्जाङ्गला मृगपक्षिण ।
कुलत्थमुद्गयूषश्च पटोल कदलीफलन ॥
रसाल वृद्धकुष्माण्ड दाडिमश्च हरीतकी ।
द्राक्षा तक्र सैन्धवश्च हितानि हृदयामये ॥
वेगरोधो व्यवायश्च व्यायामो निशि जागर ।
सह्यविन्ध्य समुद्भूत सरिता सलिल तथा ॥
मेषोपयो जल दुष्ट गुरुतिक्ताम्ल भोजनम ।
पत्रशाकश्चाध्यशन न हितानि हृदामये ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
हृद्रोगाधिकार षोडशोऽध्याय ।

## सप्तदशोऽध्याय ।

—— o ——

उरस्तोयाधिकार ।

उरस्तोयस्य सम्प्राप्ति ।

उरस्येकतरे पार्श्वे पार्श्वयोर्वाप्यपा चय ।
उरस्तोयगदो नाम प्रायश प्राणनाशन ॥
उरसि वच्चोयन्ते । असौ गद प्रायेण प्राणनाशन ।

### उरस्तोयस्य लक्षणम् ।

कृच्छ्राच्छ्वास कफस्रावो नीलावोष्ठौ तथा मुखम् ।
शोथ पादे धरा क्षुद्रा विषमा वेगवाहिनी ॥
मूत्राल्पत्व भवेच्चापि स ना न शयनक्षम ।
स्वास्थ्य किञ्चित् समासीनो लभतेऽस्मिन् महागदे ॥

धरा धमनी ।

### अस्य चिकित्सा ।

भेषज शोथ[illegible] सू[illegible]पि प्रकीर्त्तितम ।
उरस्तोये गदे योज्य विदित्वा भि[illegible]जा सदा ॥
पिपासानिग्रह्व कार्य्य शीताम्भोऽनिलसेवनम् ।
यत्नत परिहर्त्तव्यमभिष्यन्द्यखिल तथा ॥
पादावशिष्ट यत्तोय तत्तषाया पिबेन्मनाक् ।
पयसा वा श्रृतोष्णेन शान्ति कुर्य्यात् सदा तृष ॥
वर्षाभूस्वरस वापि यवक्षारसमायुतम ।
पिबेन्नित्यमुरस्तोयी सायप्रातरतन्द्रित ॥
श्वयथौ मूत्रकृच्छ्रे च कासे श्वासे हृदामये ।
भेषज गदित यद्यत् तत्तदत्र प्रयोजयेत् ॥
नैव व्याधि सम यायान्निखिलैर्यदि कर्म्मभि ।
कुर्य्याच्छस्त्रक्रिया तर्हि लघुहस्तो भिषग्वर ॥
समुद्रवस्त्वोर्मध्ये वा महीभृग्रहयोरथ ।
पर्शुकास्थ्नोर्ग्रहदिशो शस्त्र नाम त्रिकुर्च्चकम ॥
प्रवेश्यावहितो रक्षन् यत्नत् स्नीहानमेव च ।
नि शेष निर्हरेदम्बु व्याधिरेव प्रशाम्यति ॥

ततो व्यवायमध्वान व्यायाम शिशिर जलम् ।
अह स्वाप शुच क्रोध त्यजेद्दर्ष गदोत्थित ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
उरस्तोयाधिकार सप्तदशोऽध्याय ।

---

## अष्टादशोऽध्याय ।

### क्रिम्यधिकार ।

क्रिमीणा भेदा निदानानि च ।

क्रिमयस्तु द्विधा प्रोक्ता वाह्याभ्यन्तरभेदत ।
वहिर्मलकफास्टग्विड्जन्मभेदाच्चतुर्विधा ।
नामतो विंशतिविधा वाह्यास्तत्र मलोद्भवा ॥

वाह्याना क्रिमीणा रूपाणि ।

तिलप्रमाणसंस्थानवर्णा केशाम्बराश्रया ।
वहुपादाश्च सूक्ष्माश्च यूका लिख्याश्च नामत ॥
द्विधा ते कोठपिडकाकण्डूगण्डान् प्रकुर्व्वते ॥

आभ्यन्तरक्रिमीणा विप्रकृष्ट निदानम् ।

अजीर्णभोजी मधुराम्लनित्यो द्रवप्रिय पिष्टगुडोपभोक्ता ।
व्यायामवर्ज्जी च दिवाशयानो
विरुद्धभुक् सलभते क्रिमींश्च ॥

ज्वरो विवर्णता शूल हृद्रोग सदन भ्रम ।
भक्तद्वेषोऽतिसारश्च सञ्जातक्रिमिलक्षणम् ।

कफजाना निदान लक्षणञ्च।

मांसमत्स्यगुडक्षीरदधिशुक्तै कफोद्भवा।
कफादामाशये जाता वृद्वा सर्पन्ति सर्व्वत॥
पृथुव्रध्ननिभा केचित् केचिद्गण्डूपदोपमा।
श्वेतास्ताम्रावभासाश्च नामत सप्तधा तु ते।
अन्त्रादा उदरावेष्टा हृदयादा महागुदा॥
चुरवो दर्भकुसुमा सुगन्धास्ते च कुर्व्वते।
हृल्लासमास्यस्रवणमविपाकमरोचकम।
मूर्च्छा छर्द्दि ज्वरानाहकार्श्यक्षवथपीनसान्॥

रक्तजाना लक्षणम्।

रक्तवाहिशिरास्थाना रक्तजा जन्तवोऽणव।
अपादा वृत्तताम्राश्च सौक्ष्म्यात् केचिददर्शना॥
केशादा रोमविध्वंसा रोमद्वीपा उडुम्बरा।
षट् ते कुष्ठैककर्म्माण सहसौरसमातर॥
तन्त्रान्तरे—
आनूपग्राम्यवन्याना मांस य सेवते सदा।
तस्य क्रियाविहीनस्य क्रिमिर्घोर प्रजायते॥
आकृष्टो वर्द्धतेऽत्यर्थं तुम्बीवीजसमाकृति।
चिकित्सामन्तरेणासौ करोत्युपद्रवान् बहून्॥

पुरीषोत्थाना लक्षणम्।

पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिण।
वृद्धास्ते स्युर्भवेयुश्च ते यदामाशयोन्मुखा॥
तदास्योद्गारनिश्वासविड्गन्धानुविधायिन।
पृथुवृत्ततनुस्थूल श्यावपीतसितासिता॥

ते पञ्च नाम्ना क्रिमय कञ्चरुकाः ..... ।
सौसुरादा सशूलाख्या लेलिहा जायन्ति हि ॥
विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुता ॥
रोमहर्षाग्निसदनगुदकण्डूविमार्गगा ॥

## क्रिमीणां चिकित्सा ।

पारिभद्रस्य पत्रोत्थ रस चौद्रयुत पिबेत् ।
केवुकस्य रस वापि पत्तूरस्याथवा पुन ॥
लिह्यात् चौद्रेण वेडङ्ग चूर्ण क्रमिहर परम् ॥
पारसोया यमानी पोता पर्य्युषितवारिणा प्रात ।
गुडपूर्व्वा क्रिमिजात कोष्ठगत पातयत्याशु ॥
( गुडपूर्व्वा प्रथमतो गुड जनाद् भक्षयित्वा विलम्ब कृत्वा पातव्या । )

पलाशवीजस्वरस पिबेद्वा चौद्रसयुतम ।
पिबेत्तद्बीजकल्क वा तक्रेण क्रिमिनाशनम ॥
क्वाथ खर्ज्जूरपत्राणा सचौद्रर्मुषित निशि ।
पीत्वा निवारयत्याशु क्रिमिसङ्घमशेषत ॥
अपक्व क्रमुक पिष्ट पीत जम्बीरजै रसै ।
निहन्ति विड्भव कोट रस खर्ज्जूरजम्बयो ॥
पिबेत् तुम्बीवीजचूर्ण तक्रेण क्रिमिनाशनम् ।
नारिकेलजल पीत सचौद्र क्रिमिनाशनम ॥
कम्पिल्लचूर्ण कर्षार्द्ध गुडेन सह भक्षितम ॥
सपातयेत् क्रिमीन् सर्व्वानुदरस्थान् न सशय ॥
पलाशवीजेन्द्रविडङ्गनिम्बभूनिम्बचूर्ण सगुड लिहेद्य ।

दिनत्रयेण क्रिमय पतन्ति
पलाशबीजेन यमानिका वा ॥
भुक्ता वेडङ्ग चूर्ण हि क्रिमीन् सर्व्वान् व्यपोहति ।
पेषयेदारनालेन नाडीचस्य फलानि च ।
यूकानाञ्च प्रशान्त्यर्थं दद्याल्लेपन्तु मस्तके ॥

धुस्तूरतैलम् ।

धुस्तूरपत्रकल्केन तद्रसेनैव पाचितम्
तैलमभ्यङ्गमात्रेण यूका नाशयति चणात् ॥

पारिभद्रावलेहस्तोलकमान शीतजलानुपानस्तथा क्रिमिमुद्गररस कीटारिरस कीटमदरसाद्यान्यपि भेषजानि क्रिमिघ्नानुपानेन सह प्रदेयानि। विडङ्गघृतमच विशेषेण हितप्रदमिति ।

प्रत्यह काटुक तिक्त भोजन कफनाशनम् ।
क्रिमीणा नाशन रुच्यमग्निसन्दीपन परम् ॥
चीराणि मासानि घृतानि चापि
दधीनि शाकानि च पर्णवन्ति ।
अम्लञ्च मिष्टञ्च रस विशेषात्
क्रिमीन् जिघासु परिवर्ज्जयेद्धि ॥
इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
क्रिम्यधिकारोऽष्टादशोऽध्याय ।

---

## ऊनविंशोऽध्यायः ।

—— ० ——

### अग्निमान्द्याद्यधिकारः ।

मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधः ।
कफपित्तानिलाधिक्यात् तत्साम्याज्जठरोऽनलः ॥

### समादीनां लक्षणानि ।

समा समाग्नेरशिता मात्रा सम्यग् विपच्यते ।
स्वल्पापि नैव मन्दाग्नेर्विषमाग्नेस्तु देहिनः ॥[1]
कदाचित् पच्यते सम्यक् कदाचिच्च न पच्यते ।
मात्रातिमात्राप्यशिता सुखं यस्य विपच्यते ॥
तीक्ष्णाग्निरिति तं विद्यात् समाग्निः श्रेष्ठ उच्यते ॥
विषमो वातजान् रोगांस्तीक्ष्णः पित्तनिमित्तजान् ।
करोत्यग्निस्तथा मन्दो विकारान् कफसम्भवान् ॥

### तीक्ष्णाग्निविशेषस्य भस्मकस्य सम्प्राप्तिर्निदानं लक्षणान्युपद्रवाश्च ।

नरे क्षीणे कफे पित्तं कुपितं मारुतानुगम् ।
स्वोष्मणा पावकस्थाने बलमग्नेः प्रयच्छति ॥
तदा लब्धबलो देहं विरुजेत् सानिलोऽनलः ।
अभिभूय पचत्यन्नं तैक्ष्ण्यादाशु मुहुर्मुहुः ॥
पक्त्वान्नं सततं धातून् शोणितादीन् पचत्यपि ।
तदा दौर्ब्बल्यमातङ्कान् मृत्युञ्चोपनयेन्नरम् ॥
भुक्तेऽन्ने लभते शान्तिं जीर्णमात्रे प्रताम्यति ।
तृड्‌कासदाहमूर्च्छाः स्युर्व्याधयोऽत्यग्निसम्भवाः ॥

## अजीर्णस्य विप्रकृष्ट निदानम्।

अत्यम्बुपानाद्विषमाशनाच्च
सन्धारणात् स्वप्नविपर्य्ययाच्च।
कालेऽपि सात्म्य लघु चापि भुक्त
मन्न न पाक भजते नरस्य॥
आम विदग्ध विष्टब्ध कफपित्तानिलैस्त्रिभि।
अजीर्ण केचिदिच्छन्ति चतुर्थ रसशेषत॥
अजीर्ण पञ्चम केचिन्निर्दोष दिनपाकि च॥
वदन्ति षष्ठञ्चाजीर्ण प्राकृत प्रतिवासरम्॥

## आमादीना लक्षणम्।

तत्रामे गुरुतोत्क्लेश शोथो गण्डाक्षिकूटग।
उद्गारश्च यथाभुक्तमविदग्ध प्रवर्त्तते॥
विष्टब्धे शूलमाध्मान विविधा वातवेदना।
मलवाताप्रवृत्तिश्च स्तम्भो मोहाङ्गपीडनम्॥
विदग्धे भ्रमतृण्मूर्च्छा पित्ताच्च विविधा रुज।
उद्गारश्च सधूमाम्ल स्वेदो दाहश्च जायते॥
रसशेषेऽन्नविद्वेषो हृदयाशुद्धिगौरवे॥
मूर्च्छाप्रलापो वमथु प्रसेक सदन भ्रम।
उपद्रवा भवन्त्येते मरण वाप्यजीर्णत॥
अनात्मवन्त पशुवद्भुञ्जते येऽप्रमाणत।
रोगानीकस्य ते मूलमजीर्ण प्राप्नुवन्ति हि॥
अजीर्णमाम विष्टब्ध विदग्धञ्च यदीरितम्।
विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका॥

विसूच्या निरुक्ति ।

सूचीभिरिव गात्राणि तुदत् सन्तिष्ठतेऽनिल ।
यस्याजीर्णेन सा वैद्यैर्विसूचोति निगद्यते ॥

तस्या निदानम ।

न ता परिमिताहारा लभन्ते विदितागमा ।
मूढास्तामजितात्मानो लभन्तेऽशनलोलुपा ॥

तस्य लक्षणम् ।

मूर्च्छातिसारौ वमथु पिपासा
शूलभ्रमोद्वेष्टनजृम्भदाहा ।
वैवर्ण्यकम्पौ हृदये रुजश्च
भवन्ति तस्या शिरसश्च भेद ॥

तस्या उपद्रवा ।

निद्रानाशोऽरति कम्पो मूत्राघातो विसञ्ज्ञता ।
अमी उपद्रवा घोरा विसूच्य पञ्च दारुणा ॥

अलसकस्य लक्षणम् ।

कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत परिकूजति ।
निरुद्धो मारुतश्चैव कुक्षावुपरि धावति ॥
वातवर्चोनिरोधश्च यस्यात्यर्थं भवेदपि ।
तस्यालसकमाचष्टे तृष्णोद्गारौ च यस्य तु ॥

विसूच्यलसकयोररिष्टलक्षणम् ।

य श्यावदन्तौष्ठनखोऽल्पसञ्ज्ञो
वम्यर्दितोऽभ्यन्तरयातनेत्र ।
क्षामस्वर सर्व्वविमुक्तसन्धि-
र्यायान्नर सोऽपुनरागमाय ॥

विलम्बिकाया लक्षणम्।

दुष्टन्तु भुक्तं कफमारुताभ्यां
प्रवर्त्तते नोर्द्ध्वमधश्च यस्य।
विलम्बिका तां भृशदुश्चिकित्स्या
माचक्षते शास्त्रविद पुराणा॥

अजीर्णजन्यस्यामस्य कार्य्यान्तरम्।

यत्रस्थमामं विरुजेत् तमेव
देशं विशेषेण विकारजातैः।
दोषेण येनावततं शरीरं
तल्लक्षणैरामसमुद्भवैश्च॥

जीर्णाहारस्य लक्षणम्।

उद्गारशुद्धिरुत्साहो वेगोत्सर्गो यथोचितः।
लघुता क्षुत् पिपासा च जीर्णाहारस्य लक्षणम्॥

अग्निमान्द्यादीनां चिकित्सा।

सारमेतच्चिकित्साया परमग्नेश्च पालनम्॥
तस्माद्यत्नेन कर्त्तव्यं वह्नेस्तु प्रतिपालनम्॥
अस्तु दोषशतं क्रुद्धं सन्तु व्याधिशतानि च।
कायाग्निमेव मतिमान् रक्षन् रक्षति जीवितम्॥
समस्य रक्षणं कार्य्यं विषमे वातनिग्रहः।
तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेषविशोधनम्॥
हरीतकी तथा शुण्ठी भक्ष्यमाणा गुडेन च।
सैन्धवेन युता वा स्यात् सातत्येनाग्निदीपनी॥
व्योषं दन्ती त्रिवृच्चित्रं कृष्णा मूलं विचूर्णितम्।
तच्चूर्णं गुडसम्मिश्रं भक्षयेत् प्रातरुत्थितः॥

एतद्गुडाष्टकं नाम बलवर्णाग्निवर्द्धनम् ।
शोथोदावर्त्तशूलघ्नं प्लीहपाण्ड्वामयापहम् ॥

तत्रामे वमनं कार्य्यं विदग्धे लङ्घनं हितम् ।
विष्टब्धे स्वेदनं शस्तं रसशेषे शयीत च ।

वमनं त्वलसे पूर्व्वं लवणेनोष्णवारिणा ।
स्वेदो वर्त्तिर्लङ्घनञ्च क्रमश्चातोऽग्निवर्द्धनं ॥

सरुक् चानद्धमुदरमम्लपिष्टैः प्रलेपयेत् ।
दारुहैमवतीकुष्ठशताह्वाहिङ्गुसैन्धवैः ॥

तीव्रार्त्तिरपि नाजीर्णी पिबेच्छूलघ्नमौषधम् ।
दोषच्छन्नोऽनलो नालं पक्तुं दोषौषधाशनम् ॥

सैन्धवादिचूर्णं हिङ्ग्वष्टकाग्निमुखचूर्ण-भास्करलवण सुकुमारमोदक त्रिवृतादिमोदक लवङ्गाद्यमोदक-शार्द्दूलकाञ्जिकाग्निमुखलवणादीनि भेषजानि यथानुपानमात्राणि वह्निमान्द्येऽजीर्णेषु च विविच्य देयानि। रामवाणरसाग्नितुण्डग्मृतवटी टङ्कनादिवटी क्षुधासागररसाग्निरसाजीर्णकण्टकरसाग्निकुमाररस हुताशनरस भास्कररसाग्निसन्दीपनरस-शङ्खवटी-महाशङ्खवटी प्रभृतीन्यपि भेषजान्यत्र हितानि ।

दुर्ज्जरं सत्यजेत् सर्व्वं निशायामशनं तथा ।
अजीर्णी मन्दवह्निश्च भक्षयेत् सुजरं लघु ॥

विसूच्या विशेषचिकित्सा ।

अतिसारदशाया हि रसचूर्णेन संयुतम् ।
फणिफेनं यथामात्रं प्रयुञ्ज्याद्रोगिणे भिषक् ॥
शरीरे शीततामाप्ते क्षीणतामिन्द्रिये गते ।
यथामात्रं प्रयुञ्जीत मृतसञ्जीवनीं सुधाम् ॥

कर्पूरवासितं तोयं तथातिशीततां गतम्।
तृषार्त्ताय मुहुर्दद्यात् युक्तितः प्राणधारणम्॥
उदरोर्द्धं प्रलिम्पेच्च कल्कैः सर्षपसम्भवैः।
तेन वान्तिः शमं याति रोगी च सुखमाप्नुयात्॥
हिङ्गु चन्द्रकणा पिष्ट्वा ततो रक्तिद्वयोन्मितम्।
काञ्जिकेन समं दद्यादथवा सौध्रसंयुतम्॥
श्रीवासेन समभ्यज्य स्वेदयेदुदरं शनैः।
स्वेदेन प्रशमं याति वेदनोदरसम्भवा॥
ग्रीवायामथवा पृष्ठे पिष्टैः सिद्धार्थकैर्भिषक्।
हिक्काप्रशमनार्थाय पृष्ठवंशं प्रलेपयेत्॥
मूत्ररोधप्रशान्त्यर्थं स्थलपद्मस्य पत्रजम्।
स्वरसं सितया सार्द्धं पाययेत् परमं हितम्॥
मोरकं वटपत्रीञ्च पिष्ट्वा पिम्पेत् तथोदरम्।
शीताम्भः पाययेत् तच्च तन्मूत्रकरणं परम्॥
शिरःशूले च शिरसि सिञ्चेत् तोयं सुशीतलम्।
मज्जासञ्जननार्थञ्च चरणौ परितापयेत्॥
कुष्ठसैन्धवयोः कल्कं चुक्रतैलसमन्वितम्।
विसूच्यां मर्दयेत् कोष्णं खल्लीशूलनिवृत्तये॥

त्वक्पत्ररास्नागुरुशिग्रुकुष्ठै-
रम्लप्रपिष्टैः सवचाशताह्वैः।
उद्वर्त्तनं खल्लिविसूचीकाघ्नं
तैलं विपक्कञ्च तदर्थकारि॥

पीतः कर्पूरजोऽरिष्टो विसूच्यां सततं हितः।
जलपीतमपामार्गमूलं चैतां निहन्ति च॥

चूर्णं शृङ्गाटकोद्भूत छागेन पयसा पचेत् ।
विसूच्यादौ तदशन हित परममुच्यते ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
अग्निमान्द्याद्यधिकार ऊनविंशोऽध्याय ।

---

## विंशोऽध्याय ।

अरोचकाधिकार ।

सनिदानमरोचकमाह ।

वातादिभि शोकभयातिलोभ
क्रोधैर्मनोघ्नाशन गन्धरूपै ।
अरोचका स्यु परिहृष्टदन्त
कषायवक्त्रश्च मतोऽनिलेन ॥

वातादिभिस्त्रय सन्निपातेनैक शोकादिना आगन्तुरेक. एव पञ्च अरोचका भवन्ति। अतिलोभादहितस्य सततोपयोगहेतुतया दोषप्रकोप । वातिकस्य लक्षणमाह परिहृष्टदन्त इत्यादि। परिहृष्टदन्त अम्लभोजनेनेव परिहृष्टो दन्तो यस्य स । तथा कषायवक्त्र कषायरसो वक्त्र यस्य स ।

पित्तजकफजयोर्लक्षणम ।

कट्वम्लमुष्ण विरसञ्च पूति पित्तेन विद्याल्लवणञ्च वक्त्रम् ।
माधुर्य्यपैच्छिल्य गुरुत्व शैत्यस्निग्धत्व दौर्गन्ध्ययुत कफेन ॥

कट्वम्लमित्यादिना विद्यादित्यन्तेन पैत्तिकस्य लक्षण ततो लवणञ्चेत्यादिना श्लैष्मिकस्येति। पैच्छिल्य मुखस्याभ्यन्तरे स्निग्धत्व वह्नि ।

हृच्छूलपोडनयुत पवनेन पित्तात्
तृड्दाह चोषबहुल मकफप्रसेकम।
श्लेष्मात्मक बहुरुज बहुभिश्च विद्याद्
वैगुण्यमोहजडताभिरथापरञ्च॥

हृच्छूलपीडनयुत हृदि शूलेन पीडन तेन युतम्। चोष पार्श्वस्थिताग्निनेव सन्ताप। बहुभि त्रिभिर्दोषै बहुरुज कथितवातादिरोगयुक्तान्। वैगुण्य मनसो व्याकुलत्वम्। जडता शून्यता। अपरमागन्तुजम।

आगन्तुजसान्निपातिकयोर्लक्षणम्।
अरोचके शोकभयातिलोभ
क्रोधाद्यहृद्याशुचिगन्धजे स्यात्।
स्वाभाविकञ्चास्यमथारुचिश्च,
त्रिदोषजेनैकरस भवेच्च॥

क्रोधादीत्यादिशब्देन अहृद्ययोरशनगन्धयोर्ग्रहणम। स्वाभाविकमविकृतरसम्। त्रिदोषजमाह नैकरसम् अनेकरम मास्य स्यादिति।

प्रक्षिप्तन्तु मुखे चान्न यत्र न स्वदते नर।
अरोचक स विज्ञेयो भक्तद्वेषमत शृणु॥
चिन्तयित्वा तु मनसा दृष्ट्वा स्पृष्ट्वा च भोजनम्।
द्वेषमायाति चेज्जन्तुर्भक्तद्वेष स उच्यते॥

कुपितस्य भयार्त्तस्य तथा भक्ताविरोधिन ।
यत्र नान्ने भवेच्छ्रद्धा सोऽभक्तच्छन्द उच्यते ॥

न स्वदते अन्नस्य मिष्टता न प्राप्नोति तदन्न मिष्ट न लगतीति यावत् ।

अरोचकस्य चिकित्सा ।

वस्ति समीरणे पित्ते विरेक वमन कफे ।
कुर्य्याद्धृद्यानुकूलानि हर्षणञ्च मनोघ्नजे ॥
भोजनाग्रे सदा पथ्य लवणार्द्रकभक्षणम ।
रोचन दीपन वह्नेर्जिह्वाकण्ठविशोधनम् ॥
कुष्ठ सौवर्च्चलाजाजीशर्करामरिच विडम् ।
धात्र्येलापद्मकोशीरपिप्पल्यश्चन्दनोत्पलम् ॥
लोध्र तेजोवती पथ्या त्र्यूषण सयवाग्रजम् ।
आर्द्रदाडिमनिर्यासश्चाजाजी शर्करा तथा ॥
सतैलमाक्षिकास्त्वेते चत्वार कवडग्रहा ।
चतुरोऽरोचकान् हन्युर्वाताद्येकजसर्व्वजान् ॥
त्वङ्मुस्तमेलाधान्यानि मुस्तमामलक त्वच ।
त्वक् च दार्व्वी यमान्यश्च पिप्पल्यस्तेजवत्यपि ॥
यमानी तिन्तिडीकञ्च पञ्चैते मुखशोधना ।
श्लोकपादैरभिहिता सर्व्वारोचकनाशना ॥
कारव्यजाजी मरिच द्राक्षा वृक्षाम्ल दाडिमम् ।
सौवर्च्चल गुडक्षौद्र सर्व्वारोचकनाशनम् ॥
विट्चूर्णमधुसयुक्तो रसो दाडिमसम्भव ।
असाध्यामपि सहन्यादरुचि वक्त्रधारित ॥

तिन्तिडीपानकश्चापि रसाला रसकेशरी ।
भेषजान्येवमादीनि प्रयोज्यान्यरुचौ गदे ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
अरोचकाधिकारो विंशोऽध्याय ।

---

## एकविंशोऽध्याय ।

---

### अतीसाराधिकार ।

#### अतिसारस्य विप्रकृष्ट निदानम् ।

गुर्व्वतिस्निग्धरूक्षोष्णद्रवस्थूलातिशीतलै ।
विरुद्धाध्यशनाजीर्णैर्विषमैश्चापि भोजनै ॥
स्नेहाद्यैरपि युक्तैश्च मिथ्यायुक्तैर्विषैर्भयै ।
शोकाद्दुष्टाम्बुमद्यातिपानै सात्मर्त्तुपर्य्ययै ॥
जलाभिरमणैर्वेगविघातै क्रिमिदोषत ।
नृणा भवत्यतीसारो लक्षण तस्य वक्ष्यते ॥

#### तस्य पूर्व्वरूपम ।

हृन्नाभिपायूदरकुक्षितोद
गात्रावसादानिलसन्निरोधा ।
विट्सङ्ग आध्मानमथाविपाको
भविष्यतस्तस्य पुर सराणि ॥

तस्य सम्प्राप्ति ।

सशस्यापा धातुरग्नि प्रवृद्ध
शकृन्मिश्रो वायुनाध प्रणुन्न ।
सरत्यतोवातिसार तमाहु
र्व्याधि घोर षड्विध त वदन्ति ॥
एकैकश सर्व्वशश्चापि दोष
शोकेनान्य षष्ठ आमेन चोक्त ।

वातिकस्य तस्य लक्षणम् ।

अरुण फेनिल रूक्षमल्पमल्प मुहुर्मुहु ।
शकृदाम सरुक्शब्द मारुतेनातिसार्य्यते ॥

पैत्तिकस्य लक्षणम् ।

पित्तात् पीत हरित लोहित वा
तृष्णामूर्च्छादाहपाकोपपनम् ।

श्लैष्मिकस्य लक्षणम् ।

शुक्ल सान्द्र सकफ श्लेष्मणा तु
विस्र शीत हृष्टरोमा मनुष्य ।

सान्निपातिकस्य लक्षणम् ।

वराहस्नेहमासाम्बुसदृश सर्व्वरूपिणम् ।
कृच्छ्रसाध्यमतीसार विद्याद्दोषत्रयोद्भवम् ॥

शोकजस्य लक्षणम् ।

तैस्तैर्भावै शोचतोऽल्पाशनस्य
वाष्पोष्मा वै वह्निमाविश्य जन्तो ।
कोष्ठ गत्वा क्षोभयेत् तस्य रक्त
तच्चाधस्तात् काकणन्तीप्रकाशम् ॥

निर्गच्छेद्वै विड्विमिश्रं ह्यविड्वा
निर्गन्धं वा गन्धवद्वातिसारः।
शोकोत्पन्नो दुश्चिकित्स्योऽतिमात्रं
रोगो वैद्यैः कष्ट एष प्रदिष्टः॥

आमातिसारस्य लक्षणम्।

अन्नाजीर्णात् प्रद्रुताः क्षोभयन्तः
कोष्ठं दोषा धातुसङ्घान् मलांश्च।
नानावर्णं नैकशः सारयन्ति शूलोपेतं षष्ठमेनं वदन्ति।

पित्तातिसारभेदस्य रक्तातिसारस्य लक्षणम्।

पित्तकृन्ति यदात्यर्थं द्रव्याण्यश्नाति पैत्तिके।
तदोपजायतेऽभीक्ष्णं रक्तातिसार उल्बणः॥

सर्व्वातीसाराणामामावस्थापक्वावस्थयोर्लक्षणम्।

संसृष्टमेभिर्दोषैस्तु न्यस्तमप्स्ववसीदति।
पुरीषं भृशदुर्गन्धि पिच्छिलं चामसंज्ञितम्॥
एतान्येव तु लिङ्गानि विपरीतानि यस्य वै।
लाघवञ्च विशेषेण तस्य पक्वं विनिर्दिशेत्॥

अतिसारस्यारिष्ट लक्षणम्।

पक्वजाम्बवसङ्काशं यकृत्खण्डनिभं तनुम्।
घृततैलवसामज्जवेसवारपयोदधि॥
मांसधावनतोयाभं कृष्णं नीलारुणप्रभम्।
कर्व्वुरं मेचकं स्निग्धं चन्द्रकोपगतं घनम्॥
कुणपं मस्तुलुङ्गाभं सुगन्धि क्वथितं बहु।
तृष्णादाहतमःश्वासहिक्कापार्श्वास्थिशूलिनम्॥
सम्मूर्च्छारतिसम्मोहयुक्तं पक्वबलीगुदम्।

प्रलापयुक्तञ्च भिषग्वर्ज्जयेदतिसारिणम् ॥
असंवृतगुदं क्षीणं दूराध्मातमुपद्रुतम् ।
गुदे पक्के गतोष्माणमतिसारकिणं त्यजेत् ॥
श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीडितम् ।
विशेषेण नरं वृद्धमतीसारो विनाशयेत् ॥

प्रवाहिकाया संप्राप्ति ।

वायु प्रवृद्धो निचित बलाश
नुदत्यधस्तादहिताशनस्य ।
प्रवाहतोऽल्पं बहुशो मलाक्तं
प्रवाहिका ता प्रवदन्ति तज्ज्ञा ॥
प्रवाहिका वातकृता सशूला
पित्तात् सदाहा सकफा कफाच्च ।
सशोणिता शोणितसम्भवा च
ता स्नेहरूक्षप्रभवा मतास्तु ॥
तासामतीसारवदादिशेच्च
लिङ्गं क्रमञ्चामविपक्कताञ्च ॥

अतिसारमुक्तस्य लक्षणम् ।

यस्योच्चार विना मूत्रं सम्यग्वायुश्च गच्छति ।
दीप्ताग्नेर्लघुकोष्ठस्य स्थितस्तस्योदरामय ॥

अतीसारस्य चिकित्सा ।

आमे विलङ्घनं शस्तमादौ पाचनमेव च ।
कार्य्यञ्चानशनस्यान्ते प्रद्रवं लघु भोजनम् ॥
एकं हि लङ्घनं त्यक्त्वा बलिनोऽन्यन्न भेषजम् ।
पक्त्वा तन्निखिलान् दोषास्त्वरया शमयेद्गदम ॥

ह्रीवेरशृङ्गवेराभ्या मुस्तपर्पटकेन वा।
मुस्तोदीच्यशृत वापि तोय देय पिपासवे॥
युक्तेऽन्नकाले चुत्चाम लघून्यन्नानि भोजयेत्॥

औषधे सिद्धपेया लाजाना मण्डवोऽप्यतिसारहिता वस्त्र-
प्रसुतमण्ड पेयाश्च मसूरयूषश्च।

न तु सग्रहण दद्यात् पूर्व्वमामातिसारिणे।
दोषा ह्यादौ रुध्यमाना जनयन्त्यामयान् बहून्॥
शोथपाण्डामयप्लीहकुष्ठगुल्मोदरज्वरान्।
दण्डकालसकाध्मानग्रहण्यर्शोगदास्तथा॥
क्षीणधातुबलार्त्तस्य बहुदोषोऽतिनि स्रुत।
आमोऽपि स्तम्भनीय स्यात् पाचनान्मरण भवेत्॥
स्तोक स्तोक विबन्ध वा सशूल योऽतिसार्य्यते।
अभयापिप्पलीकल्कै सुखोष्णैस्त विपाचयेत्॥

धान्यपञ्चक धान्यचतुष्कञ्च।

धान्यक नागर मुस्त बालक विल्वमेव च।
आमशूलविबन्धघ्न पाचन वह्निदीपनम॥
इद धान्यचतुष्क स्यात् पैत्ते शुण्ठी विना पुन।
नागरातिविषामुस्तैरथवा धान्यनागरै।
तृष्णाशूलातिसारघ्न पाचन दीपन लघु॥
पक्वोऽसकृदतीसारो ग्रहणी मार्दवाद्यदा।
प्रवर्त्तते तदा कार्य्य क्षिप्र साग्राहिको विधि॥

कञ्चटादि।

कञ्चटदाडिमजम्बुशृङ्गाटकपत्रह्रीवेरम।
जलधरनागरसहित गङ्गामपि वेगिनीं रुन्ध्यात्॥

कुटजादि ।

कुटज मांडिम मुस्त धातकी विल्वबालकम ।
लोध्रचन्दनपाठाश्च कषाय मधुना पिबेत् ॥
सामे शूले सरक्ते च पिच्छास्रावे च शस्यते ।
कुटजादिरिति ख्यात सर्व्वातीसारनाशन ॥

वत्सकादि ।

सवत्सक सातिविष सविल्व सोदीच्य मुस्तश्च शृत कषाय ।
सामे सशूले सहशोणिते च
चिरप्रवृत्तोऽपि हितोऽतिसारे ॥
कृत्वालबाल सुदृढ पिष्टैरामलकैर्भिषक् ।
आर्द्रकस्वरसेनाथ पूरयेन्नाभिमण्डलम ॥
नदीवेगोपम घोरमतिसार विनाशयेत् ॥
तथा जातीफल पिष्ट्वा नाभौ दद्यात् प्रलेपनम ।
दुर्निवारमतीसार वारयत्यनिवारितम ॥
आम्रस्य वल्कल पिष्ट काञ्जिकेन प्रयत्नत ।
नाभि सलेपयेत्तेन कल्केन मतिमान् भिषक् ॥
नदीवेगोपम घोरमतीसार निवारयेत् ॥
विल्वचूतास्थिनिर्य्यूह पीत सक्षौद्रशर्कर ।
निहन्याच्छर्द्यतीसार वैश्वानर इवाहुतिम ॥
पटोलयवधन्याकक्वाथ पेय सुशीतल ।
शर्करामधुसयुक्तश्छर्द्यतीसारनाशन ॥
जातीफल त्रिदशपुष्पसमन्वितञ्च
जीरञ्च टङ्कनयुत मुनिभि प्रणीतम् ।
एतानि माक्षिकसितासहितानि लिढ्वा

आमातिसारमखिलं गुरुमाशु हन्ति ॥
पीत्वाहिफेनं छागेन दुग्धेन रक्तिकोन्मितम।
अतीसारं नदीवेगं सुघोरं त्वरया जयेत् ॥
अहिफेनातियोगेन नातिसारो निवर्त्तते।
किन्त्वन्यैर्बहुभिर्योगैर्मा मृतोऽमृत एव स ॥

कुटजदाडिमकषाय।

कषायो मधुना पीतस्त्वचो दाडिमवल्कलात्।
सद्यो जयेदतीसारं सरक्तं दुर्निवारकम् ॥

गुडविल्वम्।

गुडेन खादितं विल्वं रक्तातीसारनाशनम्।
आमशूलं बन्धघ्नं कुक्षिरोगविनाशनम् ॥
जम्ब्वाम्रामलकीनान्तु पल्लवानथ कुट्टयेत्।
सङ्गृह्य स्वरसं तेषामजाक्षीरेण योजयेत् ॥
तं पिबेन्मधुना युक्तं रक्तातिसारनाशनम् ॥
विल्वं छागपयः सिद्धं सितामोचरसान्वितम्।
कलिङ्गचूर्णसंयुक्तं रक्तातिसारनाशनम ॥
पीत्वा शतावरीकल्कं पयसा क्षीरभुग् जयेत्।
रक्तातिसारं पीत्वा वा तया सिद्धं घृतं नरः ॥
कुटजस्य पलं गृह्य चाष्टभागजले शृतम।
तथैव विपचेद्भूयो दाडिमोदकसंयुतम् ॥
यावच्चैव लसीकाभं शृतं तदुपकल्पयेत्।
तस्यार्द्धकर्षं तक्रेण पिबेद्रक्तातिसारवान् ॥
अवश्यमरणीयोऽपि मृत्योर्य्याति न गोचरम् ॥
कल्कस्तिलानां कृष्णानां शर्कराभागसंयुतः।

आजेन पयसा पीत सद्यो रक्त नियच्छति ॥

विल्वाम्बधातकोपाठाशुण्ठीमोचरसा समा ।

पीता रुन्धन्त्यतीसार गुडतक्रेण दुर्जयम् ॥

प्रवाहिकायाम ।

बाल विल्व गुड तैल पिप्पली विश्वभेषजम् ।

लिह्याद्वाते प्रतिहते सशूले सप्रवाहिके ॥

पयसा पिप्पलीकल्क पीतो वा मरिचोद्भव ।

त्र्यहात् प्रवाहिका हन्ति चिरकालानुबन्धिनीम् ॥

दध्ना ससारेण समाक्षिकेण भुञ्जीत निश्चारकपीडितस्तु ।

सुतप्तकुप्यक्वथितेन वापि क्षीरेण शीतेन मधुप्लुतेन ॥

निश्चारके सरक्ते तु क्रिया रक्तातिसारजित् ।

कर्त्तव्या भिषजा वीक्ष्य दोषमग्नि बल वय ॥

नारायणचूर्ण वृहद्गङ्गाधरचूर्ण कुटजलेह कुटजाष्टकादीनि भेषजानि छागदुग्धाद्यनुपानानि यवामात्राणि अतीसारादी देयानि ।

अमृतार्णवरस जातीफलरसाभयनृसिंहरसानन्दभैरवरस-कर्पूररसादयोऽप्यणुवटिका अत्र हिता ।

अतीसारेऽपि पथ्यादि ज्ञेय सर्व्वमजीर्णवत् ॥

स्नानावगाहावभ्यङ्ग गुरुस्निग्धद्रवाशनम् ।

व्यायाममग्निसन्तापमतिसारी विवर्ज्जयेत् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने

अतिसाराधिकार एकविंशोऽध्याय ।

# द्वाविंशोऽध्यायः।



## अथ ग्रहणीरोगाधिकार।

ग्रहणीरोगस्य सम्प्राप्ति सञ्ज्ञा सामान्यलक्षणञ्च।

अतीसारे निवृत्तेऽपि मन्दाग्नेरहिताशिन।
भूय सन्दूषितो वह्निर्ग्रहणीमभिदूषयेत॥
एकैकश सर्व्वशश्च दोषैरत्यर्थमूर्च्छितः।
सा दुष्टा बहुशोभुक्तमाममेव विमुञ्चति॥
पक्वं वा सरुजं पूति मुहुर्बद्धं मुहुर्द्रवम्।
ग्रहणीरोगमा[illegible]
अपिशब्दादजातातिसारस्यापि ग्रहणीरोग[illegible]।

### तस्य पूर्व्वरूपम्।

पूर्व्वरूपन्तु तस्येद तृष्णालस्य बलक्षय।
विदाहोऽन्नस्य पाकश्च चिरात् कायस्य गौरवम॥

### वातजाया ग्रहण्या निदान सम्प्राप्तिर्लक्षणञ्च।

कटुतिक्तकषायातिरूक्षसदुष्टभोजनै।
प्रमितानशनात्यध्ववेगनिग्रहमैथुनै॥
मारुत कुपितो वह्निं सञ्छाद्य कुरुते गदान्।
तस्यान्नं पच्यते दुःखं शुक्तपाकं खराङ्गता॥
कण्ठास्यशोष क्षुत्तृष्णा तिमिर कर्णयो स्वन।
पार्श्वोरुवङ्क्षणग्रीवारुजाभीक्ष्ण विसूचिका॥
हृत्पीडाकार्श्यदौर्ब्बल्य वैरस्य परिकर्त्तिका।
गृद्धि सर्व्वरसानाञ्च मनस सदनन्तथा॥

जीर्णे जीर्य्यति चाध्मान भुक्ते स्वास्थ्यमुपैति च ।
स वातगुल्महृद्रोगप्लीहाशङ्की च मानव ॥
चिरादु दु ख द्रव शुष्क तन्वाम शब्दफेनवत् ।
पुन पुन सृजेद्वर्च्च कामश्वासार्दितोऽनिलात ॥

पित्तजायास्तस्या निदान सम्प्राप्तिर्लक्षणञ्च ।

कट्वजीर्णविदाह्यम्लक्षाराद्यै पित्तमुल्बणम ।
आप्लावयद्धन्त्यनल जलन्तमिवानलम् ॥
सोऽजीर्ण नीलपीताभ पीताभ सार्य्यते द्रवम् ।
पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दित ॥

श्लेष्मजायास्तस्या निदान सम्प्राप्तिर्लक्षणञ्च ।

गुर्व्वतिस्निग्धशीतादिभोजनादतिभोजनात् ।
भुक्तमात्रस्य च सप्लाद्धन्त्यग्नि कुपित कफ ॥
तस्यान्न पच्यते दु ख हृल्लासच्छर्द्दरोचका ।
आस्योपदेहमाधुर्य्य कासष्ठीवनपीनसा ॥
हृदय मन्यते स्त्यानमुदर स्तिमित गुरु ।
दुष्टो मधुर उद्गार सदन स्त्रीष्वहर्षणम् ॥
भिन्नामश्लेष्मसस्पृष्टगुरुवर्च्च प्रवर्त्तनम ।
अकृशस्यापि दौर्व्वल्यमालस्यञ्च कफात्मके ।

त्रिदोषजाया निदान सम्प्राप्तिश्च ।

पृथग्वातादिनिर्दिष्टहेतुलिङ्गसमागमे ।
त्रिदोष निर्दिशेदेव तेषा वक्ष्यामि भेषजम् ॥

सग्रहग्रहण्या लक्षणम् ।

अन्त्रकूजनमालस्यं दौर्बल्यं सदनन्तथा ।
द्रवं शीतं घनं स्निग्धं सकटीवेदनं शकृत् ॥
आमं बहु सपिच्छञ्च सशब्दं मन्दवेदनम् ।
पक्षान्मासाद्दशाहाद्वा नित्यं वाप्यथ मुञ्चति ॥
दिवा प्रकोपो भवति रात्रौ शान्तिं व्रजेच्च सा ।
दुर्विज्ञेया दुश्चिकित्स्या चिरकालानुबन्धिनी ॥
सा भवेदामवातेन सग्रहग्रहणी मता ॥

घटीयन्त्राख्यस्य ग्रहणीरोगस्य लक्षणम् ।

प्रसुप्तौ [illegible] जलघटीध्वनिः ।
तं वदन्ति घटीयन्त्रमसाध्यं ग्रहणीगदम् ॥

जलघटीत्वाज सवामुखीकृतायाः जलघट्या जलानि सरणे यथा ध्वनि, तथा मलनिगमनसमये भवति ।

बालो जीवति यत्नेन युवा जीवति वा न वा ।
वृद्धस्तु ग्रहणीरोगान्न जीवति न जीवति ॥

ग्रहण्याश्चिकित्सा ।

ग्रहणीमाश्रितं दोषमजीर्णवदुपाचरेत् ।
अतीसारोक्तविधिना तस्यामञ्च विपाचयेत ॥
शरीरानुगते सामे रसे लङ्घनपाचनम ।
विशुद्धामाशयायास्मै पञ्चकोलादिभिर्युतम ॥
दद्यात् पेयादि लघ्वन्नं पुनर्योगांश्च दीपनान् ॥
ग्रहणीदोषिणां तक्रं दीपनं ग्राहि लाघवात् ।
पथ्यं मधुरपाकित्वान्न च पित्तप्रकोपणम् ॥
कषायोष्णविकाशित्वाद् रौक्ष्याच्चैव कफे हितम् ।

वाते स्यादम्लसान्द्रत्वात् सद्यष्कमविदाहि तत् ॥
कपित्थविल्वचाङ्गेरी तक्रदाडिमसाधिता ।
यवागू पाचयत्याम शकृत सवर्त्तयत्यपि ॥
संवर्त्तयति घनीकरोति ।
नागर चित्रक चव्य मुस्तक विल्वदाडिमौ ।
यमानी क्वाथयित्वा च सैन्धवेन पिबेन्नरो ॥
हरीतकी यमानी च सैन्धवञ्च तथा विडम ।
तक्रेण साधित कल्का इत्येषा वह्निदीपन ॥
आध्मानापहर श्रेष्ठ कासश्वासनिसूदन ।
कोष्ठशुद्धिकरश्चापि ग्रहणीगदनाशन ।
लिम्पाकस्य रस वापि निम्बूकस्यापि वा तथा ।
पिबेत् सलवण नित्य ग्रहणीगदशान्तये ॥
मुस्तकातिविषाविल्व कौटज सूक्ष्मचूर्णितम् ।
मधुना च समालीढ नाशयेद ग्रहणीगदम् ॥
श्वेती वा यदि वा रक्त सुपक्वो ग्रहणीगद ।
गुडेनाधिकसर्जेन भक्षितेनाशु नश्यति ॥
अतिसारोक्तभैषज्यैर्निरामा ग्रहणी जयेत् ॥
चित्रकाख्या च गुडिका चूर्ण गङ्गाधराभिधम् ।
पाठाद्यञ्च लवङ्गाद्य चूर्णमायामकाञ्जिकम ॥
गुड कल्याणको नाम पिप्पल्याद्यासवस्तथा ।
मोदकोऽग्निकुमाराख्य श्रीकामेश्वरमोदक ॥
जातीफलाद्या वटिका रसश्चाग्निकुमारक ।
नृपवल्लभनामा च रसोऽभ्रवटिका तथा ॥
रसपर्पटिका चापि तथा विजयपर्पटी ।

पञ्चामृताभिधा चापि लौहपर्पटिका तथा ॥
ग्रहणीकपाटाख्य रस स चात्र परमो हित ।
एतान्येव तथान्यानि भेषजान्यत्र योजयेत् ॥
सुजर दीपन वक्रेरन्न पानञ्च नित्यश ।
सेवेत मतिमानत्र विपरीत विवर्ज्जयेत् ॥
शालि प्रत्र मसूरञ्च यव मासरस तथा ।
मद्गुरञ्च तथा शृङ्गी तक्र विल्वञ्च दाडिमम ॥
शृङ्गाटक छागदुग्ध वार्त्ताकुञ्च कसेरुकम् ।
ग्रहणीगदवान् नित्य भुञ्जीतैवविधानि च ॥
दिवास्वप्न सुरा तीच्णा रात्रौ जागरण तथा ।
गुरु चान्नमभिष्यन्दि यत्नत परिवर्ज्जयेत् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
ग्रहणीरोगाधिकारो द्वाविंशोऽध्याय ।

---

## त्रयोविंशोऽध्याय: ।

### अम्लपित्ताधिकार ।

अम्लपित्तस्य विप्रकृष्ट निदानम ।
विरुद्धदुष्टाम्लविदाहि पित्त
प्रकोपि पानान्नभुजो विदग्धम् ।
पित्त स्वहेतूपचित पुरा यत्
तदम्लपित्त प्रवदन्ति सन्त ॥

अम्लपित्तस्य लक्षणम् ।

अविपाकक्लमोत्क्लेशतिक्ताम्लोद्गारगौरवै ।
हृत्कण्ठदाहारुचिभिश्चाम्लपित्त वदेद्भिषक् ॥

ऊर्ध्वं

तृड्दाहमूर्च्छाभ्रममोहकारि
प्रयात्यधो वा विविधप्रकारम् ।
हृल्लासकोठानलसादहर्ष
स्वेदाङ्गपीतत्वकर कदाचित् ॥
वान्त हरित्पीतकनीलकृष्ण-
मारक्तरक्ताभमतीव चाम्लम् ।
मासोदकाभ त्वतिपिच्छिलाभ
श्लेष्मानुजात विविध रसेन ॥

अम्लपित्तस्यावस्थाविशेष ।

भुक्ते विदग्धे त्वथवाप्यभुक्ते
करोति तिक्ताम्लवमि कदाचित् ।
उद्गारमेवविधमेव कण्ठ
हृत्कुक्षिदाह शिरसो रुज वा ॥
करचरणदाहमौष्ण्य महतीमरुचि ज्वरञ्च कफपित्तम् ।
जनयति कण्डूमण्डलपिडकाशतनिचितगात्ररोगचयम ॥
रोगोऽयमम्लपित्ताख्यो यत्नात् ससाध्यते नव ।
चिरोत्थितो भवेद याप्य कृच्छ्रसाध्य स कस्यचित् ॥
सानिल सानिलकफ सकफ तच्च लक्षयेत् ।
दोषलिङ्गेन मतिमान् भिषड्म हकर हि तत् ॥
कम्पप्रलाप मूर्च्छाश्चिमिचिमि गात्रावसाद शूलानि ।
तमसो दर्शन विभ्रम प्रमोह हर्षास्त्वनिलकोपात् ॥

कफनिष्ठीवन गौरव जडतारुचि शीतसादवमि लेपा ॥
दहनबलसाद कण्डू निद्रा चिह्न कफानुगे भवति।
उभयमिदमेव चिह्नं मारुत कफसम्भवे भवत्यम्ले ॥

## श्लेष्मपित्तस्य लक्षणम्।

तमो मूर्च्छारुचिश्छर्द्दिरालस्यञ्च शिरोरुजा।
प्रसेको मुखमाधुर्य्यं श्लेष्मपित्तस्य लक्षणम्।

## अम्लपित्तस्य चिकित्सा।

अम्लपित्ते तु वमन पटोलारिष्टवासकैः।
कारयेन्मदनैः क्षौद्रैः सैन्धवैश्च तथा भिषक्॥
विरेचन त्रिवृच्चूर्ण मधु धात्री फलद्रवैः।
ऊर्द्धग वमनैर्विद्वान् रोग रेचनैर्हरेत्॥
निस्तुष यववृषधात्रीक्वथित सलिल त्रिगन्धमधुयुक्तम्।
द्रुततरमपहरति वमि सञ्जनितामम्लपित्तेन॥
पटोल नागर धान्य क्वाथयित्वा जल पिबेत्।
कण्डू पामार्त्ति शूलघ्न कफपित्ताग्निमान्द्यजित्॥

पटोल विश्वामृत रोहिणीकृत
जल पिबेत् पित्तकफाश्रये तु।
शूल भ्रमारोचक वह्निमान्द्य
दाह ज्वर च्छर्दि निवारण तत्॥

अभया पिप्पली द्राक्षा सिता धान्ययवासकम्।
मधुना कण्ठदाहघ्न पित्त श्लेष्महर परम्॥
पटोल यव धन्याक पिप्पल्यामलकानि च।
एषा क्षौद्रयुत क्वाथ पित्तश्लेष्महर परः॥
वासामृता पर्पटक निम्बभूनिम्बमार्कवैः।

त्रिफला कुलकै क्वाथ सक्षौद्रश्चाम्लपित्तहा ॥

अविपत्तिकरचूर्णं पिप्पलीखण्ड शुण्ठीखण्ड सितामण्डूर सौभाग्यशुण्ठीमोदकाद्यानि भेषजान्यत्र हितानि।

क्षुधावतीगुडिका पञ्चाननगुडिका पानीयभक्तवटिका लीलाविलासरसश्चैवविधान्यपराण्यपि औषधान्यत्र प्रशस्तानि। श्रीविल्वाद्यादिकानि तैलानि च शस्तानि।

यवगोधूम मुद्गाश्च पुराणा रक्तशालय ।
जलानि तप्तशीतानि शर्करा मधु शक्तव ॥
कर्कोटक कारवेल्ल पटोल हिलमोचिका ।
वेत्राग्र वृद्धकुष्माण्ड रम्भापुष्पञ्च वास्तूकम् ॥
कपित्थ दाडिम धात्री तिक्तानि सकलानि च ।
अम्लपित्तामये नित्य सेवितव्यानि मानवै ॥
नवान्नानि समस्तानि कफपित्तकराणि च ।
वमिवेग तिलान् माषान् कुलत्थांस्तैलभक्षणम् ॥
अविदुग्धञ्च धान्याम्ल लवणाम्लकटूनि च ।
गुर्व्वन्न दधि मद्यञ्च वर्ज्जयेदम्लपित्तवान् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
ग्रहणीरोगाधिकारस्त्रयोविंशोऽध्याय ।

# चतुस्त्रिंशोऽध्यायः।

—— ० ——

## शूलाधिकार।

### शूलस्य सन्निकृष्ट निदानम्।

दोषैः पृथक् समस्तामद्वन्द्वैः शूलोऽष्टधा भवेत्।
सर्व्वेष्वेतेषु शूलेषु प्रायेण पवनः प्रभुः॥

वातिकशूलस्य विप्रकृष्ट निदान सम्प्राप्तिर्लक्षणञ्च।

व्यायाम यानादतिमैथुनाच्च
प्रजागराच्छीतजलातिपानात्।
कलायमुद्गाढकि कोरदूषा।
दत्यर्थरूक्षाध्यशनाभिघातात्॥
कषायतिक्तातिविरूढजान्न
विरुद्ध वल्लूरक शुष्कशाकात्।
विट्शुक्रमूत्रानिलवेगरोधा
च्छोकोपवासादतिहास्यभाषात्॥
वायुः प्रवृद्धो जनयेद्धि शूलं
हृत्पार्श्वपृष्ठ त्रिकवस्तिदेशे।
जीर्णे प्रदोषे च घनागमे च
शीते च कोपं समुपैति गाढम्॥
मुहुर्मुहुश्चोपशम प्रकोपै
विण्मूत्र संस्तम्भन तोदभेदैः।
संस्वेदनाभ्यञ्जन मर्द्दनाद्यैः
स्निग्धोष्ण भोज्यैश्च शमं प्रयाति॥

पैत्तिकस्य विप्रकृष्ट निदान सम्प्राप्तिर्लक्षणञ्च ।

क्षारातितीक्ष्णोष्ण विदाहि तैल
निष्पाव पिण्याक कुलत्थयूषै ।
कट्वम्ल सौवीर सुराविकारै
क्रोधानलायास रवि प्रतापै ॥
ग्राम्यातियोगादशनैर्विदग्धै
पित्त प्रकुप्याशु करोति शूलम् ।
तृण्मोहदाहार्त्तिकर हि नाभ्या
सस्वेद मूर्च्छा भ्रम चोषयुक्तम् ॥
मध्यन्दिने कुप्यति चार्द्धरात्रे
निदाघकाले जलदात्यये च ।
शीते च शीतै समुपैति शान्ति
सुस्वादु शीतैरपि भोजनैश्च ॥

श्लैष्मिकस्य विप्रकृष्ट निदान सम्प्राप्तिर्लक्षणञ्च ।

आनूपवारिजकिलाटपयोविकारै
मांसेक्षुपिष्टकृशरातिलशष्कुलीभि ।
अन्यैर्बलासजनकैरपि हेतुभिश्च
श्लेष्मा प्रकोपमुपगम्य करोति शूलम ॥
हृल्लासकाससदनारुचिसम्प्रसेकै-
रामाशये स्तिमितकोष्ठशिरोगुरुत्वे ।
भुक्ते सदैव हि रुज कुरुतेऽतिमात्र
सूर्य्योदयेऽथ शिशिरे कुसुमागमे च ॥

द्वन्द्वजस्य लक्षणम् ।

द्विदोषलक्षणैरेतैर्विद्याच्छूल द्विदोषजम् ।

सान्निपातिकस्य लक्षणम्।

सर्व्वेषु दोषेषु च सर्व्वलिङ्ग
विद्याद्भिषक् सर्व्वभव हि शूलम्।
सुकष्टमेन विषवज्रकल्प
विवर्ज्जनीय प्रवदन्ति तज्ज्ञा ॥

आमजस्य लक्षणम्।

आटोपहृल्लासवमीगुरुत्व
स्तैमित्यमानाहकफप्रसेकै।
कफस्य लिङ्गेन समानलिङ्ग-
मामोद्भव शूलमुदाहरन्ति ॥

वस्तौ हृत्पार्श्वपृष्ठेषु स शूल कफवातिक।
कुक्षौ हृन्नाभिमध्येषु स शूल कफपैत्तिक ॥
दाहज्वरकरो घोरो विज्ञेयो वातपैत्तिक ॥
एकदोषोत्थित साध्य कृच्छ्रसाध्यो द्विदोषज।
सर्व्वदोषोत्थितो घोरस्त्वसाध्यो भूर्य्युपद्रव ॥

शूलस्यारिष्ट लक्षणम्।

वेदनातितृषा मूर्च्छा आनाहो गौरव ज्वर।
भ्रमोऽरुचि कृशत्वञ्च बलहानिस्तथैव च ॥
उपद्रवा दशैवैते यस्य शूलेषु नास्ति स।
शूलस्यैव भेदस्य परिणामशूलस्य निदान सम्प्राप्तिर्लक्षणञ्च।
स्वैर्निदानै प्रकुपितो वायु सन्निहितस्तदा।
कफपित्ते समावृत्य शूलकारी भवेद्बली ॥
भुक्ते जीर्य्यति यच्छूल तदेव परिणामजम्।
तस्य लक्षणमप्येतत् समासेनाभिधीयते ॥

वातिकस्य परिणामशूलस्य लक्षणम् ।

आध्मानाटोपविण्मूत्रविवन्धारतिवेपनै ।
स्निग्धोष्णोपशमप्राय वातिके तद्वदेद्भिषक् ॥

पैत्तिकस्य तस्य लक्षणम् ।

तृष्णादाहारतिस्वेद कट्वम्ललवणोद्भवम् ।
शूल शीतशमप्राय पैत्तिक लक्षयेद्बुध ॥

श्लैष्मिकस्य तस्य लक्षणम् ।

छर्दिहृल्लाससमोह स्वल्परुग्दीर्घसन्तति ।
कट्वतिक्तोपशान्तौ च तच्च ज्ञेय कफात्मकम ॥
संसृष्टलक्षण बुद्धा द्विदोष परिकल्पयेत् ।
त्रिदोषजमसाध्य स्यात् क्षीणमासवलानलम ॥

अन्नद्रवाख्यस्य शूलस्य लक्षणम् ।

जीर्णे जीर्य्यत्यजीर्णे वा यच्छूलमुपजायते ।
पथ्यापथ्यप्रयोगेण भोजनाभोजनेन वा ।
न शम याति नियमात् सोऽन्नद्रव उदाहृत ॥
अन्नद्रवाख्यशूलेषु न तावत् स्वास्थ्यमश्नुते ।
वान्तमात्रे जरत् पित्त शूलमाशु व्यपोहति ॥

शूलस्य चिकित्सा ।

वमन लङ्घन स्वेद पाचन कफवर्त्तय ।
क्षारचूर्णानि गुडिका शस्यन्ते शूलशान्तये ॥
स्वल्पशूलाकुलस्य स्यात् स्वेद एव सुखावह ॥
मृत्तिका सजला पाकाद्घनीभूता पटे क्षिपेत् ।
कृत्वा तत्पोट्टली शूली यथास्वेद विधापयेत् ॥
तिलैश्च गुडिका कृत्वा भ्रामयेज्जठरोपरि ।

शूलं सुदुस्तरं तेन शान्तिं गच्छति सत्वरम् ॥
विश्वमेरण्डजं मूलं क्वाथयित्वा जलं पिबेत्।
हिङ्गुसौवर्च्चलोपेतं सद्यः शूलनिवारणम् ॥
शूली निरन्नकोष्ठोऽह्निरुष्णाभिश्चूर्णिता पिबेत्।
हिङ्गुप्रतिविषाव्योषवचासौवर्च्चलाभया ॥
बलापुनर्नवैरण्डबृहतीद्वयगोक्षुरम्।
सहिङ्गुलवणोपेतं सद्यो वातरुजापहम् ॥
यमानीहिङ्गुसिन्धूत्थक्षारसौवर्च्चलाभया
सुरामण्डेन पातव्या वातशूलनिसूदना ॥
हिङ्गुपुष्करमूलाभ्यां हिङ्गुसौवर्च्चलेन वा।
विश्वैरण्डयवक्वाथः सद्यः शूलनिवारणः ॥
सौवर्च्चलाम्लिकाजाजीमरिचैर्द्विगुणोत्तरैः।
मातुलुङ्गरसैः पिष्ट्वा गुडिका वातशूलनुत् ॥
बीजपूरकमूलञ्च घृतेन सह पाययेत्।
जयेद्वातभवं शूलं कर्षमेकं प्रमाणतः ॥
हिङ्ग्वम्लवेतसव्योषयमानीलवणत्रिकैः।
बीजपूररसोपेतैर्गुडिका वातशूलनुत् ॥
बिल्वमूलतिलैरण्डं पिष्ट्वा चाम्लतुषाम्भसा।
गुडिकां भ्रामयेदुष्णां वातशूलविनाशिनीम् ॥
जीवन्तीमूलकल्को वा सतैलः पार्श्वशूलनुत् ॥
शतावरीरसं क्षौद्रयुतं प्रातः पिबेन्नरः।
दाहशूलोपशान्त्यर्थं सर्व्वपित्तामयापहम् ॥
धात्र्या रसं विदार्य्या वा त्रायन्ती गोस्तनाम्बुना।
पिबेत् सशर्करं सद्यः पित्तशूलनिसूदनम् ॥

शतावरोसयष्ट्याह्ववात्यालकुशगोत्तुरै ।
शृतशोत पिबेत्तोय सगुडक्षौद्रशर्करम् ।
पित्तासृग्दाहशूलघ्न सद्योदाहज्वरापहम् ॥
तैलमेरण्डज वापि मधुकक्वाथसयुतम् ।
शूल पित्तोद्भव हन्ति गुल्म पैत्तिकमेव च ॥
प्रलिह्यात् पित्तशूलघ्न धात्रोचूर्ण समाक्षिकम ॥
विरेचन पित्तहरञ्च शस्त
रसाश्च शस्ता शशलावकानाम् ।
सन्तर्पण लाजमधूपपन्न
योगा सुशीता मधुसप्रयुक्ता ॥
छर्द्या ज्वरे पित्तभवेऽथ शूले
घोरे विदाहे त्वतिकर्षिते च ।
यवस्य पेया मधुना विमिश्रा
पिबेत् सुशीता मनुज सुखार्थी ॥
श्लेष्मात्मके छर्दनलङ्घनानि
शिरोविरेक मधुसीधुपानम् ।
मधूनि गोधूमयवानरिष्टान्
सेवेत रूक्षान् कटुकाश्च सर्व्वान् ॥
लवणत्रयसयुक्त पञ्चकोल सरामठम् ।
सुखोष्णेनाम्बुना पीत कफशूलनिवारणम् ॥
विल्वमूलमथैरण्ड चित्रक विश्वभेषजम् ।
हिङ्गुसैन्धवसयुक्त सद्य शूलनिवारणम् ॥
हिङ्गुसौवर्च्चल शुण्ठी पथ्या च द्विगुणोत्तरा ।
एतच्चूर्ण कटीकुक्षिपार्श्वहृद्वस्तिशूलनुत् ॥

आमशूले क्रिया कार्य्या कफशूलविनाशिनी।
सेव्यमामहरं सर्व्वं यदग्निबलवर्द्धनम्॥

आमस्य कफेन तुल्यप्रकृतिकत्वात् कफशूले यत् पञ्चकोलादियुक्तं तदामशूले कार्य्यम्।

चतुःसमचूर्णम्।

दीप्यकं सैन्धवं पथ्या नागरञ्च चतुःसमम्।
चूर्णं शूलं जयत्याशु मन्दस्याग्नेश्च दीपनम्॥

समाचिकं बृहत्यादिं पिबेत् पित्तानिलात्मके।
व्यामिश्रं वा विधिं तत्र यत्नात् कुर्य्याद्यथातथम्॥

रसोनं मधुसम्मिश्रं पिबेत् प्रातः प्रकाङ्क्षितः।
वातश्लेष्मभवं शूलं निहन्याद्वह्निदीपनम्॥

पित्तजे कफजे चापि क्रिया या कथिता पृथक्।
एकीकृत्य प्रयुञ्जीत तां क्रियां कफपित्तजे॥

शङ्खचूर्णं सलवणं सहिङ्गु व्योषसंयुतम्।
उष्णोदकेन तत्पीतं शूलं हन्ति त्रिदोषजम्॥

गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम्।
विलिहन्मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम्॥

दग्धमनिर्गतधूमं मृगशृङ्गं गोघृतेन सह पीतम्।
हृदयनितम्बजशूलं हरति शिखी दारुनिवहमिव॥

हरिणशृङ्गं सकृत्य अन्तर्धूमेन दग्ध्वा तद्भस्म घृतेन सह लेह्यम्।

वातजे पित्तजे शूले तथा श्लेष्मसमुद्भवे।
या या क्रिया पृथक् प्रोक्ता ताः कार्य्याः सान्निपातिके॥

वमनं तिक्तमधुरैर्विरेकश्च प्रशस्यते।

वस्तयश्च हिता शूले परिणामसमुद्भवे ॥

नागरतिलगुडकल्क पयसा ससाध्य य पुमानद्यात् ।
उग्र परिणतिशूल तस्यापैति सप्तरात्रेण ॥

पीत शम्बूकज भस्म जलेनोष्णेन तत्क्षणात् ।
पक्तिज विनिहन्त्येतच्छूल विष्णुरिवासुरान् ॥

निर्मांसोन्नतशम्बूकभस्म माषमिक घृतात्तमुखकुहरेण उष्णाम्बुना गोलयित्वा पेयम् ।

लौहपथ्या कणाशुण्ठीचूर्णं समधुसर्पिषा ।
विलिहन् विनिहन्त्येव शूल हि परिणामजम् ॥

नारिकेल सतोयञ्च लवणेन प्रपूरितम् ।
मृदाववेष्टित शुष्क पक्व गोमयवह्निना ॥
पिप्पल्या भक्षित हन्ति शूल हि परिणामजम् ।
वातिक पैत्तिकञ्चापि श्लैष्मिक सान्निपातिकम् ॥

लौहचूर्णं वरायुक्त विल्मोढ मधुपर्पिषा ।
जयेत् पक्तिभव शूल मण्डूरेण वरायवा ॥

शम्बूकादिश्च गुडिका तथा शङ्खरसाभिधा ।
सामुद्राद्याभिध चूर्ण पक्तिशूलोपशान्तये ॥

सप्तामृतलौह तारामण्डूरगुड शतावरीमण्डूर-रसमण्डूर-धात्रीलौह शर्करालौह खण्डामलकी-नारिकेलखण्ड नारिकेला मृत हरीतकीखण्ड पूगखण्ड वैश्वानरलौहाद्यानि भेषजानि यथादोषानुपानमात्राणि सर्व्वेषु शूलेषु हितानि ।

विद्याधराभ्रशूलान्तकरस-शूलगजकेशरिप्रभृतीन्यप्यौषधानि सर्व्वदा सर्व्वेषु शूलेषु प्रयुज्यन्ते ।

तैल शूलगजेन्द्राख्य श्रीविष्णाद्यमथापि वा ।

शूलेषु निखिलेष्वेव सुतरां हितद भवेत्॥
पुराणा शालय क्षीरमुष्णं जाङ्गलजो रस।
पटोल कारवेल्लञ्च द्राक्षा पक्वाम्रदाडिमौ॥
विड शालिञ्चपत्राणि तप्ताम्भो देवपुष्पकम्।
अनुलोमकराण्यत्र सर्व्वाण्येव हितानि वै॥
व्यायाम मैथुन मद्य लवण कटु वैदलम्।
वेगरोध शुच क्रोध वर्ज्जयेच्छूलवान्नर॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
शूलाधिकारश्चतुर्व्विंशोऽध्याय।

---

## पञ्चविंशोऽध्याय।

### गुल्मरोगाधिकार।

गुल्मस्य सन्निकृष्टविप्रकृष्टकारणपूर्व्वक सामान्यलक्षणम्।

दुष्टा वातादयोऽत्यर्थं मिथ्याहारविहारत।
कुर्व्वन्ति पञ्चधा गुल्म कोष्ठान्तर्ग्रन्थिरूपिणम्॥

पञ्चधेति वातपित्तकफसन्निपातरक्तजानि। द्वन्द्वजास्तु प्रकृतिसमवेतत्वात् पृथङ् न गण्यन्ते अर्शोवत्। कोष्ठान्त हृदयाद्वस्तिपर्य्यन्त कोष्ठ तस्य मध्ये कुत्रापि ग्रन्थिरूपिण गुडकाकारम्।

स व्यस्तैर्जायते दोषै समस्तैरपि चोच्छ्रितै ।
पुरुषाणा तथा स्त्रीणा ज्ञेयो रक्तेन चापर ॥
आर्त्तवादपि गुल्म स्यात् स तु स्त्रीणा प्रजायते ।
अन्यस्त्वसृग्भव पुसा तथा स्त्रीणाञ्च जायते ॥

गुल्मस्य स्थाननियम ।

तस्य पञ्चविध स्थान पार्श्वहृन्नाभिवस्तय ॥

द्वे पार्श्वे गणनीये अन्यथा पञ्चत्वानुपपत्ति ।

गुल्मस्य सामान्य लक्षणम् ।

हृन्नाभ्योरन्तरे ग्रन्थि सञ्चारी यदि वाचल ।
वृत्तश्चयापचयवान् स गुल्म इति कीर्त्तित ॥

नाभिशब्देनात्र वस्तिर्बोध्य सामीप्यात् । यथा गङ्गाया घोष इति । वस्तेरपि गुल्माश्रयत्वेनोक्तत्वात् । अन्ये तु हृद्वस्त्योरेव पाठान्तर पठन्ति ।

तस्य पूर्व्वरूपम् ।

उद्गारबाहुल्य पुरीषबन्ध
तृप्त्यक्षमत्वान्त्रविकूजनानि ।
आटोपमाध्मानमपक्तिशक्ति-
रासन्नगुल्मस्य वदन्ति चिह्नम् ॥

तृप्तिरनन्नाभिलाष । अक्षमत्वमसामर्थ्यम् । आटोपोऽत्र रुजापूर्व्वक क्षोभ तलतल वा ।

गुल्मस्य साधारण लक्षणम् ।

अरुचि कृच्छ्रविण्मूत्रवातताऽन्त्रविकूजनम् ।
आनाहश्चोर्द्ध्ववातत्व सर्व्वगुल्मेषु लक्षयेत् ॥

वातिकस्य गुल्मस्य निदानम् ।

रूक्षान्नपान विषमातिमात्र
विचेष्टन वेगविनिग्रहश्च।
शोकोऽभिघातोऽतिमलक्षयश्च
निरन्नता चानिलगुल्महेतु ॥

विचेष्टन विरुद्धा चेष्टा बलवद्विग्रहादि। अतिमलक्षयो विरक्तादिना। निरन्नता उपवास। शोकाभिघात इति पाठे शोकेन मनोऽधिष्ठानस्य हृदयस्याभिघात इत्यर्थ।

तस्य लक्षणम्।

य स्थानसस्थानरुजाविकल्प
विड्वातसङ्ग गलवक्त्रशोषम्।
श्यावारुणत्व शिशिरज्वरञ्च
हृत्कुक्षिपार्श्वांसशिरोरुजञ्च ॥
करोति जीर्णे त्वधिक प्रकोप
भुक्ते मृदुत्व समुपैति यश्च।
वातात् स गुल्मो न च तत्र रूक्ष
कषायतिक्त कटु चोपशेते ॥

स्थानसस्थानरुजाविकल्प अत्र विकल्पशब्द प्रत्येक योज्य। स्थानविकल्पो यथा कदाचिन्नाभौ कदाचित् पार्श्वयो कदाचिद वस्तावित्यादि। सस्थानविकल्पो यथा कदाचिदल्प कदाचिन्महान् वृत्तो दीर्घो वेति। रुजाविकल्पो यथा कदाचिदल्पा रुक् कदाचिन्महती कदाचित् तोदरूपा अनेकरूपा वेति। उपशेते सुखयति।

पैत्तिकस्य निदानम्।

कट्वम्लतीक्ष्णोष्णविदाहिरूक्ष
क्रोधातिमद्यार्कहुताशसेवा।
आमोऽभिघातो रुधिरञ्च दुष्टं
पैत्तस्य गुल्मस्य निमित्तमुक्तम्॥

आमोऽत्र विदग्धाजीर्णम्। अभिघातो लगुडादिना। आमाभिघात इति पाठे आमेन अभिघातोऽभिभव इत्यर्थः।

तस्य लक्षणम्।

ज्वरः पिपासा वदनाङ्गरागः
शूलं महज्जीर्य्यति भोजने च।
स्वेदो विदाहो व्रणवच्च गुल्मः
स्पर्शासहः पैत्तिकगुल्मरूपम्॥

श्लैष्मिकस्य सान्निपातिकस्य च निदानम्।

शीतं गुरु स्निग्धमचेष्टनञ्च
सम्पूरणं प्रस्वपनं दिवा च।
गुल्मस्य हेतुः कफसम्भवस्य
सर्व्वस्तु दिष्टो निचयात्मकस्य॥

सम्पूरणमुदरपूरणम्। निचयात्मकस्य सान्निपातिकस्य। सर्व्वो हेतुः वातपित्तकफजानां हेतुः। दिष्टः कथितः।

श्लैष्मिकस्य लक्षणम्।

स्तैमित्यशीतज्वरगात्रसाद
हृल्लासकासारुचिगौरवाणि।
शैत्यं रुगल्पा कठिनोन्नतत्वं
गुल्मस्य रूपाणि कफात्मकस्य॥

( ८, १५ )

निमित्तरूपाण्युपलभ्य गुल्मे
द्विदोषजे दोषबलाबलञ्च ।
व्यामिश्रलिङ्गानपरांश्च गुल्मान्
स्त्रीनादिशेदौषधकल्पनार्थम् ॥

सान्निपातिकस्य लक्षणम् ।

महारुजं दाहपरीतमश्मवद्
घनोन्नतं शीघ्रविदाहि दारुणम् ।
मनःशरीराग्निबलापहारिणं
त्रिदोषजं गुल्ममसाध्यमादिशेत् ॥

रक्तजस्य निदानं लक्षणञ्च ।

रक्तात् स्वे कोपनैः क्रुद्धाद्रक्तगुल्मः प्रजायते ।
पैत्तस्य प्रायशस्तुल्यो विशेषो योऽस्य वक्ष्यते ॥
कोठानां जन्म लौहित्यं नेत्रयोररतिस्तथा ।
मूर्च्छा रक्तातिसारश्च सुकृच्छ्रोऽयं गदो मतः ॥

आर्त्तवरूपरक्तजातस्य गुल्मस्य लक्षणम् ।

नवप्रसूताहितभोजना या
या चामगर्भं विसृजेदृतौ वा ।
वायुर्हि तस्याः परिगृह्य रक्तं
करोति गुल्मं सरुजं सदाहम् ॥
पैत्तस्य लिङ्गेन समानलिङ्गं
विशेषणञ्चाप्यपरं निबोध ।
यः स्पन्दते पिण्डित एव नाङ्गैः
स्थिरात् सशूलः समगर्भलिङ्गः ॥

स रौधिर स्त्रीभव एव गुल्मो
मासे व्यतीते दशमे चिकित्स्य ।
अन्यच्च । ऋतावनाहारतया भयेन
विरूक्षणैर्वेगविनिग्रहैश्च ।
सस्तम्भनोल्लेखनयानिदोषे
गुल्म स्त्रिया रक्तभवोऽभ्युपैति ॥

नवप्रसूता प्रकृताग्निबलवर्णसाराहीना अहितभोजना । या च आमगर्भं विसृजेत् नवमासादर्व्वाक् प्रसूयते साप्यहित-भोजना ऋतौ वा आर्त्तवप्रवृत्तिकाले अहितभोजना वा । वायु रक्त परिगृह्य गुटिकाकार गर्भाशये गुल्म करोति । भोजनपद विहारस्याप्युपलक्षण यथोक्त ऋतावनाहारतया भयेन इत्यादि । चिरात् स्पन्दते चलति नाङ्गै न हस्तपादै । समगर्भलिङ्ग अत्र समशब्द सर्व्वशब्दापन्न तेन समानि सर्व्वाणि गर्भलिङ्गानि आर्त्तवादर्शनमुखपीनतास्तन्मुखस्य श्यामतादोहदादीनि यत्र स । एते च व्याधिप्रभावात् । यथा यक्ष्मणि विरसा । स रौधिर आर्त्तवरूपरक्तज स्त्रीणा प्रजायते इति । गर्भसमानलिङ्गत्वे विशेषज्ञानार्थमाह मासे व्यतीते दशमे चिकित्स्य इति नवम-दशममासयो प्रसवकालत्वादित्येके । तन्न य स्पन्दते पिण्डित एव नाङ्गैरित्यादिनैव सशयस्य निराकृतत्वात् । गर्भ प्रत्यङ्गै निरन्तर नि शूल स्पन्दते गुल्मश्चैतद्विपरीत इति । किञ्च नवमे दशमे प्रसूयते इत्युत्सर्गो न तु नियम । तदधिककालेऽपि प्रसवदर्शनादागमाच्च । यत आह चरक "त स्त्री प्रसूते सुचिरेण गर्भ पुष्ट यदा वर्षगणैरपि स्यात् । तस्मात् मासे व्यतीते दशमे चिकित्स्य" इति न सशयव्यवच्छेदार्थं किन्तु तदा सुखेन

चिकित्सार्थं यत उक्तं रक्तगुल्मे पुराणत्वं सुखसाध्यस्य लक्षण मिति। पुराणता चास्य दशममासातिक्रमेणैव भवति।

असाध्यलक्षणमाह।

सञ्चितः क्रमशो गुल्मो महावास्तुपरिग्रहः।
कृतमूलः शिरानद्धो यदा कूर्म्म इवोत्थितः॥
दौर्ब्बल्यारुचिहृल्लासकासच्छर्द्द्यरतिज्वरैः।
तृष्णातन्द्राप्रतिश्यायैर्युज्यते स न सिध्यति॥

महावास्तुपरिग्रहः सकलोदरव्यापी। कृतमूलः धात्वन्तरावगाढो। शिरानद्धः शिराजालवान्। युज्यते युक्तो भवति।

गृहीत्वा सज्वरं श्वासच्छर्द्यतीसारपीडितम्।
हृन्नाभिहस्तपादेषु शोथः कर्षति गुल्मिनम्॥

कर्षति मरणायेति शेषः।

श्वासः शूलं पिपासान्नविद्वेषो ग्रन्थिमूढता।
जायते दुर्ब्बलत्वञ्च गुल्मिनो मरणाय वै॥

ग्रन्थिमूढता ग्रन्थिरूपस्य गुल्मस्य अकस्माद्विलयनम्।

गुल्मस्य चिकित्सा।

वायोः प्रशमनं कार्य्यमादौ गुल्मे चिकित्सता।
जिते तस्मिन् बली दोषः सुखेनान्यो निवार्य्यते॥
स्निग्धश्च भिषजा स्वेदः कर्त्तव्यो गुल्मशान्तये॥
स्रोतसां मार्द्दवं कृत्वा जित्वा मारुतमुल्बणम्।
भित्त्वा विबन्धं स्निग्धस्य स्वेदो गुल्मान् व्यपोहति॥
वातारितैलेन पयोयुतेन पथ्यासमेतेन विरेचनं हि।
सस्वेदनं स्निग्धमतिप्रशस्तं प्रभञ्जनक्षोभकृते च गुल्मे॥
स्वर्जिकाकुष्ठसहितः क्षारः केतकसम्भवः।

पीतस्तैलेन शमयेद् गुल्मं पवनसम्भवम् ॥
पित्तगुल्मे त्रिवृच्चूर्णं पातव्यं त्रिफलाम्बुना ।
विरेकाय सितायुक्तं काम्पिल्यं वा समाक्षिकम् ॥

त्रिफलाम्बुना त्रिफलाक्वाथेन ।

अभया द्राक्षया खादेत् पित्तगुल्मी गुडेन वा ॥
योगैश्च वातगुल्मार्त्तं श्लेष्मगुल्ममुपाचरेत् ।
अपरैश्च बलासघ्नैर्युक्तियुक्तैः शमं नयेत् ॥
व्यामिश्रदोषे व्यामिश्रः स एव क्रियाक्रमः ।
सन्निपातोद्भवे गुल्मे त्रिदोषघ्नो विधिर्हितः ॥
वचाभयाविडाशुण्ठीहिङ्गुकुष्ठाग्निदीप्यकाः ।
द्वित्रिषट्चतुरेकाष्टसप्तपञ्चांशिकाः क्रमात् ॥
चूर्णं मद्यादिभिः पीतं गुल्मानाहोदरापहम् ।
शूलार्शःश्वासकासघ्नं ग्रहणीदीपनं परम् ॥
हिङ्गुपुष्करमूलानि तुम्बुरूणि हरीतकी ।
श्यामा विडं सैन्धवञ्च यवक्षारं महौषधम् ॥
यवक्वाथोदकेनैतद् घृतभृष्टन्तु पाययेत् ।
तेनास्य भिद्यते गुल्मः सशूलः सपरिग्रहः ॥
गमयित्वार्त्तवोद्भूते दश मासाननन्तरम् ।
स्नेहस्वेदौ विधातव्यस्तथा स्निग्धं विरेचनम् ॥
शताह्वचिरविल्वत्वग्दारुभार्गीकणोद्भवः ।
क्वाथः पीतो हरेद्गुल्मं तिलक्वाथेन रक्तजम् ॥
पीतो धात्रीरसो युक्तो मरिचैश्चास्रगुल्मनुत् ॥
तिलक्वाथं गुडव्योषहिङ्गुभार्गीयुतं पिबेत् ।
आर्त्तवप्रभवे गुल्मे नष्टे पुष्पे च नित्यशः ॥

सक्षार त्र्यूषण मद्य प्रपिबेद्रक्तगुल्मिनी।
पलाशक्षारतोयेन सिद्ध सर्पि पिबेच्च सा॥
प्रवर्त्तमाने नितरा शोणिते रक्तपित्तहृत्।
रक्तातिसारशमनो क्रिया चापि विधीयते॥

काङ्कायनगुडिका नाराचघृत पञ्चपल घृत क्षीरषट्पलक घृत दन्तीहरीतकी गुल्मकालानलो रस शिखिवाडवो रस पञ्चाननरसश्चैवमाद्यानि भेषजानि गुल्मगदे योज्यानि।

वल्लूर मूलक मत्स्यान् शुष्कशाकानि वैदलम्।
न खादेच्चालुक गुल्मी मधुराणि फलानि च॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
गुल्मविकार पञ्चविंशोऽध्याय।

---

## षड्विंशोऽध्याय।

### छर्द्दिविकार।

#### छर्द्दिनिदान निरुक्तिश्च।

दुष्टैर्दोषै पृथक् सर्व्वैर्बिभत्सालोचनादिभि।
छर्द्दय पञ्च विज्ञेयास्तासा लक्षणमुच्यते॥
अतिद्रवैरतिस्निग्धैरहृद्यैर्लवणैरति।
अकाले चातिमात्रैश्च तथासात्म्यैश्च भोजनै॥
श्रमाद्भयात् तथोद्वेगादजीर्णात् क्रिमिदोषत।

नार्य्याश्चापन्नसत्वायास्तथातिद्रुतमश्नत ॥
बीभत्सैर्हेतुभिश्चान्यैर्द्रुतमुत्क्लेशितो बलात् ।
छादयत्याननं वेगैरर्दयन्नङ्गभञ्जनैः ॥
निरुच्यते च्छर्दिरिति दोषो वक्त्रं प्रधावित ॥

तस्याः पूर्व्वरूपम् ।

हृल्लासोद्गाररोधौ प्रसेको लवणास्यता ।
द्वेषोऽन्नपाने च भृशं वमीनां पूर्व्वलक्षणम् ।

वातजायाश्छर्द्देर्लक्षणम् ।

हृत्पार्श्वपीडा मुखशोषणोर्ष
नाभ्यर्त्तिकासस्वरभेद तोदैः ।
उद्गारशब्दं प्रबलं सफेनं
विच्छिन्नमुष्णं तनुकं कषायम् ॥
कृच्छ्रेण चाल्पं महता च वेगे
नार्त्तोऽनिलाच्छर्दयतीह दुःखम ॥

पित्तजायास्तस्या लक्षणम् ।

मूर्च्छा पिपासा मुखशोष मूर्द्ध-
ताल्वक्षिसन्ताप तमोभ्रमार्त्तः ।
पीतं भृशोष्णं हरितञ्च तिक्तं
धूम्रञ्च पित्तेन वमेत् सदाहम ॥

कफजायाः लक्षणम् ।

तन्द्रास्यमाधुर्य्य कफप्रसेक
सन्तोषनिद्रारुचि गौरवार्त्तः ।
स्निग्धं घनं स्वादु कफाद्वि शुद्धं
सलोमहर्षोऽल्परुज वमेत्तु ॥

त्रिदोषजाया लक्षणम्।

शूलाविपाकारुचि दाहतृष्णा-
श्वासप्रमोह प्रबला प्रसक्ता।
छर्दिस्त्रिदोषाल्लवणाम्लनील-
सान्द्रोष्णरक्त वमता नृणा स्यात्॥

प्रसक्तमिति पाठे तत् क्रियाविशेषणत्वेन बोध्यम्।

आगन्तुजाया लक्षणम।

अमात्मजा च क्रिमिजामजा च
वीभत्सजा दोर्हृदजा च या हि।
सा पञ्चमी ताश्च विभावयेच्च
दोषोच्छ्रयेणैव यथोक्तमादौ॥

एता पञ्चाप्यागन्तुजत्वेन साम्यादेकैव। अतएव सा आगन्तुजा पञ्चमीति। ता अमात्मजाद्या।

क्रिमिजाया लक्षणम।

शूलहृल्लासबहुला क्रिमिजा च विशेषत।
क्रिमिहृद्रोगतुल्येन लक्षणेन च लक्षिता॥

छर्देररिष्टलक्षणानि।

विट्स्वेद मूत्राम्बुवहानि वायु
स्रोतांसि संरुध्य यदोर्द्ध्वमेति।
उत्सन्नदोषस्य समाचित त
दोष समुद्धूय नरस्य कोष्ठात्॥
विण्मूत्रयोस्तत् समगन्धवर्ण
तृट्श्वास हिक्कार्त्तियुत प्रसक्तम।

प्रच्छर्दयेद्दुष्टमिहातिवेगात्
तयार्द्दितश्चाशु विनाशमेति ॥
क्षीणस्य या च्छर्द्दिरति प्रसक्ता
सोपद्रवा शोणितपूययुक्ता ।
सचन्द्रिका तां प्रवदन्त्यसाध्यां
साध्यां चिकित्सेन्निरुपद्रवाञ्च ॥

छर्द्देरुपद्रवाः ।

कासः श्वासो ज्वरस्तृष्णा हिक्का वैचित्त्यमेव च ।
हृद्रोगस्तमकश्चैव ज्ञेयाश्छर्द्दरुपद्रवाः ॥

तमकोऽत्र तमः । श्वासपदेनैव तमकाख्यस्यापि श्वासस्योक्तेः ।

छर्द्दिश्चिकित्सा ।

आमाशयोत्क्लेशभवा हि सर्व्वा
श्छर्द्यो मता लङ्घनमेव तस्मात् ।
विधीयते मारुतजां विना तु
संशोधनं वा कफपित्तहारि ॥

अत्र लङ्घनमल्पदोषविषयं संशोधनं बहुदोषविषयमिति व्यवस्था । संशोधनमत्र विरेचनम् ।

हन्यात् क्षीरोदकं पीतं छर्द्दिं पवनसम्भवाम् ।
मुद्गामलकयूषो वा ससर्पिष्कः ससैन्धवः ॥

क्षीरोदकं नष्टस्य क्षीरस्योदकम् ।

गुडूची त्रिफला निम्ब पटोलैः क्वथितं जलम् ।
पिबेन्मधुयुतं तेन च्छर्द्दिर्नश्यति पित्तजा ॥
हरीतकीनां चूर्णन्तु लिह्यान्माक्षिकसंयुतम् ।

अधोमार्गीकृते दोषे छर्दिः शीघ्रं निवर्त्तते॥
विडङ्गं त्रिफला विश्वाचूर्णं मधुयुतं जयेत्।
विडङ्गप्लवशुण्ठीनां चूर्णं वा कफजां वमिम॥
पिष्ट्वा धात्रीफलं लाजान् शर्कराञ्च पलोन्मितान्।
दत्त्वा मधुपलञ्चापि कुडवं सलिलस्य च॥
वाससा गालितं पीतं हन्ति छर्दिं त्रिदोषजाम्॥
गुडूच्या रचितं हन्ति हिमं मधुसमन्वितम्।
दुर्निवारामपि छर्दिं त्रिदोषजनितां बलात्॥

एला लवङ्ग गजकेशर कोलमज्ज
लाजा प्रियङ्गु घन चन्दन पिप्पलीनाम्।
चूर्णानि माक्षिक सिता सहितानि लीढ्वा
छर्दिं निहन्ति कफमारुत पित्तजाताम्॥

चन्दनमत्र श्वेतम्।

अश्वत्थवल्कलं शुष्कं दग्धं निर्व्वापितं जले।
तज्जलं पीतमात्रं हि वान्तिं जयति दुर्ज्जयाम्॥
पिप्पली मरिचोपेतं कपित्थामलकीरसम्।
जयेत् त्रिदोषजां छर्दिं पीतो माक्षिकसंयुतः॥
क्वाथः पर्प्पटजः पीतः सक्षौद्रश्छर्दिनाशनः॥
चन्दनेनाक्षमात्रेण संयोज्यामलकीरसम्।
पिबेन्माक्षिकसंयुक्तं छर्दिस्तेन निवर्त्तते॥

चन्दनमत्र श्वेतम्।

निम्बुकद्रवसंयुक्तं शर्करासलिलं पिबेत्।
एलालवङ्गचूर्णेन वान्तिं तद्वि विनिवारयेत्॥
आम्रास्थि बिल्वनिर्य्यूहः पीतः समधुशर्करः।

निहन्याच्छर्द्यतीसारं वैश्वानर इवाहुतिम् ॥
बीभत्सजां हृद्यतमैरिष्टैदौहृदजां फलैः ।
लङ्घनेनामजां छर्दिं जयेत् सात्म्यैरसात्म्यजाम् ॥
क्रिमिहृद्रोगवद्धन्याच्छर्दिं क्रिमिसमुद्भवाम् ।
तत्र तत्र यथादोषं क्रियां कुर्य्याच्चिकित्सकः ॥
पुराणाः शालयो लाजा गोधूमश्च यवो मधु ।
शशलावमयूराद्या जाङ्गलाः पशुपक्षिणः ॥
जम्बीरामलकी द्राक्षा दाडिमं बीजपूरकम् ।
नारिकेलञ्च यद्वाम्लं तत्तोयञ्च सिता सुरा ॥
मनोज्ञं गन्धसंसेवा चन्दनाद्यनुलेपनम् ।
शिरःस्नानं सुखास्या च हितानि छर्दिरोगिणाम् ॥
यदुग्रमुद्वेगकरं कर्म्म द्रव्यमथापि वा ।
त्याज्यं तदखिलं छर्द्यां धीमतारोग्यकाङ्क्षिणा ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
छर्द्यधिकारः षड्विंशोऽध्यायः ।

# सप्तविंशोऽध्यायः ।

— ० —

## तृष्णाधिकार ।

तृष्णाया निदान सम्प्राप्तिश्च ।

भयाश्रमाभ्या बलसच्चयाद वा
ऊर्द्ध चित पित्तविवर्द्धनैश्च ।
पित्त सवात कुपित नराणा
तालुप्रपन्न जनयेत् पिपासाम् ॥
स्रोत सु व.ग्वाहिषु दूषितेषु
दोषैश्च तृट् सम्भवतीह जन्तो ।
तिस्र स्मृतास्ता च्चतजा चतुर्थो
च्चयात् तथा ह्यामसमुद्भवा च ॥
भक्तोद्भवा सप्तमिकेति तासा
निबोध लिङ्गान्यनुपूर्व्वशस्तु ॥

वातजायास्तृष्णाया लच्चणम् ।

च्चामास्यता मारुतसम्भवाया
तोदस्तथा शङ्खशिर सु चापि ।
स्रोतोनिरोधो विरसञ्च वक्त्र
श्रोताभिरद्भिश्च विवृद्धिमेति ॥

पित्तजायास्तस्या लच्चणम् ।

मूर्च्छान्नविद्वेष विलाप दाहा
रक्तेच्चणत्व प्रततश्च शोष ।

शोताभिनन्दा मुखतिक्तता च ।
पित्तात्मिकाया परिधूपनञ्च ॥

कफजाया लक्षणम् ।

वाष्पावरोधात् कफसंवृतेऽग्नौ
तृष्णा वलासेन भवेत् तथा तु ।
निद्रा गुरुत्वं मधुरास्यता च
तयार्दितं शुष्यति चातिमात्रम् ॥

क्षतजाया लक्षणम् ।

क्षतस्य रुक्शोणितनिर्गमाभ्यां
तृष्णा चतुर्थी क्षतजा मता तु ॥

क्षयजाया लक्षणम् ।

रसक्षयाद् या क्षयसम्भवा सा
तयाभिभूतस्तु निशादिनेषु ।
पेपीयतेऽम्भः स सुखं न याति
तां सन्निपातादिति केचिदाहुः ॥
रसक्षयोक्तानि च लक्षणानि
तस्यामशेषेण भिषग् व्यवस्येत् ।

आमजाया लक्षणम् ।

त्रिदोषलिङ्गामसमुद्भवा च
हृच्छूल निष्ठीवन सादकर्त्री ॥

भक्तोद्भवाया लक्षणम् ।

स्निग्धं तथाम्लं लवणञ्च भुक्तं
गुर्वन्नमेवाशु तृषां करोति ॥

ग्रन्यविशेषोक्ताया उपसर्गजायास्तृष्णाया लक्षणम्।

दीनस्वर प्रताम्यन् दीन सशुष्कवक्त्रगलतालु।
भवति खलु सोपसर्गात्तृष्णा सा शोषिणी कष्टा॥
तृष्णाया उपसर्गास्तदयुक्ताया अरिष्टत्वञ्च।
ज्वर मोह क्षय कासश्वासाद्युपसृष्टदेहानाम्।
सर्व्वास्त्वतिप्रसक्ता रोगकृशाना वमिप्रसक्तानाम्॥
घोरोपद्रवयुक्ता तृष्णा मरणाय विज्ञेया।
आदि शब्द ऽतीसारादीना ग्रहणम्।

तृष्णायाश्चिकित्सा।

तृष्णाया पवनोत्थाया सगुड दधि शस्यते।
रसाश्च बृंहणा शीता गुडूच्या रस एव वा॥
पित्तजायान्तु तृष्णाया पक्वोडुम्बरजो रस।
तत्क्वाथो वा हिमस्तद्वच्छारिवादिगणाम्बुना॥
लाजोदक मधुयुत शीत गुडविमर्दितम्।
काश्मर्य्य शर्करा युक्त पिबेत् तृष्णार्दितो नर॥
विल्वाढकी धातकि पञ्चकोल
दर्भैर्युतोऽय कफजा निहन्ति।
हित भवेच्छर्दनमेव चात्र
तप्तेन निम्बप्रसवोदकेन॥
क्षतोत्थिता रुग्विनिवारणेन
जयेद्रसानामसृजश्च पानै।
क्षयोत्थिता क्षीरजल निहन्या-
न्मासोदक वाथ मधूदक वा॥

गुर्व्वन्नजामुल्लिखनैर्जयेत्तु
क्षयात्थितां सर्व्वकृताञ्च तृष्णाम ।

क्षीरेक्षुरस माध्वीक क्षौद्र सीधु गुडोदकै ।
वृक्षाम्लकेश्च गण्डूषास्तालुशोष निवारणा ॥

आम्रजम्बू कषाय वा पिबेन्माक्षिक संयुतम ।
छर्दिं सर्व्वा प्रणुदति तृष्णाञ्चैवापकर्षति ॥

वारि शीत मधुयुतमाकण्ठाद्वा पिपासितम् ।
पाययेद वामयेच्चापि तेन तृष्णा प्रशाम्यति ॥

प्रात शर्करयोपेत क्वाथो धन्याक सम्भव ।
जयेत् तृष्णा तथा दाह कुर्य्यात् स्रोतोविशोधनम् ॥

तृषितो मोहमाप्नोति मोहात् प्राणान् विमुञ्चति ।
तस्मात् सर्व्वास्ववस्थासु न क्वचिद वारि वार्य्यते ॥

अन्नेनापि विना जन्तु प्राणान् धारयते चिरम् ।
तोयाभावे पिपासार्त्त क्षणात् प्राणैर्विमुच्यते ॥

अत्यम्बुपानात् प्रभवन्ति रोगा
निरम्बुपानाच्च स एव दोष ।
तस्माद बुध प्राणविवर्द्धनाय
मुहुर्मुहुर्वारि पिबेदभूरि ॥

हृद्य सुमधुर शीत सेवेत तृषयार्द्दित ॥
उग्रमुद्वेगजनन त्यजेत् सर्व्वमतन्द्रित ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
तृष्णाधिकार सप्तविंशोऽध्याय ।

---

# अष्टाविंशोऽध्यायः ।

— ◌ —

## दाहाधिकारः ।

### दाहस्य निदानम् ।

पित्तप्रकोपपानादिहेतुभिर्जायते गदः ।
उष्णात्मको हि दाहाख्यः स च सप्तविधो मतः ॥

### पित्तजस्य निदानादि ।

पित्तज्वरसमः पित्तात् दाहस्तादृक् क्रमोऽस्य च ॥
क्रमश्चिकित्सा ।

### रक्तजस्य ।

कृत्स्नदेहानुगं रक्तमुद्रिक्तं दहति ध्रुवम् ।
स उष्यते तृष्यते च ताम्राभस्ताम्रलोचनः ॥
लोहगन्धाङ्गवदनो वह्निनेवावकीर्य्यते ॥
उद्रिक्तम् अतिरिक्तं सत् दहति दाहाख्यं व्याधिं करोति ।

### रक्तपूर्णकोष्ठजस्य ।

असृजा पूर्णकोष्ठस्य दाहोऽन्यः स्यात् सुदुस्तरः ॥
असृजा शस्त्रादिक्षतानि स्रुतरक्तान ।

### मद्यजस्य ।

त्वचं प्राप्तः सपानोष्मा पित्तरक्ताभिमूर्च्छितः ।
दाहं प्रकुरुते घोरं पित्तवत् तत्र भेषजम् ॥
सपानोष्मा मद्यपानजनित उष्मा, पित्तरक्ताभिमूर्च्छितः पित्तरक्ताभ्यां वर्द्धितः ॥

तृष्णानिरोधजस्य ।

तृष्णानिरोधादब्धातौ क्षीणे तेजः समुद्धतम् ।
स वाह्याभ्यन्तरं देहं प्रदहेन्मन्दचेतसः ॥
संशुष्कगलताल्वोष्ठो जिह्वां निष्कृष्य वेपते ॥

धातुक्षयजस्य ।

धातुक्षयोत्थो यो दाहस्तेन मूर्च्छातृडर्दितः ।
क्षामस्वरः क्रियाहीनः स सीदेद् भृशपीडितः ॥

सीदेत् म्रियेत ।

मर्म्माभिघातजस्य ।

मर्म्माभिघातजोऽप्यस्ति सोऽसाध्यः सप्तमो मतः ।

मर्म्माणि शिरोहृदयवस्त्यादीनि ।

असाध्यदाहस्य लक्षणम् ।

सर्व्व एव च वर्ज्ज्याः स्युः शीतगात्रस्य देहिनः ॥

दाहस्य चिकित्सा ।

यत् पित्तज्वरदाहोक्तं दाहे तत् सर्व्वमिष्यते ॥
चन्दनाम्बुकणस्यन्दि तालवृन्तोपवीजितः ।
सुप्याद् दाहार्दितोऽम्भोजकदलीदलसंस्तरे ॥
छादयेत् तस्य सर्व्वाङ्गमारनालार्द्रवाससा ।
लामज्जकेन युक्तेन चन्दनेनानुलेपयेत् ॥
सर्पिषा शतधौतेन लेपाद् दाहः प्रशाम्यति ॥
परिषेकावगाहेषु व्यजनानाञ्च सेवने ।
शस्यते शिशिरं तोयं तृष्णादाहोपशान्तये ॥
फलिनीलोध्रसेव्याम्बुहेमपुष्पं कुटन्नटम् ।
कालीयकरसोपेतं दाहे शस्तं प्रलेपनम् ॥

ह्रीवेर पद्मकोशीरचन्दनक्षोदवारिणा।
सपूर्णामवगाहेत द्रोणी दाहार्दितो नर ॥
अवगाहेत।र ''णा द्रोणी दाहार्दितो नर ॥
वाप्य काम सिक्तो जनयन्ति शुभा।
नार्य्यश्चन्दन ,न्धाढ्यो दाहदैन्यहरा मता ॥
पाययेत् कमलस्याम्भ शर्कराम्भ पयोऽपि च।
क्षीरमिक्षुरसञ्चापि कारयेत् पित्तजिद्विधिम् ॥
पटोरपर्पटोशीर नीर नीरद नीरजै।
मृणालमिसिधन्याक पद्मकामलकै कृत ॥
अर्द्धशिष्ट सिताशीत पीत क्षौद्रसमन्वित।
क्वाथो व्यपोहयेद् दाह तृष्णाञ्च परमोल्वणम ॥

कांञ्जिकतैलम।

तिलतैल भवेत् प्रस्थ तत्षोडशगुणे शने।
काञ्जिके विपचेत् तत स्याद् दाहज्वरहर परम ॥

सुधाकररस।

सिन्दूराभ्रक हेमानि मौक्तिक त्रिफलाम्भसा।
शतपुष्पीरसेनापि मर्दयेत सप्तसप्तधा ॥
ततो रक्तिमिता कुर्य्याद् वटी छायाप्रशोपिताम।
एकैका योजयेत् तान्तु यथादोषानुपानत ॥
रस सुधाकर सोऽय हन्ति दाह बलाबलम्।
प्रमेहानपि वातास्र बलशुक्रकर पर ॥

दाहे पथ्यापथ्य निर्णय।

शालय षष्टिका मुद्गा मसूराश्चणका यवा।
धन्वमासरसा लाजमण्डश्च लाजशक्तव ॥

शतधौतघृत दुग्ध नवनीत पयोभवम ।
सिता कुष्माण्डक मोच पनस स्वादु दाडिमम ॥
पटोल पर्पट द्राक्षा धात्रीफल परुषके ।
शिम्बो तुम्बी पय पेटी खर्ज्जूर धान्यक मिसि ॥
बालताल पियालञ्च शृङ्गाटककशेरुके ।
मधूकपुष्प ह्रीवेर तिक्तानि निखिलानि च ॥
शीता प्रदेहा भूवेश्म सेकोऽभ्यङ्गोऽवगाहनम ।
पद्मोत्पलदलक्षौमशय्या शीतलकाननम् ॥
कथा विचित्रा गीतानि कामिनीपरिरम्भणम ।
उशीरचन्दनालेप शीताम्भ शिशिरोऽनिल ॥
सुधांशुरश्मय स्नान मणयो मधुरा रमा ।
एवं चान्यानि दाहेषु सेव्यानि सुखमीप्सुभि ॥
विरुद्धान्यन्नपानानि क्रोधो वेगविधारणम ।
गजाश्वयानमध्वा च क्षार पित्तकराणि च ॥
व्यायामश्चातपस्त्वक्क ताम्बूल मधु रामठम ।
व्यवाय कटुतिक्तोष्णान्यहितानीति निश्चितम ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
दाहाधिकारोऽष्टाविंशोध्याय ।

## ऊनत्रिंशोऽध्यायः ।

— ३ —

### शीतपित्ताद्यधिकारः ।

#### तस्य विप्रकृष्ट निदानादीनि ।

शीतमारुतसम्पर्कात् प्रवृद्धौ कफमारुतौ ।
पित्तेन सह सम्भूय बहिरन्तर्विसर्पतः ॥
पिपासारुचि हृल्लास देहसादाङ्गगौरवम् ।
रक्तलोचनता तेषां पूर्व्वरूपस्य लक्षणम् ॥

#### शीतपित्तस्य लक्षणम् ।

वरटीदष्ट संस्थानः शोथः सञ्जायते बहिः ।
सकण्डूतोदबहुलश्छर्दि ज्वर विदाहवान् ॥
वाताधिकतमं विद्याच्छीतपित्तमिमं भिषक् ।

#### उदर्दस्य लक्षणम् ।

सोत्सङ्गैश्च सरागैश्च कण्डूमद्भिश्च मण्डलैः ।
शैशिरः श्लेष्मबहुल उदर्द इति कीर्त्तितः ॥

#### कोठोत्कोठयोर्लक्षणम् ।

असम्यग् वमनोदीर्ण पित्तश्लेष्मान्न निग्रहैः ।
मण्डलानि सकण्डूनि रागवन्ति बहूनि च ॥
कोठसञ्ज्ञानि जायन्ते उत्कोठः सानुबन्धकः ॥

#### शीतपित्तादीनां चिकित्सा ।

शीतपित्ते तु वमनं पटोलारिष्टवासकैः ।
त्रिफलापुरकृष्णाभिर्विरेकश्चात्र शस्यते ॥

अभ्यङ्ग कटतैलेन सेकश्चोष्णेन वारिणा ।
त्रिफला क्षौद्रमयुक्ता खादेच्च नवकार्षिकम् ।
त्रिफला पुरकृष्णाना त्रिपञ्चैकांशयोजिता ।
गुटिका शीतपित्तार्शोभगन्दरवता हिता ॥
आर्द्रकस्य रस पेय पुराण गुड स्युत ।
शीतपित्तापह श्रेष्ठो वह्निमान्द्यविनाशन ॥
दूर्व्वानिशायुतो लेप कण्डूपामाविनाशन ।
क्रिमिदद्रुहरश्चैव शीतपित्तापह स्मृत ॥
सिद्धार्थरजनीकल्कै प्रपुन्नाटतिल सह ।
कटुतलेन समिश्रमेतदुद्वर्त्तन हितम् ॥
सगुड दीप्यक यस्तु खादेत् पथ्यान्नभुङ्नर ।
तस्य नश्यति सप्ताहादुदर्द सर्व्वदेहज ॥
अग्निमन्थभव मूल पिष्ट पीतञ्च सर्पिषा ।
शीतपित्तोदर्द कोठान् सप्ताहादेव नाशयेत् ॥
स्निग्धस्विन्नस्य सशुद्धिमादौ कोठे समाचरेत् ।
उत्कोठे शुद्धदेहस्य कुष्ठघ्नी कारयेत् क्रियाम् ॥
कष गव्यघृतस्यापि माषक मरिचस्य च ।
एकीकृत्य पिवेत् प्रात शीतपित्तादिनाशनम ॥
सिता त्रिकटुसयुक्ता गुडमामलकै सह ।
यमानी खादयेच्चापि व्योषक्षार समायुताम् ॥

निम्बस्य पत्राणि सदा घृतेन
धात्रीविमिश्राणि नर सदाद्यात् ।
विस्फोटकण्डू क्रिमि शीतपित्त
मुदर्दकोठौ च कफञ्च हन्यात ॥

आर्द्रकखण्ड ।

आर्द्रक प्रस्थमेकं स्यात् गोघृत कुडवद्वयम ।
गोदुग्ध प्रस्थयुगल तदर्द्ध शर्करा मता ।
पिप्पली पिप्पलीमूल मरिच विश्वभेषजम ।
चित्रकञ्च विडङ्गञ्च मुस्तक नागकेशरम् ॥
त्वगेलापत्र कर्पूर प्रत्येक पलमात्रकम ।
विशाय पाक विधिवत् खादेत् तत् कोलसम्मितम ॥
इदमार्द्रकखण्डाख्य भेषज हि व्यपोहति ।
शीतपित्तमुदर्दञ्च कोठमुत्कोठमेव च ॥
यक्ष्माण रक्तपित्तञ्च कास श्वासमरोचकम ।
उदावर्त्तञ्च गुल्मञ्च शोफकण्ड क्रिमीनपि ॥
दीपयेदुदरे वह्नि बल वीर्य्यञ्च वर्द्धयेत ।
वपु पुष्टि प्रकुरुते तस्मात् सेव्यमिद सदा ॥
शीतपित्तादिषु व्याधिषु हरिद्राखण्डाद्यानि
भेषजानि परमहितानि ।

शीतपित्तादिषु पथ्यापथ्यनिर्णय ।

पुराणा शालय शस्ता यूषो मुद्गकुलत्थयो ।
कर्कोटक कारवेल्ल शिग्रुर्द्राक्षा च दाडिमम ॥
कटुतैल तप्तनीर निखिल कफपित्तहृत् ।
ज्ञेयानि शीतपित्तादिगदेषु शुभदानि हि ॥
गुर्व्वन्नपान क्षीरेक्षुविकारान् मधुर रसम ।
अम्लञ्चाप्योदकानूपजीवानामामिष तथा ॥

स्नेह मद्य नवीनञ्च मत्स्य प्राग्दक्षिणानिलम् ।
शीतमम्बु दिवास्वाप शीतपित्तादिमास्त्यजेत् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
शीतपित्ताद्यधिकार ऊनत्रिंशोऽध्याय ।

---

## त्रिंशोऽध्याय ।

---

### विसर्पाधिकार ।

विसर्पस्य विप्रकृष्ट निदानादि सङ्ख्या निरुक्तिश्च ।
लवणाम्ल कटूष्णादिसेवनाद् दोषकोपत ।
विसर्प सप्तधा ज्ञेय सर्व्वत परिसर्पणात् ॥
वातिक पैत्तिकश्चैव कफज सान्निपातिक ।
चत्वार एते वीसर्पा वक्ष्यन्ते द्वन्द्वजास्त्रय ॥
आग्नेयो वातपित्ताभ्या ग्रन्थ्याख्य कफवातज ।
यस्तु कर्द्दमको घोर स पित्तकफसम्भव ॥
रक्त लसीका त्वङ्मास दूष्य दोषास्त्रयो मला ।
विसर्पाणा समुत्पत्तौ हेतव सप्त धातव ॥

त्रयो मला वातपित्तकफा दोषा दूषका इत्यर्थ ।
अन्यथा दोषा मला इत्यत्र पुनरुक्तिदोषो भवति ।

वातिकस्य विसर्पस्य लक्षणम् ।

तत्र वातात् परीसर्पो वातज्वरसमव्यथ ।
शोथस्फुरण निस्तोदभेदायामार्त्तिहर्षवान् ॥

परीसर्पो विसर्पः। वातज्वरसमव्यथः वातज्वरवत् शिरोहृन्नाभोदरशूलादियुक्तः। आयाम आकर्षणस्येव व्यथा।

पैत्तिकजस्य लक्षणम्।

पित्ताद् द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः॥

श्लैष्मिकस्य लक्षणम्।

कफात् कण्डूयुतः स्निग्धः कफज्वरसमानरुक्॥

सान्निपातिकस्य लक्षणम्।

सन्निपातसमुत्थश्च सर्व्वलिङ्गसमन्वितः॥

वातपैत्तिकस्य लक्षणम्।

वातपित्ताज्ज्वरच्छर्द्दिमूर्च्छातीसारतृड्भ्रमैः।
अस्थिभेदाग्निसदनतमकारोचकैर्युतः॥
करोति सर्व्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत्।
यं यं देशं विसर्पश्च विसर्पति भवेत् स सः॥
शान्ताङ्गारासितो नीलो रक्तो वाशूपचीयते।
अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद् द्रुतश्च सः॥
मर्म्मानुसारी वीसर्पः स्याद् वातोऽतिबलस्ततः।
व्यथेताङ्गं हरेत् संज्ञां निद्राञ्च श्वासमीरयेत्॥
हिक्काञ्च स गतोऽवस्थामीदृशीं लभते न ना।
क्वचिच्छर्म्मारतिग्रस्तो भूमिशय्यासनादिषु॥
चेष्टमानस्ततः क्लिष्टो मनोदेहसमुद्भवाम्।
दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते॥

स्फोटैः उपचीयते इत्यन्वयः। मर्म्मानुसारी हृदयाद्यनुसारी। अग्निदग्ध इव अग्निदग्धे देशे इव। मनोदेहसमुद्भवां निद्रां मरणरूपामश्नुते प्राप्नोति।

वातश्लैष्मिकस्य लक्षणम ।

कफेन रुद्ध पवनो भित्त्वा त बहुधा कफम् ।
रक्तञ्च वृद्धरक्तस्य त्वक्‌शिरास्नायुमासगम ॥
दूषयित्वा तु दीर्घाणु वृत्तस्थूलखरात्मनाम ।
ग्रन्थीना कुरुते माला रक्ताना तीव्ररुग्ज्वराम् ॥
श्वासकासातिसारास्यशोषहिक्कावमिभ्रमै ।
मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युताम ॥
इत्यय ग्रन्थिवीसर्पो वातश्लेष्मप्रकोपज ॥

पित्तश्लैष्मिकस्य लक्षणम ।

कफपित्ताज्ज्वर स्तम्भो निद्रा तन्द्रा शिरोरुजा ।
अङ्गावसादविक्षेपौ प्रलापारोचकभ्रमा ।
मूर्च्छाग्निहानिर्भेदोऽस्थ्ना पिपासेन्द्रियगौरवम् ।
आमोपवेशन लेप स्रोतसा स च सर्पति ॥
प्रायेणामाशय गृह्णन्नेकदेश न चातिरुक् ।
पिडकैरवकीर्णोऽतिपीतलोहितपाण्डुरै ॥
स्निग्धोऽसितो मेचकाभो मलिन शोथवान् गुरु ।
गम्भीरपाक प्राज्योष्मा स्पृष्ट क्लिन्नोऽवदीर्य्यते ॥
पङ्कवत्‌ शीर्णमासश्च स्पृष्टस्नायुशिरागण ।
शवगन्धी च वीसर्प कर्दमाख्यमुशन्ति तम् ॥

स च सर्पति एकदेशमित्यन्वय । पिडकै पिडकाभि । अवकीर्णो व्याप्त । असित कृष्ण । मेचक कृष्णकृष्ण । प्राज्योष्मा प्रचुरोष्मा । स्पृष्ट क्लिन्नोऽवदीर्य्यते स्पृष्ट सन्नार्द्रो भवति विदीर्य्यते । पङ्कत्वक् पङ्कवर्णा कर्दमवर्णा त्वग् यत्र स । शीर्णमास गलितमास । अतएव स्पृष्टस्नायुशिरागण ।

क्षतजस्य लक्षणम्॥

बाह्यहेता क्षतात क्रुद्ध सरक्त पित्तमीरयन्।
विसर्प मारुत कुर्य्यात् कुलत्थसदृशैश्चितम॥
स्फोटैं शोथज्वररुजादाहाढ्य श्यावशोणितम॥

बाह्यहेतो शस्त्रप्रहारव्यालदन्तनखाद्यागन्तु हेतो। श्यावशोणित कृष्णरक्तम्। अयञ्च पित्तजे विशर्पे अन्तर्भाव नीय। तेन न राख्यातिरिक्त।

ज्वरातिसारौ वमथुस्त्वङ्मांसदरणक्लमा।
अरोचकाविपाकौ च विसर्पाणामुपद्रवा॥
सिध्यन्ति वातकफपित्तकृता विसर्पा
सर्व्वात्मक क्षतकृतश्च न सिद्धिमेति।
पित्तात्मकोऽञ्जनवपुश्च भवेदसाध्य
कृच्छ्राश्च मर्म्मसु भवन्ति हि सर्व्व एव॥
कृच्छ्रा असाध्यत्वेन।

विसर्पस्य चिकित्सा।

साध्या विसर्पास्त्रय आदितो ये
न सन्निपातक्षतजा हि साध्यौ।
साध्येषु तत्पथ्यगणर्विदध्याद्
घृतानि सेकाश्च तथोपदेहान्॥
विरेकवमनालेपसेचनास्रविमोक्षणै।
उपाचरेद् यथादोष विसर्पानादितो भिषक्॥
रास्ना नीलोत्पल दारु चन्दन मधुक बला।
घृतक्षीरयुतो लेपो वातवीसर्पनाशन॥

कसेरु शृङ्गाटक पद्म गुन्द्रैः
सशैवलैः सोत्पलकर्द्दमैश्च ।
वस्त्रान्तरैः पित्तकृते विसर्पे
लेपो विधेयः सघृतः सुशीतः ॥

त्रिफला पद्मकोशीर समङ्गा करवीरकम् ।
नलमूलमनन्ता च लेपः श्लेष्मविसर्पके ॥
दोषसम्मिलनाज्जाते परीसर्पे भिषक् क्रियाम् ।
तत्तद्दोषप्रशमनी युक्त्या बुद्ध्यावचारयेत् ॥
परिषेकः प्रलेपश्च शस्यते पञ्चवल्कलैः ।
पद्मकोशीर मधुकैः सर्व्वत्रापि च चन्दनैः ॥

भूनिम्ब वासा कटुका पटोली
फलत्रयैश्चन्दननिम्बकैश्च ।
विसर्प दाह ज्वर शोथ कण्डू
विस्फोट तृष्णा वमिहृत् कषायः ॥
कुष्ठामय स्फोट मसूरिकोक्ता
चिकित्सयाप्याशु हरेद् विसर्पान् ।
सर्व्वान् विपक्कान् परिशोध्य धीमान्
व्रणक्रमेणोपचरेद यथोक्तम् ॥

तिक्तवर्गोऽखिलश्चैव पानान्नमविदाहकम् ।
द्रव्यं शोणितसंशुद्धिकरं चन्दनलेपनम् ॥
अनुद्वेगकरं कर्म्म विसर्पे परमं हितम् ।
विपरीतं विजानीयात् क्लेशदं गदवृद्धिकृत् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
विसर्पाधिकारस्त्रिंशोऽध्यायः ।

# एकत्रिंशोऽध्यायः ।

—— ० ——

## मसूरिकाधिकारः ।

### मसूरिकाया निदानं सम्प्राप्तिश्च ।

कट्वम्ल लवण क्षार विरुद्धाध्यशनाशनैः ।
दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः ॥
क्रूरग्रहेक्षणाच्चापि देशे दोषाः समुद्धताः ।
जनयन्ति शरीरेऽस्मिन् दुष्टरक्तेन सङ्गताः ॥
मसूराकृतिसंस्थानाः पिडकाः स्युर्मसूरिकाः ॥

क्षारो यवक्षारादिः । देशे क्रूरग्रहेक्षणात् क्रूरग्रहाः राहुशनैश्चरादयः देशक्षोभकराः तेषामीक्षणात् यस्मिन् देशे क्रूरग्रहदृष्टिस्तत्रापि मसूरिकोत्पत्तिरित्यर्थः । मसूराकृतिसंस्थानाः मसूरस्य या आकृतिः तद्वत् संस्थानमाकृतिर्यासां ताः । क्रूरग्रहेक्षणादित्यत्र क्रुद्धग्रहेक्षणादित्यपि पाठः । सा मसूरिका स एव मसूरिकाख्यो रोग इत्यर्थः । मसूरिका इति पाठे दोषाः मसूराकृतीर्याः पिडकाः जनयन्ति ता एव नाम्ना मसूरिकाः स्युरित्यर्थः ।

### मसूरिकाया उत्पादनविधिः ।

धेनुस्तन्यमसूरिका नराणाञ्च मसूरिका ।
तज्जलं बाहुमूलाच्च शस्त्रान्तेन गृहीतवान् ॥
बाहुमूले च शस्त्राणि रक्तोत्पत्तिकराणि च ।
तज्जलं रक्तमिलितं स्फोटकज्वरसम्भवम् ॥

एतत् धन्वन्तरिकृतशाक्तेयग्रन्थः शब्दकल्पद्रुमधृतः ।

मसूरिकाया पूर्व्वरूपम् ।

तासां पूर्व्वं ज्वरः कण्डूर्गात्रभङ्गोऽरतिर्भ्रमः ।
त्वचि शोथः सवैवर्ण्यो नेत्ररागस्तथैव च ॥

वातजायास्तस्या रूपम ।

स्फोटाः श्यावारुणा रूक्षास्तीव्रवेदनयान्विताः ।
कठिनाश्चिरपाकाश्च भवन्त्यनिलसम्भवाः ॥

पित्तजाया रूपम् ।

सन्ध्यस्थिपर्व्वणां भेदः कासः कम्पोऽरतिर्भ्रमः ।
शोषस्ताल्वोष्ठ जिह्वानां तृष्णा चारुचिसंयुता ॥
रक्ताः पीताः सिताः स्फोटाः सदाहास्तीव्रवेदनाः ।
भवन्त्यचिरपाकाश्च पित्तकोपसमुद्भवाः ॥

रक्तजाया लक्षणम ।

विड्भेदश्चाङ्गमर्दश्च दाहस्तृष्णारुचिस्तथा ।
मुखपाकोऽक्षिपाकश्च ज्वरस्तीव्रः सुदारुणः ॥
रक्तजायां भवन्त्येते विकाराः पित्तलक्षणाः ॥

कफजाया लक्षणम ।

श्वेताः स्निग्धा भृशस्थूलाः कण्डूरा मन्दवेदनाः ।
मसूरिकाः कफोत्थाश्च चिरपाकाः प्रकीर्त्तिताः ॥
कफप्रसेकः स्तैमित्यं शिरोरुग् गात्रगौरवम ।
हृल्लासोऽन्नारुचिर्निद्रा तन्द्रालस्यञ्च जायते ॥

दोषजाया लक्षणम् ।

नीलाश्चिपिटविस्तीर्णा मध्ये निम्ना महारुजाः ।
पूतिस्रावाश्चिरात्पाकाः प्रभूताः सर्व्वदोषजाः ॥

### रसगताया मसूरिकाया लक्षणम ।

तोयवुद्बुदसङ्काशास्त्वग्गतास्तु मसूरिका ।
स्वल्पदोषा प्रजायन्ते भिन्नास्तोय स्रवन्ति च ॥

त्वग्गता रसगता ।

### रक्तगताया लक्षणम् ।

रक्तस्था लोहिताकारा शीघ्रपाकास्तनुत्वच ।
साध्या नात्यर्थदुष्टाश्च भिन्ना रक्त स्रवन्ति च ॥

साध्या रक्तस्था इत्यर्थ । नात्यर्थदुष्टा अत्यर्थ दुष्टशोणिता पुनर्न साध्या किन्तु काष्टसाध्या ।

### मासगताया लक्षणम ।

मासस्था कठिना स्निग्धाश्चिरपाका घनत्वच ।
गात्रशूलारतिकण्डूतृष्णाज्वरसमन्विता ॥

### मेदोजाया लक्षणम ।

मेदोजा मण्डलाकारा मृदव किञ्चिदुन्नता ।
घोरज्वरकराश्चैव स्थूला स्निग्धा सवेदना ।
ससोहारतिसन्तापा कश्चिदाभ्यो विनिस्तरेत ॥

### अस्थिमज्जगतयोर्लक्षणम ।

क्षुद्रा गात्रसमा रुक्षाश्चिपिटा किञ्चिदुन्नता ।
मज्जोत्था भृशसम्मोहा वेदनारतिसयुता ॥
भ्रमरेणेव विद्धानि कुर्व्वन्त्यस्थीनि सर्व्वत ।
छिन्दन्ति मर्म्मधामानि प्राणानाशु हरन्ति च ॥

गात्रसमा गात्रतुल्यवर्णा । चिपिटाश्चिपिटाकारा । मज्जग्रहणेनास्थ्नोऽपि ग्रहण तदाधारत्वात् । अतएवाग्रे

भ्रमरेणेव विद्धानि कुर्व्वन्त्यस्थीनि सर्व्वत इति। सर्व्वधामानि मर्म्मस्थानानि।

शुक्रगताया लक्षणम्।

पक्वाभा पिडका स्निग्धा सूक्ष्माश्चात्यर्थवेदना।
स्तैमित्यारतिसम्मोहदाहोन्मादसमन्विता॥
शुक्रगाया मसूर्य्यान्तु लक्षणानि भवन्ति हि।
निर्दिष्ट केवल चिह्न दृश्यते न तु जीवितम॥

पक्वाभा पक्वाकारा न तु पक्वा। सूक्ष्मा कोमला। न तस्याश्चिकित्सा युक्ता यतो जीवन न दृश्यते इति।

दोषमिश्रास्तु सप्तैता द्रष्टव्या दोषलक्षणै॥

चर्म्मजाया मसूरिकाया लक्षणम्।

अरत्यरुचिहृत्कण्ठरोधतन्द्रासमन्विता।
दुश्चिकित्स्या समुद्दिष्टा पिडकाश्चर्म्मसञ्ज्ञिता॥

चर्म्मसञ्ज्ञिता चर्म्मदल इति ख्याता।

त्वग्गता रक्तगाश्चैव पित्तजा श्लेष्मजास्तथा॥
श्लेष्मपित्तकृताश्चैव सुखसाध्या मसूरिका॥
वातजा वातपित्तोत्था श्लेष्मवातकृताश्च या।
कृच्छ्रसाध्या मतास्तस्माद् यत्नादेता उपाचरेत्॥
असाध्या सन्निपातोत्थस्तासा वक्ष्यामि लक्षणम्।
प्रवालसदृशा काश्चित् काश्चिज्जम्बूफलोपमा॥
लोहजालसमा काश्चिदतमीफलसन्निभा।
आसा बहुविधा वर्णा जायन्ते दोषभेदत॥

प्रवालसदृशा इत्यादि। आसा प्रवालजम्बूफललोह गुटिकातसीफल सादृश्य वर्णेन। अनुक्तवर्णग्रहणार्थमाह आसा बहुविधा वर्णा इति।

सर्व्वासां वमनं पथ्यं पटोलारिष्टवत्सकै ।
कषायैश्च वचाव ... ... ... स्कृतै ॥
सुषवोपत्रनिर्य्यासं हरिद्राचूर्णसंयुतम ।
रोमान्ती ज्वरविस्फोटमसूरीशान्तये पिबेत ॥
उष्ट्रकण्टकमूलं वाप्यनन्तामूलमेव वा ।
विधिगृहीतं ज्येष्ठाम्बु पीतं हन्ति मसूरिकाम ॥
व्युषितं वारि सन्ध्या... पीतं दा...गुटीहरम् ॥

अमृतादि ।

अमृतवृषपटोलं मुस्तकं सप्तपर्णं
खदिरमसितवेत्रं निम्बपत्रं हरिद्रे ।
विविधविषविसर्पान् कुष्ठविस्फोटकण्डू
रपनयति मसूरीं शीतपित्तं ज्वरञ्च ॥
गुडूची मधूकं द्राक्षा मोरटं दाडिमैः सह ।
पाययेत् पाककाले तु भेषजं गुडसंयुतम ॥
तेन पाकं व्रजत्याशु न च वायुः प्रकुप्यति ॥
लिह्याद् वादरं चूर्णं पाचनार्थं गुडेन तु ।
अनेनाशु विपच्यन्ते वातपित्तकफात्मिका ॥
जातीपत्रं समञ्जिष्ठं दार्व्वी पूगफलं शमी ।
धात्रीफलं समधूकं क्वथितं मधुसंयुतम् ॥
मुखरोगे कण्ठरोधे गण्डूषार्थं प्रशस्यते ॥
पञ्चवल्कलचूर्णेन क्लेदिनीमवचूर्णयेत ।
भस्मना केचिदिच्छन्ति केचिद्गोमयरेणुना ॥
क्रिमिपातभयाच्चापि धूपयेत् सरलादिभिः ॥
कृष्णाभयारजो लिह्यान्मधुना कण्ठशुद्धये ।

तथाष्टाङ्गावलेहश्च कवडश्चार्द्रकादिभि ॥
पञ्चतिक्त प्रयुञ्जीत पानाभ्यञ्जनभोजनै ।
कुर्य्याद्व्रणविधानञ्च तैलादीन् वर्ज्जयेच्चिरम् ॥

शीतलानन्दो रस ।

हेमरौप्यरसव्योमगन्धकायास्ययोजतु ।
कन्याद्भिर्मर्द्दयित्वाथ मुद्गमात्रा वटीञ्चरेत् ॥
यथादोषानुपानेन प्रयोगादस्य निश्चितम ।
मसूरिकादय सर्व्वे नश्यन्ति त्वरया गदा ॥
देव्या शीतलया प्रोक्त शीतलानन्दनामक ।
मसूरिकाभिभूताना रसोऽय हितकाम्यया ॥

वसन्तसुन्दरो रस ।

माक्षिक रजत व्योम तुगाक्षीरी महौषधम ।
यवाच्छिरीषतोयेन मर्द्दयित्वा दिनत्रयम ॥
मुद्गमाना वटी कृत्वा प्रयुञ्ज्यात् पयसा सह ।
मसूरिकाभिभूतेभ्य प्रात सायञ्च नित्यश ॥
शीतार्द्दिता यथा वृक्षा वसन्तस्य समागमे ।
तथास्य सेवनान्मर्त्त्या सुन्दरत्वमवाप्नुयु ॥
मयत प्रयतोऽपिष्य भवेज्जातमसूरिक ।
दिवानिद्रा सुरा तैलमामिषञ्च विवर्ज्जयेत् ॥

रोमान्तिकाया लक्षणम ।

रोमकूपोन्नतिसमा रागिण्य कफपित्तजा ।
कासारोचकसयुक्ता रोमान्त्यो ज्वरपूर्व्विका ॥
रागिण्यो लोहिता । ज्वरपूर्व्विका ज्वरपूर्व्वरूपा ।

तन्त्रान्तरोक्त रोमान्तिकाया लक्षणम्।

ज्वरस्तीव्र खरोष्णा त्वक् चक्षु साश्रु सलोहितम्।
ओष्ठयो शुष्कता लिप्ता जिह्वाद्री वह्निमन्दता ॥
पिपासा च प्रतीश्याय क्षवथुश्चाल्पमूत्रता ।
मलरोधोऽतिसारो वा कास शुष्क स्वरक्षय ॥
वैवर्ण्य स्फीतवर्त्मत्वमरतिर्बलहीनता ।
हृल्लासश्च तथा च्छर्द्दिर्वेदनोरसि चोदरे ॥
तत प्रायश्चतुर्थेऽह्नि कण्डू रक्ता प्रकाशते ।
रोमकूपसमा नाम्ना रोमान्ती सा प्रकीर्त्तिता ॥
भाले च चिबुके चादौ निखिले मुखमण्डले ।
ततोऽन्यत्र च शाखासु क्रमात् कण्डू प्रकाशते ॥
शोथ सञ्जायते चापि नेत्रयोर्मुखमण्डले ।
नि सृते पिडकाव्यूहे ज्वरश्च मृदुतामियात् ॥

रोमान्तिकायाश्चिकित्सा ।

उच्चैस्तरे प्रशस्ते च रोमान्तीगदपीडित ।
गृहेऽनार्द्रे वसेन्नित्य गुरूष्णवसनावृत ॥
शीतवायु शीततोय सन्ताप वह्निसूर्य्ययो ।
त्यजेत् स्त्रिय दिवानिद्रामध्वान निशि जागरम् ॥
सुखोष्णेनाम्बुना स्वेदो रोमान्तीज्वरहृन्मत ॥
मसूर्य्या ये च कथिता इह क्वाथादयोऽपि ते ।
प्रयुज्यमाना गदिन सुखीकुर्व्वन्ति सत्वरम् ॥
यथातथ प्रतीकार्य्या ज्वरकासादयश्च ते ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
मसूरिका रोमान्तिकाधिकार एकत्रिंशोऽध्याय ।

## रोगिनिश्चय ।

---

### वातरक्ताधिकार ।

#### वातरक्त । (विप्रकृष्ट निदान ।)

लवणाम्लकटुक्षार स्निग्धोष्णाजीर्ण भोजनै ।
क्लिन्नशुष्काम्बुजानूप मांसपिण्याक मूलकै ॥
कुलत्थमाष निष्पाव शाकादि पललेक्षुभि ।
दध्यारनाल सौवीर शुक्त तक्र सुरासवै ॥
विरुद्धाध्यशन क्रोध दिवास्वप्न प्रजागरै ।
प्रायश सुकुमाराणा मिथ्याहारविहारिणाम ॥
स्थूलाना सुखिनाञ्चापि प्रकुप्यति वातशोणितम ।

न जीर्ण पचन येषा तानि अजीर्णभोजने, जीर्णमित्यत्र भावे क्तप्रत्यय । अजीर्णे इति भोजनेरिति सप्तमीसमासे स्वीकृते अध्यशनशब्दप्रयोगात् तदर्थस्यैव पुनरुक्त्यापत्ति स्यात् ।

#### तस्य सम्प्राप्ति ।

हस्त्यश्वोष्ट्रै र्गच्छतश्चाश्नतश्च
विदाह्यन्न स विदाह्योऽशनस्य ।
कृत्स्न रक्त विदहत्याशु तच्च
दुष्ट स्रस्त पादयोश्चीयते तु ॥
तत् सम्पृक्त वायुना दूषितेन
तत्प्राबल्यादुच्यते वातरक्तम् ॥

अपिच । वायु प्रवृद्धो वृद्धेन रक्तेनावारित पथि ।
क्रुद्ध सन्दूषयेद्रक्त तज्ज्ञेय वातशोणितम् ॥

वातरक्तस्य पूर्व्वरूपम् ।

स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं चतेऽतिरुक् ।
सन्धिशैथिल्यमालस्य सदन पिडकोद्गम ॥
जानुजङ्घोरुकट्यस हस्त पादाङ्ग सन्धिषु ।
निस्तोद स्फुरण भेदो गुरुत्व सुप्तिरेव च ॥
कण्डू सन्धिषु रुग् भूत्वा भूत्वा नश्यति चासकृत् ।
वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक् पूर्व्वलक्षणम् ॥

वातरक्तस्य लक्षणम ।

वातेऽधिकेऽधिक तत्र शूलस्फुरणभञ्जनम् ।
शोथस्य रौच्यकृष्णत्वश्यावता वृद्धिहानय ॥
धमन्यङ्गुलिसन्धीना सङ्कोचोऽङ्गग्रहोऽतिरुक् ।
शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तय ॥
रक्ते शोथोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ।
स्निग्धरूक्षै शम नैति कण्डुक्लेदसमन्वित ॥
पित्ते विदाह सम्मोह स्वेदो मूर्च्छा मदस्तृषा ।
स्पर्शासहत्व रुगराग शोथे पाको भृशोष्मता ॥
कफे स्तैमित्य गुरुता सुप्ति स्निग्धत्व शीतता ।
कण्डू मन्दा च रुग्द्वन्द्व सर्व्वलिङ्गञ्च सङ्करात् ॥
पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ।
आखोर्विषमिव क्रुद्ध तद देहमनुसर्पति ॥

तस्योपद्रवा ।

अस्वप्नारोचक श्वास मासकोथ शिरोग्रहा ।
मूर्च्छा चाथ मदस्तृष्णा ज्वरमोह प्रवेपका ॥
( द, १८ )

स्त्रिक्का पाङ्गल्य वीसर्प पाक तोदभ्रमक्लमा ।
अङ्गुलीवक्रता स्फोट दाह मर्म्मग्रहार्व्वुदा ॥

तस्यासाध्यत्वादिकम ।

एतैरुपद्रवैर्व[illegible] मोहेनैकेन वापि यत ।
असम्[illegible] [illegible] [illegible]रुपद्रवम ॥

[illegible]तरक्तमिति शेष ।

एकदोषानुग [illegible] नव याप्य द्विदोषजम ।
त्रिदोषजमसाध्य स्याद [illegible]स्य च स्युरुपद्रवा ॥
आजानु स्फुटित यच्च प्रभिन्न प्रस्रुतञ्च यत् ।
उपद्रवैश्च यज्जुष्ट प्राणमांसक्षयादिभि ॥
वातरक्तमसाध्य स्यात् याप्य संवत्सरोत्थितम् ॥

वातरक्तस्य चिकित्सा ।

वातशोणितिनो रक्त स्निग्धस्य बहुशो हरेत ।
अल्पाल्प रक्षयेद वायु यथादोष यथाबलम् ॥
उग्राङ्गदाहतोदेषु जलौकोभिर्विनिर्हरेत् ।
ग्लानेऽङ्गे स्रावयेन्नास्र रक्षेद वातोत्तरञ्च यत ॥
विरेचनै स्नेहयुक्तैर्नित्यमेन विरेचयेत् ॥
विदध्यादसकृच्चापि वस्तिकर्म्म यथाबलम् ।
नहि वस्तिसम किञ्चित् वातरक्तचिकित्सितम् ॥

गोधूमचूर्णाजपयो घृतञ्च
सच्छागदुग्धो रुवुवोजकल्क ।
लेपो विधेय शतधौतसर्पि
सेके पयश्चाविकमेव शस्तम् ॥

लेपस्तद्वत् तिला भृष्टा पिष्टा पयसि निर्वृता ।

रास्ना गुडूची मधुकं बलाञ्च पयसा सह ।
पिष्टा प्रलेपयेत् तेन वातरक्तं प्रशाम्यति ॥
एरण्डबीजममृता शताह्वा जीरकं बलाम ।
छागेन पयसा पिष्ट्वा लेपयेदसकृद् भिषक् ॥
हरीतकीं प्राश्य समं गुडेन
तिस्रोऽथवा पञ्च ततो गुडूच्या ।
क्वाथोऽनुपीतः शमयत्यवश्यं
प्रभिन्नमाजानुजवातरक्तम् ॥

पटोलादि क्वाथ ।

पटोलकटुकाभीरु त्रिफलामृत साधितम ।
क्वाथं पीत्वा जयेज्जन्तु सदाहं वातशोणितम् ॥
सम्पाकामृत वासानामेरण्डस्नेहसंयुतम ।
पीत्वा क्वाथमसृग्वात क्रमात् सर्व्वाङ्ग जयेत् ॥
छिन्नोद्भवाकषायेण सेव्य शुद्ध शिलाजतु ।
अमृतात्रिफलाक्वाथमयुना वा पलङ्कषा ॥

गुडूचीघृतम् ।

अमृताया पलशतं जलद्रोणे विपाचयेत् ।
घृतप्रस्थं विपक्वाव्य दत्वा द्वे पलानि च ॥
चतुर्गुणेन पयसा वातासृक् कुष्ठनाशनम ।
कामला पाण्डुरोगघ्नं प्लीहकासज्वरापहम ॥

महापिण्डतैलम् ।

सारिवा सर्ज्जं मञ्जिष्ठा यष्टिसिक्थै पयोऽन्विते ।
तैलं पक्वं प्रयोक्तव्यं पिण्डाख्यं वातशोणिते ॥

## पिण्डतैलम् ।

समधूच्छिष्ट मञ्जिष्ठं ससर्ज्जरस शारिवाम् ।
पिण्डतैलं तदभ्यङ्गात् वातरक्तं प्रशाम्यति ॥

---

पानमन्नञ्च भेषज्यं यद यत् कुष्ठहितं मतम ।
तत्तन्नित्यं प्रयोक्तव्यं वातरक्तं प्रशान्तये ॥
कैशोरगुग्गलुश्चैव रसाभ्रगुग्गुलुस्तथा ।
निम्बादिचूर्णं गुडूचीलौह मतहितं भवेत ।
वातरक्तान्तकरसो वातरक्तं प्रशम्यति ॥

गुडूचीतैलं विषतिन्दुकञ्च
रुद्रं महारुद्र गुडूचिकादि ।
तैलं प्रदेयं किल वातरक्ते
यथायथं दोषबलानुरूपम् ॥

## वातरक्ते पथ्यापथ्यनिर्णय ।

यव षष्टिक नीवार कलमारुण शालय ।
गोधूमश्चणको मुद्गस्तुवरो च मुकुष्टक ॥
अव्यजामहिषीणाञ्च गवा सर्पि पयस्तथा ।
उपोदिका काकमाची वेत्राग्र सुनिषण्णकम ॥
वास्तूक कारवेल्लञ्च कुष्माण्डञ्च पुरातनम ।
पटोल तिक्तसत्त्वञ्च पथ्यानि वातशोणिते ॥
माष कुलत्थ निष्पाव कलाय मूलक दधि ।
मद्य मासञ्च मत्स्यञ्च काञ्जिक क्षारसेवनम ॥

दिवास्वप्न वह्निताप व्यायाम मैथुन तथा ।
कटूष्णगुर्व्वभिष्यन्दि लवणाम्लानि वर्ज्जयेत ॥
वातरक्तीति शेष ।

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
वातरक्ताधिकारो द्वात्रिंशोऽध्याय ।

---

## त्रयस्त्रिंशोऽध्याय ।

— o —

### कुष्ठाधिकार ।

कुष्ठाना निदान सम्प्राप्तिश्च ।

विरोधीन्यन्नपानानि द्रवस्निग्धगुरूणि च ।
भजतामागता छर्द्दि वेगाश्चान्यान प्रतिघ्नताम ॥
व्यायाममग्निसन्तापमति भुक्त्वा निषेविणाम् ।
शीतोष्णलङ्घनाहारान् क्रम मुक्त्वा निषेविणाम् ॥
घर्म्मश्रमभयार्त्तानां द्रुत शीताम्बुसेविनाम ।
अजीर्णाध्याशिनाञ्चापि पञ्चकर्म्मापचारिणाम् ॥
नवान्न दधि मत्स्यातिलवणाम्लनिषेविणाम ।
माषमूलकपिष्टान्नतिलक्षीरगुडाशिनाम् ॥
व्यवायञ्चाप्यजीर्णेऽन्ने निद्रा वा भजता दिवा ।
विप्रान् गुरून् धर्षयता पाप कर्म्म च कुर्व्वताम ॥
वातादयस्त्रयो दुष्टास्त्वग्रक्त मासमम्बु च ।

दूषयन्ति स कुष्ठा[illegible] स[illegible]को द्रव्यसंग्रह ॥
अत कुष्ठानि [illegible] येकादशैव च ॥
कुष्ठानि स[illegible] दोषै [illegible]ग्द्वन्द्वै [illegible]मागते ।
सर्व्वेषु च त्रिदोषेषु व्यपदेशोऽधिकत्वत ॥

सर्व्वेषु कुष्ठेषु त्रिदोषजेषु सत्स्वपि दोषस्योल्वणतया तानि सप्तधा भवन्ति। तेषां सप्तधात्वम् उल्वणदोषकृतभेदेनैव, न तु सङ्ख्यया। सङ्ख्यया तेषां अष्टादश विधत्वमेव।

वातेन कुष्ठ कापाल पित्तेनोडुम्बर कफात् ।
मण्डलाख्य विचर्च्चि च ऋष्याख्य वातपित्तत ॥
चर्म्मैककुष्ठकिटिम सिध्मालस विपादिका ।
वातश्लेष्मोद्भवा श्लेष्मपित्ताद् दद्रु शतारुषी ॥
सपुण्डरीक विस्फोट पामा चर्म्मदल तथा ।
सर्व्वैरेवोल्वणैर्दोषै कुष्ठ स्यात काकणाभिधम ॥

महाकुष्ठाना गणना ।

पूर्व्व त्रिक तथा सिध्म तत काकणक तथा ।
पुण्डरीकर्च्चजिह्वाख्ये महाकुष्ठानि सप्त च ॥

सिध्मशब्दोऽकारान्तो नपुसकोऽप्यस्ति ।

क्षुद्रकुष्ठाना गणना ।

एककुष्ठ स्मृत पूर्व्व गजचर्म्म तत स्मृतम ।
ततश्चर्म्मदल प्रोक्त ततश्चापि विचर्च्चिका ॥
विपादिकाभिधा सैव पामाकच्छूस्तत परम् ।
दद्रुविस्फोटकिटिमालसक वेष्टित तथा ॥
क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरै ॥

वेष्टित शतारु। केचित पामान कच्छुञ्च एकरोग वदन्ति तेषा मते विचर्च्चिका विपादिका च भिन्ना।

कुष्ठाना पूर्व्वरूपम्।

अतिश्लक्ष्णखरस्पर्श खेदाखेद विवर्णता।
दाह कण्डूस्त्वचि स्वापस्तोद कोठोन्नति श्रम॥
व्रणानामधिक शूल शीघ्रोत्पत्तिश्चिरस्थिति।
रूढानामतिरूक्षत्व निमित्तेऽल्पेऽतिकोपनम।
रोमहर्षोऽसृज कार्ष्ण्य कुष्ठलक्षणमग्रजम्॥

श्रम इत्यत्र भ्रम इति पाठान्तरम।

महाकुष्ठाना मध्ये कापालस्य लक्षणम्।

कृष्णारुणकपालाभ यद रूक्ष परुष तनु।
कापाल तोदबहुल तत् कुष्ठ विषम स्मृतम॥

किञ्चित कृष्णा किञ्चिदरुणा ये कपाला स्फुटित मृत्पात्रखण्डा ( खाप्‌रा इति यावत् ) तद्वर्णम। परुष खर स्पर्शम्। तनु तनुत्वक्। कापाल कपालसञ्ज्ञम्। विषम दुश्चिकित्स्यम्।

औडुम्बरस्य लक्षणम्।

रुग्दाहरागकण्डूभि परीत रोमपिञ्जरम।
उडुम्बरफलाभास कुष्ठमौडुम्बर वदेत्॥

मण्डलस्य लक्षणम्।

श्वेतरक्त स्थिर स्त्यान स्निग्धमुत्सन्नमण्डलम।
कृच्छ्रमन्योन्यसंसक्त कुष्ठ मण्डलमुच्यते॥

श्वेतरक्त किञ्चिच्छ्वेत किञ्चिद्रक्त, स्थिर चिकित्सा विना अविनाशि, स्त्यानमार्द्र, स्निग्ध सखेदम्। उत्सन्न-

मण्डलमुन्नतमण्डल, कृच्छ्र कष्टसाध्य, अन्योन्यससक्त परस्पर मिलितम।

सिध्मस्य लक्षणम।

श्वेत ताम्र तनु च यद रजो घृष्ट विमुञ्चति।
प्रायेणोरसि तत सिध्ममलावुकुसुमोपमम॥

काकणस्य लक्षणम।

यत् काकणन्तिकावर्णमपाक तीव्रवेदनम।
त्रिदोषलिङ्ग ततकुष्ठ काकण नैव सिध्यति॥

पुण्डरीकस्य लक्षणम।

सश्वेत रक्तपर्य्यन्त पुण्डरीकदलोपमम।
सरागञ्चैव म।त्सेध पुण्डरीक तदुच्यते॥

पुण्डरीकदल।पम पुण्डरीक श्वेतकमल तत्पत्त्रोपमम। रक्तपर्य्यन्त अन्ते रक्तम्।

ऋक्षजिह्वस्य लक्षणम।

कर्कश रक्तपर्य्यन्तमन्त श्याव मवेदनम।
यदृक्षजिह्वासस्थ।न मृक्षजिह्व तदुच्यते॥

ऋक्षजिह्वासस्थान ऋक्षो भल्लूकस्तस्य जिह्वाकृति, यदृष्यजिह्वासस्थानमृष्यजिह्व तदुच्यतेति पाठे ऋष्यो हरिण विशेषस्तज्जिह्वाकारमित्यर्थ।

क्षुद्रकुष्ठाना मध्ये—

एककुष्ठ गजचर्म्मणाल्लक्षणम।

अस्वेदन महावास्तु मत्स्यशल्कोपमञ्च यत्।
तदेककुष्ठ चर्म्माख्य बहुल, गजचर्म्मवत्॥

महावास्तु महास्थानम् । मत्स्यशल्कोपम अत्र शल्कशब्देन लक्षणया त्वगुच्यते । तेन चक्राकारमभ्रकपत्रसदृश भवति । एककुष्ठमिति क्षुद्रकुष्ठेषु मुख्यत्वात् । चर्म्माख्य गजचर्म्माख्य चर्म्मकुष्ठमिति च । बहुल स्थूल गजचर्म्मवत् रूक्ष कृष्णञ्च ।

चर्म्मदलस्य लक्षणम् ।

रक्त सशूल कण्डूमत् सस्फोट दलयत्यपि ।
तच्चर्म्मदलमाख्यात स्पर्शस्यासहनञ्च यत् ॥

दलयति विदारयति चर्म्मेति शेष ।

विचर्च्चिकाया लक्षणम ।

सकण्डू पिडका श्यावा बहुस्रावा विचर्च्चिका ॥

वैपादिकस्य लक्षणम ।

वैपादिक पाणिपादस्फुटन तीव्रवेदनम ॥

पाण्यो पादयोश्च स्फुटन विदारण येन तत ।

पामाया लक्षणम ।

सास्रावकण्डू परिदाहरूग्भि
पामाणुकाभि पिडकाभिरूह्या ॥

कच्छ्वोर्ल्लक्षणम ।

स्फोटै सदाहैरति सैव कच्छ
स्फिक्पाणिपादप्रभवैर्निरूप्या ॥

दद्रोर्ल्लक्षणम ।

सकण्डूरागपिडक दद्रुमण्डलमुद्गतम ॥

मण्डलरूपेणोत्पत्त्या दद्रुमण्डलमिति कीर्त्तितम ।

विस्फोटकस्य लक्षणम ।

स्फोटा श्यावारुणाभासा विस्फोटा स्युस्तनुत्वच ॥

किटिमस्य लक्षणम्।

श्याव किणखरस्पर्श परुष किटिम स्मृतम्॥

श्यावमित्यत्र श्याममित्यपि पाठ। किण शुष्कव्रण स्थान तद्वत् कर्कशस्पर्श, परुष रूक्षम्।

अलसकस्य लक्षणम।

कण्डूमद्भि सरागैश्च गण्डैरलसक चितम्॥

गण्डैर्महापिडकाभि, चित वेष्टितम्।

शतारुषो लक्षणम्।

रक्त श्याव सदाहार्त्ति शतारु स्याद बहुव्रणम॥

सप्तधातुगताना कुष्ठाना मध्ये

रसगतस्य कुष्ठस्य लक्षणम्।

त्वक्स्थे वैवर्ण्यमङ्गेषु कुष्ठे रौक्ष्यञ्च जायते।

त्वक्स्वापो रोमहर्षश्च स्वेदस्यातिप्रवर्त्तनम्॥

त्वक्शब्देनात्र रस उच्यते धातुप्रस्तावात्, तस्य त्वक्स्थितत्वाच्च।

रक्तगतस्य लक्षणम्।

कण्डूर्विपूयकश्चैव कुष्ठे शोणितसंश्रिते॥

मांसगतस्य लक्षणम्।

बाहुल्य वक्त्रशोषश्च कार्कश्य पिडकोद्गम।

तोद स्फोट स्थिरत्वञ्च कुष्ठे मांससमाश्रिते॥

बाहुल्य कुष्ठस्य पुष्टि, पिडकोद्गम क्षुद्रपिडकोद्गम, स्फोट वृहत्पिडका, स्थिरत्व अमञ्चारित्वञ्च।

मेदोगतस्य लक्षणम् ।

कौण्य गतिक्षयोऽङ्गाना सम्भेद क्षतसर्पणम ।
मेदस्थानगते लिङ्ग प्रागुक्तानि तथैव च ।

कौण्य हस्तनाश, अङ्गाना सम्भेद अङ्गभङ्ग, क्षतसर्पण क्षतप्रसार, प्रागुक्तानि रक्तमासगतानि लिङ्गानि ।

अस्थिमज्जागतयोर्लक्षणम् ।

नासाभङ्गोऽक्षिरागश्च क्षतेषु क्रिमिसम्भव ।
स्वरोपघातश्च भवेदस्थिमज्जसमाश्रिते ॥

शुक्रगतस्य लक्षणम् ।

दम्पत्यो कुष्ठबाहुल्याद दुष्टशोणितशुक्रयो ।
यदपत्य तयोर्जात ज्ञेय तदपि कुष्ठितम ॥
शुक्रार्त्तवगत कुष्ठ अपत्येन व्यज्यत इति तात्पर्य्यम ।

कुष्ठानामुल्वणवातादिदोषकृतानि लिङ्गानि ।

खर श्यावारुण रूक्ष वातकुष्ठ सवेदनम ।
पित्तात् प्रकुपित दाहरागस्रावान्वित मतम् ॥
कफात् क्लेदि घन स्निग्ध सकण्डु शैत्यगौरवम ।
द्विलिङ्ग द्वन्द्वज कुष्ठ त्रिलिङ्ग सान्निपातिकम् ॥

कुष्ठाना साध्यत्वादिकम् ।

साध्य त्वग्रक्तमासस्थ वातश्लेष्माधिकञ्च यत ॥
मेदोग द्वन्द्वज याप्य वर्ज्ज्य मज्जास्थिसश्रितम् ॥
क्रिमितृड्दाहमन्दाग्निसयुक्त यत त्रिदोषजम ॥

कुष्ठानामरिष्ट लक्षणम् ।

प्रभिन्न प्रस्रुताङ्गञ्च रक्तनेत्र हतस्वरम ।
पञ्चकर्म्मगुणातीत कुष्ठ हन्तीह मानवम् ॥

प्रभिन्न विदीर्ण, क्षतस्वर घर्घरस्वर, पञ्चकर्म्मगुणातीत असञ्जातवमनादिपञ्चकर्म्मगुणम्।

त्वग्दृष्टिसाम्यात् कुष्ठभेदत्वाच्चात्रैव श्वित्रमुच्यते।

कुष्ठैकसम्भव श्वित्र किलासञ्चारुण भवेत्।

निर्द्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम्॥

कुष्ठैकसम्भव कुष्ठेन सह एक सम्भवो निदान यस्य तत्। श्वित्रमेव रक्तमांसाश्रयणादरुण किलाससञ्ज्ञञ्च भवेत्। त्रिधातूद्भवसंश्रय त्रयो धातवो वातपित्तकफास्तेभ्य पृथग्भूतेभ्य उद्भवो यस्य तत्, अथवा त्रयो धातवो रक्तमांसमेदांसि संश्रयोऽधिष्ठान यस्य तत्।

श्वित्रस्य दोषभेदेन लक्षणभेदा।

वाताद्रूक्षारुण पित्तात ताम्र कमलपत्रवत।

सदाह रोमविध्वंसि कफाच्छ्वेत घन गुरु॥

सकण्डूक क्रमाद्रक्तमांसमेद सु चादिशेत्।

वर्णेनैवेद्दृगुभय कृच्छ्र तच्चोत्तरोत्तरम्॥

अरुणमीषल्लोहितम्। कमलपत्रवदित्यनेन मध्ये श्वेतमन्ते लोहितम्। घन पुष्टम्।

श्वित्रन्तु द्विविध विद्याद दोषज व्रणज तथा॥

श्वित्रस्य साध्यत्वादिकम्।

अशुक्लरोमाबहुलमसंश्लिष्ट मिथो नवम्।

अनग्निदग्धज साध्य श्वित्र वर्ज्ज्यमतोऽन्यथा॥

अबहुल तनु।

गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम्।

वर्ज्जनीय विशेषेण किलास सिद्धिमिच्छता॥

गुह्य मेहन भगश्च, तलमत्र पादतलम । सुश्रुतेनान्ते जातमिति सामान्यतो निर्द्दिष्टत्वात् ।

प्रसङ्गाद् गात्रसंस्पर्शान्नि श्वासात सहभोजनात ।
एकशय्यासनाच्चापि वस्त्र माल्यानुलेपनात् ॥
कुष्ठ ज्वरश्च शोषश्च नेत्राभिष्यन्द एव च ।
औपसर्गिक रोगाश्च सङ्क्राम्यन्ति नरान्नरम् ॥

प्रसङ्गो मैथुन, औपसर्गिकरोगा पारददोषजनित पाप रोगा मेहादय ।

कुष्ठस्य चिकित्सा ।

सर्पिर्वातोत्तरे कुष्ठे वमन श्लेष्मसम्भवे ।
पत्ते विरेचन शस्त तथा शोणितमोक्षणम् ॥

दूर्व्वाभया सैन्धव चक्रमर्द्द
कुठेरका काञ्जिकतक्रपिष्टा ।
प्रलेपरूपा अपि वज्रमूला
कण्डूश्च दद्रुश्च निवारयन्ति ॥

सोमराजोभव चूर्ण शृङ्गवेरसमन्वितम् ।
उद्वर्त्तनमिद हन्ति कुष्ठमुग्र कृतास्पदम् ॥

अत्र शृङ्गवेरस्य रसो ग्राह्य ।

विडङ्गैडगजाकुष्ठनिशासिन्धूत्थ सर्षपै ।
धान्याम्लपिष्टैर्लेपोऽय दद्रुकुष्ठ विनाशन ॥

पर्णानि पिष्ट्वा चतुरङ्गुलस्य
तक्रेण पर्णान्यथ काकमाच्या ।
तैलाक्तगात्रस्य नरस्य कुष्ठा
न्युद्वर्त्तयेदश्वहनच्छदैश्च ॥

(द, १८)

कासमर्द्दकमूलञ्च काञ्जिकेन प्रपेषितम्।
दद्रु किटिम कुष्ठानि जयेदेतत् प्रलेपनात्॥
आरग्वधस्य पत्राणि चारनालेन पेषयेत्।
दद्रुञ्च किटिम सिध्म प्रलेपोऽयं विनाशयेत्॥
चक्राह्वय स्नुहीचीरभावित मूत्रसयुतम्।
रवितप्त हि किञ्चित्तु लेपन किटिमापहम॥
सचार गन्धक सम्यक् कटुतैलेन पेषयेत्।
सिध्म तल्लेपनात्तूर्ण नाश याति न सशय॥
कासमर्द्दस्य वीजानि मूलकस्य तथैव च।
गन्धाश्मचूर्णमिश्रानि सिध्मस्य परमौषधम॥
मन शिलाले मरिचञ्च तैल
मार्क पय कुष्ठहर प्रलेप॥
तैलमत्र सार्षपम्।
महिषोनवनीतेन सिन्दूर मरिच तथा।
पिष्ट्वा प्रलेपयेत् सम्यक् पामा कच्छु प्रशान्तये॥
स्नुक्काण्डशुषिरे दग्ध्वा गृहधूम ससैन्धवम।
अन्तर्धूम तैलयुक्त लेपाद्धन्ति विचर्च्चिकाम्॥
स्नुक्काण्डे सार्षप कल्क करीषानलपाचित।
लेपाद् विचर्च्चिका हन्ति रागवेग इव त्रपाम्॥
नारिकेलोदरे न्यस्तस्तण्डुल पूतिता गत।
लेपाद् विपादिका हन्ति चिरकालानुवन्धिनीम्॥
सैन्धव तिलपुष्पञ्च कटतैलञ्च गोजलम।
पक्त्वा लोहमये पात्रे सम्यग् भास्करतेजसा॥
अस्य लेपनमात्रेण याति नाश विपादिका॥

उन्मत्तकस्य वीजेन माणकक्षारवारिणा ।
कटुतैल विपक्वाव्य नाशयेत्तद् विपादिकाम् ॥
वायस्येडगजा कुष्ठकृष्णाभिर्गुडिका कृता ।
वस्तमूत्रेण सपिष्टा लेपाच्छ्वित्र विनाशिनी ॥
गजचित्रव्याघ्रचर्म्ममसीतैलविलेपनात् ।
श्वित्र नाश व्रजेत् किवा पूतिकीटविलेपनात ॥
कुडवो वाकुचीवीजाद्धरिताल पलान्वित ।
गवा मूत्रेण सपिष्ट प्रलेपाच्छ्वित्रनाशन ॥
धात्रीखदिरयो क्वाथमवल्गुजरजोऽन्वितम् ।
पीत्वा शङ्खेन्दुकुन्दाभ हन्ति श्वित्र न सशय ॥
गुञ्जाफलाग्निचूर्णन्तु लेपित श्वेतकुष्ठनुत् ।
शिलापामार्गभस्मापि द्वय लेपात् तदर्थकृत् ॥

शिला मन शिला, अपामार्गभस्म च द्वय तदर्थकृत, श्वेतकुष्ठापहमित्यर्थ ।

अवल्गुजवीजचूर्ण पीत्वा कोष्णेन वारिणा ।
भोजन सर्पिषा कार्य्य सर्व्वकुष्ठविनाशनम् ॥
गुडूचीस्वरस पीत सर्पिषा कुष्ठनाशन ॥
य खादेदभयारिष्टमरिष्टामलकानि वा ।
स जयेत् सर्व्वकुष्ठानि मासादूर्द्ध न सशय ॥

तीव्रेण कुष्ठेन परीतदेहो
य सोमराजी नियमेन खादेत् ।
सवत्सर कृष्णतिलद्वितीया
स सोमराजी वपुषातिशेते ॥

मञ्जिष्ठा वाकुची चक्रमर्द्दश्च पिचुमर्द्दक ।

हरीतकी हरिद्रा च धात्री वासा शतावरी ॥
बला नागबला यष्टिमधुक क्षुरकोऽपि च।
पटोलश्च लतोशीर गुडूची रक्तचन्दनम ॥
मञ्जिष्ठादिरय क्वाथ कुष्ठाना नाशन पर ।
वातरक्तस्य सहर्त्ता कण्डूमण्डल नाशन ॥
अमृतैरण्डवासाश्च सोमराजी हरीतकी।
क्वाथ एषा हरेत् कुष्ठ वातरक्तञ्च दारुणम ॥

कुष्ठघ्नी वटिका।

कुपीलु माषक चूर्ण तोलक कुष्ठवैरिण ।
आरग्वधस्य निम्बस्य सप्तपर्णस्य च द्रवै ॥
समर्द्य वटिका कुर्य्यान्माषार्द्धप्रमिता भिषक्।
कुष्ठघ्नी वटिका चैषा कुष्ठ चानिलशोणितम् ॥
शीतपित्तमुदर्दञ्च कोठञ्च निखिल व्रणम्।
मन्दत्वमनलस्यापि नाशयेदविकल्पत ॥

कुष्ठवैरिण चाउलमुग्रा इति प्रसिद्धस्य।

कुष्ठवैरिभव तैल कुष्ठघ्न चर्म्मदोषनुत् ॥
तन्मज्जना मधूत्थेन लिप्त गन्धाश्म वा तथा।
कुष्ठ सर्व्वविधञ्चैव नाश याति न सशय ॥
चूर्णोदकेन कुष्ठघ्नतैल कुष्ठहर परम् ॥
अमृताङ्कुरलौहञ्च महाभल्लातको गुड ।
रसमाणिक्यमपि च प्रदेयस्तालकेश्वर ॥
पञ्चतिक्तघृतञ्चैव कुष्ठेषु निखिलेषु हि ॥
मरिचाद्यानि तैलानि कुष्ठ घ्नन्ति सुदारुणम ॥
कुष्ठमाशु क्षय याति पञ्चगव्यनिषेवणात् ॥

कुष्ठाना विनिवृत्तौ च गोमूत्र परमौषधम् ।
अभयासहित तद्धि ध्रुव सिद्धिप्रद मतम् ॥

कुष्ठेषु पथ्यापथ्यनिर्णय ।

पुराणा शालयो मुद्गा आढक्यश्च मसूरका ।
यवा निम्बस्य पत्राणि पटोल बृहतीफलम् ॥
चक्रमर्द्दल मेषशृङ्गञ्च हिलमोचिका ।
कोषातकी च वेत्राग्र पक्क ताल पुनर्नवा ॥
गोखरोष्ट्राश्वमहिषीमूत्र सर्पिर्विरेचनम ।
निखिलानि च तिक्तानि कुष्ठरोगे हितानि हि ॥
पाप कर्म्म दिवानिद्रा विरुद्ध विषमाशनम् ।
व्यायामो वेगरोधश्च सूर्य्यरश्मिश्च मैथुनम् ॥
द्रवगुरुनवान्नाना भोजनञ्च गुडो दधि ।
दुग्ध मद्यमामिषञ्च मत्स्यो माषस्तिलस्तथा ॥
इक्षुरस्त मूलकञ्च विष्टम्भि च विदाहकृत् ।
एवविधानि चान्यानि कुष्ठ वर्ज्ज्यानि नित्यश ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
कुष्ठाधिकारस्त्रयस्त्रिंशोऽध्याय ।

# चतुस्त्रिंशोऽध्यायः ।

## अर्शोऽधिकार ।

पृथग्दोषै समस्तैश्च शोणितात् सहजानि च ।
अर्शांसि षट्प्रकाराणि विद्याद् गुदवलित्रये ॥

केचित् रुधिरस्यापि दोषत्व मन्यन्ते, तन्मतमाश्रित्याह शोणितादिति । सहजानि शरीरेण सह जातानि । सङ्ख्यामाह षट्प्रकाराणीति । गुदवलित्रये, सार्द्ध चतुरङ्गुल गुदस्य मानम । तस्यावयवभूतास्तिस्रो वलय शङ्खावर्त्तनिभा उपर्य्युपरि सन्ति । तासा नाम प्रवाहणी, विसर्ज्जनी, सवरणी चेति । तत्र गुदोष्ठ मर्द्धाङ्गुलमान तदूर्द्ध्वमङ्गुलमाना प्रथमा वलि, सार्द्धैकाङ्गुलमाना द्वितीया, तृतीया च तावती । उक्तञ्च—

अर्द्धाङ्गुलप्रमाणेन गुदोष्ठ परिचक्षते ।
सार्द्धैकाङ्गुलमानेन पृथगन्ये प्रकीर्त्तिते ॥

### अर्शसा सम्प्राप्ति स्वरूपञ्च ।

दोषास्त्वङ्मासमेदासि सदूष्य विविधाकृतीन् ।
मासाङ्कुरानपानादौ कुर्व्वन्त्यर्शांसि तान् जगु ॥

त्वङ्मासग्रहणेन त्वङ्मासाश्रित रक्तमपि गृह्यते ।
अपान गुदम, आदिशब्देन नासिकादीना ग्रहणम् ।

### वातार्शसा विप्रकृष्ट निदानम ।

कषाय कटुतिक्तानि रूक्षशीतलघूनि च ।
प्रमिताल्पाशन तीक्ष्ण मद्य मैथुनसेवनम् ॥

लङ्घनं देशकालौ च शीतौ व्यायामकर्म्म च ।
शोको वातातपस्पर्शो हेतुर्वातार्शसां मतः ॥

पित्तार्शसां विप्रकृष्टं निदानम् ।

कट्वम्ललवणोष्णानि व्यायामाग्न्यातपप्रभाः ।
देशकालावशिशिरौ क्रोधो मद्यमसूयनम् ॥
विदाहि तीक्ष्णमुष्णञ्च सर्व्वं पानान्नभेषजम् ।
पित्तोल्बणानां विज्ञेयः प्रकोपे हेतुरर्शसाम् ॥

कफार्शसां विप्रकृष्टं निदानम् ।

मधुरं स्निग्धशीतानि लवणाम्लगुरूणि च ।
अव्यायामो दिवास्वप्नः शय्यासनसुखे रतिः ॥
प्राग्वातसेवा शीतौ च देशकालावचिन्तनम् ।
श्लैष्मिकाणां समुद्दिष्टमेतत् कारणमर्शसाम् ॥

त्रिदोषजार्शसां विप्रकृष्टं निदानम् ।

सर्व्वो हेतुस्त्रिदोषाणां सहजैर्लक्षणैः समम् ॥

जनकत्वेन त्रयो दोषा येषां तानि त्रिदोषाणि, त्रिदोषार्शोलक्षणं श्वासरुजाविवर्न्धैः सहजार्शोभिः समम् ।

अर्शसां पूर्व्वरूपाणि ।

विष्टम्भोऽन्नस्य दौर्व्बल्यं कुक्षेराटोप एव च ।
कार्श्यमुद्गारबाहुल्यं सक्थिसादोऽल्पविट्कता ॥
ग्रहणीदोषपाण्ड्वर्त्तेराशङ्का चोदरस्य च ।
पूर्व्वरूपाणि निर्द्दिष्टान्यर्शसामभिवृत्तये ॥

वातार्शोलक्षणम् ।

गुदाङ्कुरा बह्वनिलाः शुष्काश्चिमिचिमान्विताः ।
म्लाना श्यावारुणाः स्तब्धा विशदाः परुषाः खराः ॥

मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटिताननाः।
बिम्बीखर्ज्जूरकर्कन्धुकार्पासीफलसन्निभाः॥
केचित् कदम्बपुष्पाभाः केचित् सिद्धार्थकोपमाः।
शिरःपार्श्वांसकट्यूरुवङ्क्षणाद्यधिकव्यथाः॥
क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः।
कासश्वासाग्निवैषम्य कर्णनादभ्रमावहाः॥
तैरार्त्तो ग्रथितं स्तोकं सशब्दं सप्रवाहिकम्।
रुक्फेनपिच्छानुगतं विबन्धमुपवेश्यति॥
कृष्णत्वङ्नखविण्मूत्रनेत्रवक्त्रश्च जायते।
गुल्मप्लीहोदराष्ठीलासम्भवस्तत एव च॥

पित्तार्शोलक्षणम्।

पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः।
तन्वस्रस्राविणो विस्रास्तनवो मृदवः श्लथाः॥
शुकजिह्वायकृत्खण्डजलौकावक्त्रसन्निभाः।
दाहपाकज्वरस्वेद तृष्णामूर्च्छारतिप्रदाः॥
सोष्माणो द्रवनीलोष्णपीतरक्तामवर्च्चसः।
यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः॥

कफार्शोलक्षणम।

श्लेष्मोल्वणा महामूला घना मन्दरुजः सिताः।
उत्सन्नोपचिताः स्निग्धाः स्तब्धवृत्तगुरुस्थिराः॥
पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः स्पर्शनप्रियाः।
करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः॥
वङ्क्षणानाहिनः पायुवस्तिनाभिविकर्षिणः।
सश्वासकासहृल्लासप्रसेकारुचिपीनसाः॥

मेहकृच्छ्रशिरोजाड्यशिशिरज्वरकारिण ।
क्लैब्याग्निमार्दवच्छर्द्दिरामप्रायविकारदा ॥
वसाभसकफप्राज्यपुरीषा सप्रवाहिका ।
न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादय ॥

सान्निपातिकार्शसा सहजार्शसाञ्च लक्षणम् ।

सर्व्वं सर्व्वात्मकान्याहुर्लक्षणै सहजानि च ॥

द्वन्द्वजार्शसा लक्षणम् ।

हेतुलक्षणससर्गाद विद्याद् द्वन्द्वोल्वणानि च ॥

द्वन्द्वजान्यर्शांसि प्रकृतिसमसमवायारब्धत्वात् न पृथग् गणितानि ।

रक्तार्शोलक्षणम् ।

रक्तोल्वणा गुदे कीला पित्ताकृतिसमन्विता ।
वटप्ररोहसदृशा गुञ्जाविद्रुमसन्निभा ॥
तेऽत्यर्थं दुष्टमुष्णञ्च गाढविट्कप्रपीडिता ।
स्रवन्ति सहसा रक्त तस्य चातिप्रवृत्तित ॥
भेकाभ पीड्यते दु खै शोणितक्षयसम्भवै ।
हीनवर्णबलोत्साहो हतौजा कलुषेन्द्रिय ॥
विट्श्याव कठिन रूक्षमधोवायुर्न वर्त्तते ॥
तनु चारुणवर्णञ्च फेनिलञ्चासृगर्शसाम ।
कट्यूरुगुदशूलञ्च दौर्ब्बल्य यदि चाधिकम ॥
तत्रानुवन्धो वातस्य हेतुर्यदि च रूक्षणम् ॥
शिथिल श्वेतपीतञ्च विटस्निग्ध गुरु शीतलम ।
यद्यर्शसा घनञ्चासृक् तन्तुमत् पाण्डु पिच्छिलम ॥
गुद सपिच्छ स्तिमित गुरु स्निग्धञ्च कारणम् ।

श्लेष्मानुबन्धो विज्ञेयस्तत्र रक्तार्शसां बुधैः ॥
पञ्चात्मा मारुतः पित्तं कफो गुदवलीत्रयम् ।
सर्व्व एव प्रकुप्यन्ति गुदजानां समुद्भवे ॥
तस्मादर्शांसि दुःखानि बहुव्याधिकराणि च ।
सर्व्वदेहोपतापीनि प्रायः कृच्छ्रतमानि च ॥

गुदवलीत्रये इति च पाठः ।

### सुखसाध्यार्शोलक्षणम् ।

बाह्यायान्तु बलौ जातान्येकदोषोल्बणानि च ।
अर्शांसि सुखसाध्यानि न चिरोत्पतितानि च ॥

### कष्टसाध्यार्शोलक्षणम ।

द्वन्द्वजानि द्वितीयायां बलौ यान्याश्रितानि च ।
कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥

### असाध्यार्शोलक्षणम ।

सहजानि त्रिदोषाणि यानि चाभ्यन्तरां बलिम् ।
जायन्तेऽर्शांसि संश्रित्य तान्यसाध्यानि निर्द्दिशेत् ॥
शेषत्वादायुषस्तानि चतुष्पादसमन्विते ।
याप्यन्ते दीप्तकायाग्ने प्रत्याख्येयान्यतोऽन्यथा ॥
हस्ते पादे मुखे नाभ्यां गुदे वृषणयोस्तथा ।
शोथो हृत्पार्श्वशूलञ्च यस्यासाध्योऽर्शसो हि सः ॥
हृत्पार्श्वशूलं सम्मोहश्छर्द्दिरङ्गस्य रुग्ज्वरः ।
तृष्णा गुदस्य पाकश्च निहन्युर्गुदजातुरम् ॥
तृष्णारोचकशूलार्त्तमतिप्रस्रुतशोणितम् ।
शोथातिसारसंयुक्तमर्शांसि क्षपयन्ति हि ॥

मेढ्रादिष्वपि वक्ष्यन्ते यथास्व नाभिजानि तु ।
गण्डूपदास्यरूपाणि पिच्छिलानि मृदूनि च ॥

यथास्व यथात्मीयलक्षणम ।

चर्म्मकोलस्य सम्प्राप्तिर्लक्षणञ्च ।

व्यानो गृहीत्वा श्लेष्माण करोत्यर्शस्त्वचो वहि ।
कोलोपम स्थिरखर चर्म्मकीलन्तु तद्विदु ॥
वातेन तोदपारुष्य पित्तादसितरक्तता ।
श्लेष्मणा स्निग्धता तस्य ग्रथितत्व सवर्णता ॥

अर्शसा चिकित्सा ।

अर्शसा साधनोपायश्चतुर्धा परिकीर्त्तित ।
भेषजक्षार शस्त्राग्निसाध्यत्वादाद्य उच्यते ॥
यद् वायोरानुलोम्याय यदग्निबलवृद्धये ।
अनुपानौषधद्रव्य तत् सेव्य नित्यमर्शसै ॥
शुष्कार्शसा प्रलेपादि क्रिया तीक्ष्णा विधीयते ।
स्राविणा रक्तमालोक्य क्रिया कार्य्यास्रपैत्तिकी ॥
स्नुकक्षीर रजनीयुक्त लेपाद् दुर्नामनाशनम् ।
कोषातकीरजोघर्षान्निपतन्ति गुदोद्भवा ॥
अर्कक्षीर स्नुहीक्षीर तिक्तातुम्बग्राश्च पल्लवा ।
करञ्जो वस्तमूत्रञ्च लेपन श्रेष्ठमर्शसाम ॥
अर्शोघ्नो गुदजा वर्त्तिर्गुडघोषाफलोद्भवा ।
ज्योत्स्निकामूलकल्केन लेपो रक्तार्शसा हित ।
तुम्बीवीज सौद्भिदन्तु काञ्जीपिष्ट गुडीत्रयम् ।
अर्शोहर गुदस्थ स्याद्दधि माहिषमश्नत ॥
महावोधिप्रदेशस्य पथ्या कोषातकीरज ।

सफेन लेपतो हन्ति लिङ्गवर्त्ति न सशय ॥
अपामार्गाङ्घ्रिज क्षारो हरितालेन सयुत ।
लेपनाल्लिङ्गसम्भूतमर्शो नाशयति ध्रुवम ॥
वातातिसारवद् भिन्नवर्च्चास्यर्शास्युपाचरेत् ।
उदावर्त्तविधानेन गाढविट्कानि चासकृत् ॥
विड्विवन्धे हित तक्र यमानीविड्सयुतम् ।
वातश्लेष्मार्शसा तक्रात् पर नास्तीह भेषजम ॥
तत् प्रयोज्य यथादोष सस्नेह रूक्षमेव वा ॥
न विरोहन्ति गुदजा पुनस्तक्रसमाहता ॥
हरीतकी तिलान् धात्री मृद्वीका मधुक तथा ।
परूषकस्य तोयेन पिबेदर्शोनिवृत्तये ॥
सगुडा पिप्पलीयुक्तामभया घृतभर्ज्जिताम् ।
त्रिवृद्दन्तीयुता वापि भक्षयेदानुलोमिकीम् ॥
तिलारुष्करसयोग भक्षयेदग्निवर्द्धनम् ।
कुष्ठरोगहर श्रेष्ठमर्शसा नाशन परम् ॥
मृल्लिप्त शौरण कन्द पक्काग्नौ पुटपाकवत् ।
अद्यात् सतैललवण दुर्नाम्ना विनिवृत्तये ॥
असितानां तिलानाञ्च प्रकुञ्च शीतवार्य्यनु ।
खादतोऽर्शांसि नश्यन्ति द्विजदार्ढ्याङ्गपुष्टिदम् ॥
भावित रजनीचूर्णै स्नुहीक्षीरे पुन पुन ।
वन्धनात् सुदृढ सूत्र छिनत्त्यर्शो न सशय ॥
रक्तार्शसामुपेक्षेत रक्तमादौ स्रवद् भिषक् ।
दुष्टास्रेऽनिगृहीते तु शूलानाहावसृग्गदा ॥
शक्राह्वाथ सविश्वो वा किंवा विल्वशलाटव ।

योज्या रक्तार्शसैस्तद्वज्जगोत्स्निकामूललेपनम ॥
नवनीततिलाभ्यासात् केशरनवनीतशर्कराभ्यासात् ।
दधिसरमथिताभ्यासाद् गुदजा साम्यन्ति रक्तवहा ॥
समङ्गोत्पलमोचाह्वतिरीटतिलचन्दनै ।
छागचीर प्रयोक्तव्य गुदजे शोणितापहम् ॥
कोमल नलिणीपत्र पिष्ट्वा खादेत् सशर्करम् ।
प्रातराज पय पोत्वा रक्तस्रावाद् विमुच्यते ॥

सशर्कर कृष्णतिलस्य कल्क
वस्त्रोपयोभि पिबति प्रभाते
सद्यो हरत्येव गुदोत्थरक्त
योगोऽयमुक्तो गिरिशेन साचात ॥

कौटज कल्कमादाय पिष्ट्वा तक्रेण बुद्धिमान ।
पोत्वा रक्तार्शसो रक्तस्रुतिमाशु नियच्छति ॥
छागेन पयसा कल्क शतमूलीसमुद्भवम् ।
पिबेद् रक्तार्शसस्तद्वत् ससित दाडिम रसम् ॥
मोदको नागराद्याख्यो शौरणो मोदकस्तथा ।
बाहुशालगुडश्चन्द्रप्रभाद्या गुडिका शुभा ।
प्राणदा गुडिका लेह कौटजो रक्तवारण ।
नित्योदितो रसो मायाश्रणाद्यश्च लौहकम् ॥
लौहमग्निमुख नाम सैन्धवाद्यन्तु चूर्णकम् ।
इत्याद्यानि प्रयोज्यानि दुर्नाम्ना विनिवृत्तये ॥

अथ पथ्यापथ्यानि ।

वातानुलोमन यद्द यत् सर वह्निप्रदीपनम् ।
सुजर पुष्टिद तत् तदन्नपान हित मतम ॥

वेगावरोधं स्त्रीपृष्ठयानमुत्कटमासनम् ।
यथास्व दोषलच्चाद्यमर्शस परिवर्ज्जयेत ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थान
अष्टाधिकविंशतितमोऽध्याय ।

---

## पञ्चविंशोऽध्याय ।

---

### भगन्दरविकार ।

#### भगन्दरस्य पूर्व्वरूप स्वरूपञ्च ।

कटीकपाल निस्तोद दाह कण्डू रुजादय ।
भवन्ति पूर्व्वरूपाणि भविष्यति भगन्दरे ॥
गुदस्य द्व्यङ्गुले चेत्रे पार्श्वत पिडकार्त्तिकृत् ।
भिन्नो भगन्दरो ज्ञेय स च पञ्चविधो मत ॥

कटीकपालमत्र कटीफलक, आर्त्तिकृत् पीडाकृत्
पञ्चविध वातिक पैत्तिक श्लैष्मिक-सान्निपातिक शल्यजभेद ।

वातिक शतपोनकसञ्ज्ञो भगन्दर ।
कषायरुचैरतिकोपितोऽनिल
स्त्वपानदेशे पिडका करोति याम् ।
उपेक्षणात् पाकमुपैति दारुण
रुजा च भिन्नारुणफेनवाहिनी ।

ततागमो मूत्र पुरीषरेतसा
व्रणैरनेकै शतपोनक वदेत ॥

रुजादारुण अतिदारुणरुक् व्रणैरनेकै सूक्ष्ममुखै, शतपोनकस्थानलो तद्वत् ।

पैत्तिकमुष्ट्रग्रीवसञ्ज्ञमाह ।

प्रक्लोप पित्तमतिप्रकोपित
करोति रक्ता पिडका गुदाश्रिताम ।
तदाशुपाकाह्निमपूतिवाहिनी
भगन्दर तूष्ट्रशिरोधर वदेत् ॥

आशुपाकाह्निमपूतिवाहिनी शीघ्रपाकामुष्णादुर्गन्धवाहिनीञ्च । तदा भगन्दरमुष्ट्रशिरोधर वदेत् । उष्ट्रग्रीवसञ्ज्ञा च पिडकावस्थाया वक्राकारत्वेन ।

श्लैष्मिक परिस्राविसञ्ज्ञमाह ।

कण्डूयनो घनस्रावी कठिनो मन्दवेदन ।
श्वेतावभास कफज परिस्रावी भगन्दर ॥

कठिन पिडकावस्थायाम । परिस्रावी निरन्तरस्रावशील ।

सान्निपातिक शम्बूकावर्त्तसञ्ज्ञमाह ।

बहुवर्णरुजास्रावा पिडका गोस्तनोपमा ।
शम्बूकावर्त्तवन्नाडो शम्बूकावर्त्तको मत ॥

शल्यजमुन्मार्गिसञ्ज्ञमाह ।

क्षताद् गति पायुगता विवर्द्धते
ह्युपेक्षणात् स्यु क्रिमयो विदार्य्य ते ॥
प्रकुर्व्वत मार्गमनेकधा मुखै-
र्व्रणैस्तमुन्मार्गि भगन्दर वदेत ॥

एतस्य तिर्य्यक्कृतमार्गं पुरीषादिनिगमनादुन्मार्गि संज्ञा।

तत्वविशेषोक्तमर्शोभगन्दरमाह।

कफपित्ते तु पूर्व्वोत्थे दुर्नामाश्रित्य कुप्यत।
अर्शोमूले तत शोथ कण्डूदाहार्त्तिमान् भवेत्॥
स शीघ्र पक्वभिन्नोऽस्य क्लेदयन् मूत्रमर्शस।
स्रवत्यजस्रगतिभिरयमर्शोभगन्दर॥

अयमन्यतमस्मिन् शतपोनकादीना दोषलक्षणदर्शना दन्तर्भाव्य।

घोरा साधयितु दुखा सर्व्वं एव भगन्दरा।
तेष्वसाध्यस्त्रिदोषोत्थ क्षतजश्च विशेषत॥
वातमूत्रपुरीषाणि क्रिमय शुक्रमेव च।
भगन्दरात स्रवन्तस्तु नाशयन्ति तमातुरम॥
भगन्दरात् स्रवन्त इत्यस्मादमी विशेषा इति शेष।

भगन्दरस्य चिकित्सा।

गुदस्य श्वयथु दृष्ट्वा विशोष्य शोधयेत् तत।
रक्तावसेचन कार्य्यं यथा पाक न गच्छति॥

उपवासादिना शोषयेत्, वमनविरेचनादिना शोधयेत रक्तावसेचन जलौकादिभि।

वटपत्रेष्टकाशुण्ठीगुडूच्य सपुनर्नवा।
सुपिष्टा पिडकावस्थे लेप शस्तो भगन्दर॥
स्नुह्यर्कदुग्धदार्व्वीभिर्वर्त्तिं कृत्वा विचक्षण।
भगन्दरगति ज्ञात्वा पूरयेत ता प्रयत्नत॥
एषा सर्व्वशरीरस्था नाडी हन्यान्न संशय॥

तिला ज्योतिष्मती कुष्ठ लाङ्गली गिरिकर्णिका ।
शताह्वा त्रिवृता दन्त्य शोधनाय भगन्दरे ॥

तिलाभया लोध्रमरिष्टपत्र
निशे वचा लोध्रमगारधूमम ।
भगन्दरे नाड्युपदशयोश्च
दुष्टव्रणे शोधनरोपणाय ॥

समभागपिष्ट लेपद्वय दद्यात् ।

त्रिफलारससपिष्ट विडालास्थिप्रलेपनम् ।
भगन्दर निहन्त्याशु दुष्टव्रणहर परम् ॥
खदिराम्बुरतो भूत्वा कषाय त्रैफल पिबेत् ।
महिषाक्षविडङ्गाना भगन्दरविनाशनम् ॥
जम्बूकमास भुञ्जीत प्रकारैर्व्यञ्जनादिभि ।
अजीर्णवर्जी मासेन मुच्यते तु भगन्दरात् ॥
नवकार्षिकनामा च सप्तविंशतिकस्तथा ।
गुग्गुलु सम्प्रयोक्तव्यो रसश्चित्रविभाण्डक ॥
तैल विष्यन्दन नाम सैन्धवाद्यनिशाद्यके ।
इत्याद्यानि प्रयोज्यानि भेषजानि भगन्दरे ॥

भगन्दरे पथ्यापथ्यव्यवस्था ।

सर्षप शालिमुद्गौ च विलेपी जाङ्गलो रस ।
पटोल शिग्रु वेत्राग्र पत्तूर बालमूलकम् ॥
तिलसर्षपयोस्तैल तिक्तवर्गो घृत मधु ।
एवविधानि चान्यानि भगन्दरहितानि हि ॥
विरुद्धान्यन्नपानानि विषमाशनमातपम् ।

व्यायाम मैथुन युद्ध पृष्ठयान गुरूणि च ॥
संवत्सर परिहरेदुपरूढव्रणो नर ॥

इत्यायुर्व्वेदविज्ञान निदानचिकित्सितस्थान
भगन्दराधिकार पञ्चत्रिंशोऽध्याय ।

---

## षट्त्रिंशोऽध्याय ।

---

### व्रणशोथाधिकार ।

#### व्रणशोथस्य संख्या सामान्यरूपञ्च ।

पृथक् समस्तदोषोत्था रक्तजागन्तुजो तथा ।
व्रणशोथा षडेते स्यु संयुक्ता शोथलक्षणै ॥

#### व्रणशोथस्य विशिष्ट रूपम् ।

विषम पच्यते वातात् पित्तोत्थश्चाचिराच्चिरम् ।
कफज पित्तवच्छोथो रक्तागन्तुसमुद्भवो ॥

#### अपक्कस्य व्रणशोथस्य लक्षणम ।

मन्दोष्मताल्पशोथत्व काठिन्य त्वक्सवर्णता ।
मन्दवेदनता चापि शोथस्यामस्य लक्षणम ॥

#### पच्यमानस्य लक्षणम् ।

दह्यते दहनेनेव क्षारेणेव च पच्यते ।
पिपीलिकागणेनेव दश्यते छिद्यते तथा ॥

भिद्यते चैव शस्त्रेण दण्डेनेव च ताड्यते ।
पीड्यते पाणिनेवान्त सूचीभिरिव तुद्यते ॥
मोषचोषो विवर्ण स्यादङ्गल्येवावघट्यते ।
आसने शयने स्थाने शान्ति वृश्चिकविद्धवत् ॥
न गच्छेदातत शोथो भवेदाध्मातवस्तिवत् ।
ज्वरस्तृष्णारुचिश्चैतत् पच्यमानस्य लक्षणम् ।

पक्वस्य लक्षणम ।

वेदनोपशम शोथो लोहितोऽल्पो न चोन्नत ।
प्रादुर्भावो वलीनाञ्च तोद कण्डूर्मुहुर्मुहु ॥
उपद्रवाणा प्रशमो निम्नता स्फुटन त्वचाम् ।
वस्ताविवाम्बुसञ्चार स्याच्छोथेऽङ्गुलिपीडिते ॥
पूयश्च पीडयेदेकमन्तमन्ते च पीडिते ।
वुभुक्षा व्रणशोथस्य भवेत् पक्वस्य लक्षणम् ॥

नर्त्तेऽनिलाद रुड् न विना च पित्त
पाक कफञ्चापि विना न पूय ।
तस्माद्धि सर्व्वे परिपाककाले
पचन्ति शोथास्त्रिभिरेव दोषै ॥

पचन्ति पाक प्राप्नुवन्ति ।

कक्ष समाश्रित्य यथैव वह्नि
र्वायोरित सदहति प्रसह्य ।
तथैव पूयो ह्यविनि सृतो हि
मास शिरा स्नायुमपीह खादेत् ॥

कक्ष तृणवनम

आम विदह्यमानञ्च सम्यक् पक्क ञ्च यो भिषक्।
जानीयात् स भवेद्वैद्य शेषास्तस्करवृत्तय ॥
यश्छिनत्त्याममज्ञानाद् यो वा पक्कमुपेक्षते।
श्वपचाविवमन्तव्यौ तावनिश्चितकारिणौ ॥

व्रणशोथस्य चिकित्सा ।

आदौ विम्लापन कुर्य्यात् द्वितीयमवसेचनम ।
तृतीयमुपनाहन्तु चतुर्थौ पाटनक्रियाम् ॥
पञ्चम शोधनञ्चापि षष्ठ वै रोपण तथा ।
एते क्रमा व्रणस्योक्ता सप्तमो वैकृतापह ॥

विम्लापयतीति विम्लापन कर्त्तर्य्यनट् एतेन लङ्घनस्वेद प्रलेपादोना ग्रहणम् ।

व्रणे श्वयथुरायासात् स च रागश्च जागरात्।
तौ च रुक् च दिवास्वप्नात् ताश्च मृत्युश्च मैथुनात् ॥
धुस्तूरमूल सलवणमुष्ण व्रणस्थित्यारम्भे ।
दत्त लेपान्नियत व्रणशोथ हरति बहुदुष्टम् ॥
कल्क काञ्जिकसपिष्ट स्निग्धशाखोटकत्वच ।
सुपर्ण इव नागाना वातशोथविनाशन ॥
दूर्व्वा च नलमूलञ्च मधुक चन्दन तथा।
शीतलाश्च गणा सर्व्वे प्रलेप पित्तशोथहा ॥
न्यग्रोधोडुम्बराश्वत्थप्लक्षवेतसवल्कलै ।
ससर्पिष्कै प्रलेप स्याच्छोथनिर्व्वापण पर ॥
अश्वगन्धा तथा रास्ना वृश्चिकाली महौषधम्।
धुस्तूरमूलमित्येषा प्रलेप श्लेष्मशोथहा ॥
न रात्रौ लेपन दद्याद् दत्तञ्च पतित तथा।

न च पर्य्युषित शुष्यमाण नैवावधारयेत् ॥
शुष्यमाणमुपेक्षेत प्रदेह पीडन प्रति ।
न चापि मुखमालिम्पेत् तेन दोष प्रसिच्यते ॥
वेदनोपशमार्थाय तथा पाकशमाय च ।
अचिरोत्पतिते शोथे शोणितस्रावण हितम ॥
एकतस्तु क्रिया सर्व्वा रक्तमोक्षणमेकत ।
रक्त हि वेदनामूल तच्चेन्नास्ति न चास्ति रुक् ॥
स चेदेवमुपक्रान्त शोथो न प्रशम व्रजेत् ।
तस्योपनाहै पक्वस्य पाटन हितमुच्यते ॥
शणमूलकशिग्रूणा फलानि तिलसर्षपा ।
अतसी शक्तवश्चैषामुष्णाद्रव्यञ्च पाचनम ॥

अन्यच्चोष्ण द्रव्य यवगोधूमधान्यादिक व्रणशोथस्य पाचन भवति ।

तैलेन सर्पिषा वापि ताभ्या वा शक्तुपिण्डिका ।
सुखोष्णा शोथपाकार्थमुपनाहे प्रशस्यते ॥
सतिला सातसीवीजा दध्यम्ला शक्तुपिण्डिका ।
सकिण्वकुष्ठलवणा शस्ता स्यादुपनाहने ॥
रोगे व्यधनसाध्ये तु यदादेश प्रमाणत ॥
शस्त्र विधाय मतिमान् स्रावयेत् कुशलो भिषक ॥
बालवृद्धासहक्षीणभीरूणा योषितामपि ।
व्रणेषु मर्म्मजातेषु भेदनद्रव्यलेपनम् ॥
चिरविल्वोऽग्निको दन्ती चित्रको हयमारक ।
कपोत कङ्क गृध्राणा पुरीषाणि च दारणम् ।
क्षारद्रव्याणि वा यानि क्षारो वा दारण स्मृत ॥

हस्तिदन्तो जले पिष्टो विन्दुमात्र प्रलेपित ।
अत्यन्तकठिने शोथे गोदन्तो भेदन पर ॥
द्रव्याणा पिच्छिलानान्तु त्वङ्मूलानि प्रपीडनम
यवगोधूम माषाणा चूर्णानि च समासत ॥
व्रणस्य तु विशुद्धस्य क्वाथ शुद्धिकर पर ।
पटोलनिम्बपत्रोत्थ सर्व्वत्रैव प्रयुज्यते ॥
वातिके दशमूलाना क्षीरिणा पैत्तिके व्रणे ।
आरग्वधादि कफजे कषाय शोधने हित ॥
तिलसैन्धवयष्ट्याह्व त्रिवृत् निम्बनिशायुगे ।
सुपिष्टैर्घृतसम्मिश्रै प्रलेपो व्रणशोधन ॥
एक वा शारिवामूल सर्व्वव्रणविशोधनम् ॥
अपेतपूतिमासाना मासस्थानामरोहताम ।
कल्क संरोपण कार्य्यस्तिलजो मधुसयुत ॥
अश्वगन्धा रुहा लोध्र कट्फल मधुयष्टिका ।
समङ्गा धातकीपुष्प परम व्रणरोपणम् ॥
मन शिला समञ्जिष्ठा सलाक्षा रजनीद्वयम् ।
प्रलेप सघृतक्षौद्रस्त्वच सावर्ण्यकृत् पर ॥
त्रिफला गुग्गुलुश्चैव सप्ताङ्गाख्यश्च गुग्गुलु ।
तैल जात्यादिक नाम व्रणराक्षससज्ञकम ॥
तैल घृतञ्च गौराद्य विडङ्गारिष्ट एव च ।
भेषजान्येवमादीनि प्रयोज्यानि व्रणे सदा ॥

अथ पथ्यापथ्यानि ।

जीर्णशाल्योदन स्निग्ध जीवन्ती च पुनर्नवा ।
पटोल मुद्गयूषश्च हितान्येतानि सन्ततम ॥

अम्लं दधि च शाकञ्च मासमानूपमौदकम् ।
क्षीरं गुरूणि चाम्लानि व्रणी च परिवर्ज्जयेत् ।

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
व्रणशोथाधिकारः षट्त्रिंशोऽध्यायः ।

---

## सप्तत्रिंशोऽध्यायः ।

शारीरव्रणाधिकारः ।

द्विधा व्रणः परिज्ञेयो दोषजागन्तुभेदतः ।
दोषजो दुष्टदोषैः स्यादन्यः शस्त्रादिसम्भवः ।
क्षतमीर्म्ममरुश्चापि तत्पर्य्याया उदीरिता ॥

तत्र वातिकस्य लक्षणम् ।

स्तब्धः कठिनसंस्पर्शो मन्दस्रावो महारुजः ।
तुद्यते स्फुरति श्यावो व्रणो मारुतसम्भवः ॥

स्तब्धः अचलः ।

पैत्तिकस्य लक्षणम् ।

तृष्णा मोह ज्वर क्लेद दाहदुःखावदारणैः ।
व्रणं पित्तकृतं विद्यात् स्रावैर्गन्धैश्च पूतिकैः ॥

क्लेदः आर्द्रता । दुःखं व्यथारूपम । अवदारणम् । व्रणे
विदारणवत् पीडा ।

श्लैष्मिकस्य लक्षणम्।

बहुपिच्छो गुरुः स्निग्धः स्तिमितो मन्दवेदनः।
पाण्डुवर्णोऽल्पसङ्क्लेदश्चिरपाकी कफव्रणः॥

बहुपिच्छः बहुपिच्छिलः। अल्पसङ्क्लेदः ईषदार्द्रः।

रौधिरस्य द्वन्द्वजस्य सान्निपातिकस्य च लक्षणम्।

रक्तो रक्तस्रुती रक्तात् द्वितिजः स्यात् तदन्वयः।

तदन्वयः द्वित्रिदोषलिङ्गसम्बन्धः।

शुद्धव्रणस्य लक्षणम्।

जिह्वातलाभोऽतिमृदुः श्लक्ष्णः स्निग्धोऽल्पवेदनः।
सुव्यवस्थो निरास्रावः शुद्धव्रण इति स्मृतः॥

जिह्वातलाभः तलशब्दोऽत्र स्वरूपार्थः। तेन जिह्वावद्रक्तः। सुव्यवस्थः उच्छूनतारहितः।

दुष्टव्रणस्य लक्षणम्।

पूतिपूयातिदुष्टासृक्स्राव्युत्सङ्गी चिरस्थितिः।
दुष्टव्रणोऽतिगन्धादिः शुद्धलिङ्गविपर्य्ययः॥

उत्सङ्गी कोटरवान्। अतिगन्धादिः आदिशब्देन स्राववेदना विवर्णतादयः सङ्गृह्यन्ते।

सरोहद्व्रणस्य लक्षणम्।

कपोतवर्णप्रतिमा यस्यान्ताः क्लेदवर्जिताः।
स्थिराश्च पिडकावन्तो रोहतीति तमादिशेत्॥

कपोतवर्णप्रतिमाः पाण्डुधूसराः। स्थिराः विदीर्णतारहिताः। पिडकावन्तः सरोहणार्थाः य मांसाङ्कुरास्तद्युक्ताः।

सरूढव्रणस्य लक्षणम् ।

रूढवर्त्मानमग्रन्थिमशूलमरुज व्रणम् ।
त्वक्सवर्ण समतल सम्यग्रूढ विनिर्द्दिशेत ॥

रूढवर्त्मान सरूढस्रावमार्गम । समतलमनिम्नम ।

सुखसाध्यत्वादिकमाह ।

त्वङ्मासज सुखे देशे तरुणस्यानुपद्रव ।
धीमतोऽभिनव काले सुखे साध्य सुख व्रण ॥

सुखे देशे मर्म्मरहितेऽङ्गे । अनुपद्रव ज्वरतृष्णाश्वास कासारोचकादिरहित । धीमत पथ्यसेविन । सुखे काले हेमन्ते शिशिरे च ।

गुणैरन्यतरैर्यैर्विहीन कृच्छ्रो व्रण स्मृत ।
सर्व्वैर्विहीनो विज्ञेयस्त्वसाध्यो निरुपक्रम ॥

एभिस्त्वङ्मासजत्वादिभि । निरुपक्रम चिरमुपेक्षित । निरुपक्रम इत्यत्र भूर्य्युपद्रव इति पाठान्तरम ।

वसा मेदोऽथ मज्जान मस्तुलुङ्गञ्च य स्रवेत् ।
आगन्तुजो व्रण सिध्येन्न सिध्येद्दोषसम्भव ॥

मस्तुलुङ्ग मस्तकाभ्यन्तरस्नेह ।

कुष्ठिना विषजुष्टाना शोषिणा मधुमेहिनाम ।
व्रणा कृच्छ्रेण सिध्यन्ति येषाञ्चापि व्रणे व्रणा ॥

अरिष्टलक्षणमाह ।

मद्यागुर्व्वाज्य सुमन पद्म चन्दनचम्पकै ।
सगन्धा दिव्यगन्धाश्च मुमुर्षूणा व्रणा स्मृता ॥

सुमना जाती । दिव्यगन्धा पारिजातादिगन्धा । सगन्धा समानगन्धा ।

ये च मर्म्मसु सम्भूता भवन्त्यत्यर्थवेदना ॥
दह्यन्ते चान्तरत्यर्थं वहिः शीतास्च ये व्रणा ।
दह्यन्ते वहिरत्यर्थं भवन्त्यन्तश्च शीतला ॥
प्राणमांसक्षयश्वासकासारोचकपीडिता ।
प्रवृद्धपूयरुधिरा व्रणा ये चापि मर्म्मसु ॥
क्रियाभिः सम्यगारब्धा न सिध्यन्ति च ये व्रणा ।
वर्ज्जयेदपि तान् वैद्यः संरक्षन्नात्मनो यशः ॥

व्रणस्य चिकित्सा ।

व्रणेषु निखिलेष्वादौ कोष्णसर्पिर्निषेचनम् ।
विदधीत सततं वैद्यस्तेन रुक् [illegible] ॥
क्षालनं नियतं कार्य्यं हि [illegible] ।
त्रिफलाया कषायेण [illegible] वा ॥
मृदङ्गारजचूर्णेन [illegible] ।
भस्मना यवजेनापि [illegible] वा ॥
सर्पिषा परिदग्धेन तैलेन तिलजेन वा ।
व्रणं सलेपयेन्नित्यं स तेनाशु प्रशाम्यति ॥
व्रणं नानावृतं रक्षेत् कदाचिदपि बुद्धिमान् ।
वाह्यानिलसमायोगाद्विकृतिर्भयसी भवेत् ॥
यथा कीटपतङ्गाद्यैर्व्याहतं न भवेद्व्रणं ।
प्राप्नुयान्नाभिघातञ्च सावधानस्तथा भवेत् ॥
शारिवादिगणक्काथ सर्पिष्को व्रणप्रणुत् ॥
अभया त्रिवृता शुण्ठीमेलानन्द निशायुगम् ।
लवणपत्रञ्च श्यामा च शारिवा [illegible] नीलिनीम् ॥

नागकेशरमेरण्डोञ्च विडङ्ग गन्धपिप्पलीम् ।
क्वाथयित्वा पिवेत्तोयमोर्म्मी लवणसयुतम् ॥
ईर्म्मी व्रणो ।

व्रणहरो रस ।

रस गन्ध विष वह्नि लौहमभ्र सम समम ।
सप्तधा पाथतोयेन काञ्चनाराम्भसा त्रिधा ॥
भावयित्वा वटा कुर्य्याद्गुञ्जिकाप्रमिता भिषक् ।
रसो व्रणहरा नाम व्रणान् सर्व्वान् हरेदसो ॥

व्रणे पथ्यापथ्यानि ।

शोथे यान्यन्नपानानि भेषजानि हितानि च ।
तानि सर्व्वाणि जानीयाद्व्रणे ह्यु शर्म्मणि सदा ॥
शोथे शोथव्रणे ।

---

## सद्योव्रणाधिकार: ।

आगन्तुजव्रणस्य निदानम ।

नानाधारामुखै शस्त्रैर्नानास्थाननिपातितै ।
भवन्ति नानाकृतयो व्रणास्तांस्तान् निबोध मे ॥

नाना धारामुखा नि येषा ते शस्त्रै अर्द्धचन्द्र खड्ग-भल्ल कुन्त शूल शरादिभि । स्थानविशेषोऽपि शस्त्रनिपाततुल्यत्वेन आकृतिविशेषे हेतुरित्यत उक्त नानास्थाननिपातितैरिति । नानाकृतय षडाकृतय । आगन्तुजव्रण सद्योव्रण इति नाम्ना च उच्यते ।

तस्याकृतय ।

छिन्न भिन्न तथा विद्ध क्षत पिच्चितमेव च ।
घृष्टमाहुस्तथा षष्ठ तेषा वक्ष्यामि लक्षणम् ॥

छिन्नस्य लक्षणम ।

तिर्य्यक्छिन्नऋजुर्वापि यो व्रणस्त्वायतो भवेत् ।
गात्रस्य पातन तद्धि च्छिन्नमित्यभिधीयते ॥

यो व्रण तिर्य्यक्छिन्न खड्गादिकृततिर्य्यक्छेदयुक्त. । ऋजुर्वापि अथवा खड्गादिकृत अवक्रो व्रण । आयतो दीर्घ । आयत इति तिर्य्यक्छिन्नस्य ऋजोश्च विशेषणम् । गात्रस्य पातन गात्रस्यैकदेशस्य छेदेन पृथक्करण वा छिन्नमित्यभिधीयते ।

भिन्नस्य लक्षणम् ।

शक्ति कुन्तेषु खड्गाग्र विषाणैराशयो हत ।
यत् किञ्चित् प्रस्रवेत् तद्धि भिन्नमित्यभिधीयते ॥

शक्तिकुन्तेषुखड्गाग्रेत्यत्र शक्ति इन्तेषु खड्गाग्रेत्यादि पाठान्तरम । आशय कोष्ठ ।

स्थानान्यामाग्निपक्वाना मूत्रस्य रुधिरस्य च ।
हृदुण्डुक फुप्फुसश्च कोष्ठ इत्यभिधीयते ॥
तस्मिन् भिन्ने रक्तपूर्णे ज्वरो दाहश्च जायते ।
मूत्रमार्गगुदास्येभ्यो रक्त घ्राणाच्च गच्छति ॥
मूर्च्छा श्वासस्तृषाध्मानमभक्तच्छन्द एव च ।
विण्मूत्रवातसङ्गश्च स्वेदस्रावोऽक्षिरक्तता ॥
लोहगन्धित्वमास्यस्य गात्रदौर्गन्ध्यमेव च ।
हृदि शूल पार्श्वयोश्च विशेषश्चाभिधीयते ॥

तस्मिन् कोष्ठे। भिन्ने शस्त्रादिभिः। रक्तपूर्णे कोष्ठे। तस्मादङ्गाद्भिन्नात् स्रुतेन रक्तेन पूर्णे वा ज्वरादयो जायन्ते।

आमाशये पक्वाशये च रक्तपूर्णे लक्षणभेदमाह।

आमाशयस्थे रुधिरे रुधिरं छर्दयत्यपि।
आध्मानमतिमात्रञ्च शूलञ्च भृशदारुणम्॥
पक्वाशयगते रक्ते रुजा गौरवमेव च।
अधःकाये विशेषेण शीतता च भवेदिह॥

रुजा शूलम्। गौरवं पक्वाशये। अधःकाये नाभेरधोदेशे विशेषेण गौरवमित्यन्वयः। शीतता च भवेदिह इह नाभेरधोदेशे शीतता च स्यात्। सा च व्याधिस्वभावात्।

विद्धस्य लक्षणम्।

सूक्ष्मास्यशल्याभिहतं यदङ्गं त्वाशयं विना।
उत्तुण्डितं निर्गतं वा तद्विद्धमिति निर्दिशेत्॥

आशयं विना कोष्ठं विना। उत्तुण्डितम् अनिर्गतशल्यम्। निर्गतं वा निर्गतशल्यं वा।

सशल्यस्य व्रणस्य लक्षणम्।

श्यावं सशोथं पिडकाचितञ्च मुहुर्मुहुः शोणितवाहनञ्च।
मृदून्नतं वुद्बुदतुल्यमांसं व्रणं सशल्यं सरुजं वदन्ति॥

मुहुर्मुहुः शोणितवाहनमिति यदा यदा शल्यं चलति तदा तदा रुधिरं वहति। उन्नतम् उत्थितमुखम्।

कोष्ठस्थितस्य शल्यस्य लक्षणम्।

त्वचोऽतीत्य शिरादीनि भित्त्वाङ्गं परिहृत्य वा।
कोष्ठे प्रतिष्ठितं शल्यं कुर्य्यादुक्तानुपद्रवान्॥

त्वच समापि अतिक्रम्य। उक्तानुपद्रवान् प्रनष्टशल्य विज्ञानीयोक्तान् आटोपानाहादीन्।

असाध्यकोष्ठभेदस्य लक्षणम।

कोष्ठान्तर्लोहित पाण्डुशीतपादकराननम।
शीतोच्छ्वास रक्तनेत्रमानद्धञ्च विवर्जयेत्॥

कोष्ठान्तर्लोहित कोष्ठनिबद्धशोणितम। आनद्धमानाहवन्तम।

क्षतस्य लक्षणम।

नातिच्छिन्न नातिभिन्नमुभयोर्लक्षणान्वितम।
विषम व्रणमङ्गे यत् तत् क्षत परिकीर्त्तितम॥

नातिच्छिन्न नातिदीर्घघातम। नातिभिन्न नातिगम्भीर घातम्। उभयोश्छिन्नभिन्नयो। विषम व्रणमङ्गे यत् यद्व्रण मङ्गवैषम्यकरम।

पिच्चितस्य लक्षणम्।

प्रहारपीडनाभ्यान्तु यदङ्ग पृथुता गतम्।
सास्थि तत् पिच्चित विद्याद्रक्तमज्जपरिप्लुतम्॥

प्रहारो मुद्गरादिना। पीडन कपाटादिना। पृथुता चिपिटताम्।

घृष्टस्य लक्षणम।

घर्षणादभिघाताद् वा यदङ्ग विगतत्वचम्।
उष्मस्रावान्वित तत्तु घृष्टमित्यभिधीयते॥

घर्षणात् कर्कशेष्टकापाषाणवस्त्रादिभि। विगतत्वच विगता त्वक् यस्मात्।

मासशिरास्नायुसन्ध्यस्थिमर्म्मक्षताना लक्षणम।

भ्रम प्रलाप पतन प्रमोहो
विचेष्टन ग्लानिरथोष्णता च।

स्रस्ताङ्गता मूर्च्छनमूर्द्ध्ववात
स्तीव्रा रुजो वातकृताश्च तास्ता ॥
मासोदकाभ रुधिरञ्च गच्छेत्
सर्व्वेन्द्रियार्थोपरमस्तथैव च ।
दशार्द्धसङ्ख्येष्वथ विक्षतेषु
सामान्यतो मर्म्मसु लिङ्गमुक्तम ॥

पतन भूमौ। विचेष्टन विरुद्ध चेष्टन हस्तपदादि प्रक्षेपणादिकम् । मूर्च्छनमिन्द्रियमोह । प्रमोहो मनोमात्र मोह । तीव्रा रुजो वातकृताश्च तास्ता दण्डापतानकादय । रुधिरञ्च गच्छेत मेहन भग गुदास्य घ्राणेभ्य शोणित स्रवेत् । सर्व्वेन्द्रियार्थोपरम इन्द्रियाणा कार्य्यनाश । दशार्द्धसङ्ख्येषु पञ्चसु मासादिमर्म्मसु ।

अमर्म्मशिरादीना विद्धाना पृथग्लक्षणमाह ।

सुरेन्द्रगोपप्रतिम प्रभूत
रक्त स्रवेत् तत् क्षतजश्च वायु ।
करोति रोगान् विविधान् यथोक्तान्
शिरासु विद्धास्वथवा क्षतासु ॥

सुरेन्द्रगोप लोहितवर्ण कीटविशेष । रोगान् शिरोऽभितापादीन् । विद्धासु शरादिना । क्षतासु खड्गादिना ।

कौब्ज्य शरीरावयवावसाद
क्रियास्वशक्तिस्तुमुला रुजश्च ।
चिराद्व्रणो रोहति यस्य चापि
त स्नायुविद्ध पुरुष व्यवस्येत् ॥

कौब्ज्य विद्धस्याङ्गस्य वक्रता । तुमुला महती ।

शोथातिवृद्धिस्तुमुला रुजश्च
बलक्षय सव्वत एव शोथ ।
क्षतेषु सन्धिष्वचलाचलेषु
स्यात् सन्धिकर्म्मोपरमश्च लिङ्गम् ॥

सर्व्वत एव शोथ सर्व्वसन्धीन् व्याप्य शोथ । उपरमो नाश ।

घोरा रुजो यस्य निशादिनेषु
सर्व्वास्ववस्थासु न चैति शान्तिम् ।
भिषग्विपश्चिद विदितार्थसूत्र
स्तमस्थिविद्ध पुरुष व्यवस्येत् ॥

सर्व्वास्ववस्थासु शयनामनादिकासु । विदितार्थसूत्र ज्ञातशल्यतन्त्र ।

यथास्वमेतानि विभावयेच्च लिङ्गानि मर्म्मस्वभिताडितेषु ।

अमर्म्मशिरादिविद्धलक्षणानि पृथगभिधाय मर्म्मविद्ध लक्षणान्याह यथास्वमेतानीत्यादि । यथास्व शिरादीना विद्धाना एतानि लिङ्गानि पृथगुक्तानि लिङ्गानि चकारात भ्रमप्रला-पादीनि च । अभिताडितेषु विद्धेषु ।

सर्व्वंव्रणानामुपद्रवानाह ।

विसर्प पक्षघातश्च शिरास्तम्भोऽपतानक ।
मोहोन्मादौ व्रणे पीडा ज्वरस्तृष्णा हनुग्रह ॥
कासश्छर्द्दिरतीसारो हिक्काश्वास सवेपथु ।
षोडशोपद्रवा प्रोक्ता व्रणाना व्रणचिन्तकै ॥

अथाग्निदग्धस्य निदानमाह ।

तत्राग्निर्द्विविधो ज्ञेय स्नेहरूक्षसमाश्रित ।
स्नेहस्तत्र तु तैलादि रूक्ष लौहादि कथ्यते ॥

अग्निदग्ध चतुर्धा स्यात् प्लुष्ट दुर्दग्धमेव च ।
सम्यग्दग्ध तथा तीव्रदग्धञ्च परिकीर्त्तितम ॥
यद्विवर्णमतिप्लुष्ट तत् प्लुष्टमभिधीयते ।
तीव्रदाहव्यथावन्तो यत्र स्फोटा भवन्ति हि ॥
चिरेण ते प्रशाम्यन्ति तद्दुर्दग्धमुदाहृतम ॥
ताम्रवर्णमगम्भीर दाहपीडासमन्वितम ।
सुसस्थितञ्च कथित सम्यग्दग्ध भिषग्वरै ॥
त्वङ्मास यत्र दग्ध स्याद्विश्लेषो वपुषस्तथा ।
शिरास्नायुस्थिसन्धीना त वदन्त्यतिदग्धकम् ॥

सद्योव्रणस्य चिकित्सा ।

स्रवत्यस्र व्रणे वासस्तोयसिक्त प्रयोजयेत् ।
तेनास्ररोधो भवति वेदना च प्रशाम्यति ॥
अपामार्गस्य ससिक्त पत्रोत्थेन रसेन तु ।
सद्योव्रणेषु रक्तान्तु प्रवृत्त परितिष्ठति ॥
श्वेतैरण्डस्य निर्य्यास शोणितस्रुतिरोधकृत् ।
वेदनाया प्रशमनो व्रणदोषहरस्तथा ॥
शुनो जिह्वाकृतश्चूर्ण सद्य क्षतविरोहण ॥
इति साप्ताहिक कार्य्य सद्योव्रणहितो विधि ।
सप्ताहात् परत कुर्य्याच्छारीरव्रणवत् क्रिया ॥
पित्तविद्रधिवीसर्पशमन लेपनादिकम् ।
अग्निदग्धव्रणे सम्यक् प्रयुञ्जीत चिकित्सक ॥
नारिकेलभव तैल चूर्णोदकसमन्वितम् ।
प्रयुक्त शमयेद्दाह वह्निदग्धव्रणस्य हि ॥
महिष्या नवनीतेन क्षीरेण पेषयेत तिलान् ।

तेन लेपेन दग्धाङ्ग सदाह सुखमश्नुते ॥
मञ्जिष्ठाद्य तथा तैल पाटलीतैलमेव च ॥
तथा जीरघृत योज्यमग्निदग्धप्रशान्तये ॥
शारीरव्रणवच्चात्र क्रिया कार्य्या भिषग्वरे ॥

—∞—

## नाडीव्रणाधिकार ।

य शोथमाममिति पक्वमुपेक्षतेऽज्ञो
यो वा व्रण प्रचुरपूयमसाधुवृत्त ।
अभ्यन्तर प्रविशति प्रविदार्य्य तस्य
स्थानानि पूर्व्वविहितानि तत सपूय ।
तस्यातिमात्रगमनाद् गतिरिष्यते तु
नाडीव यद्वहति तेन मता तु नाडी ।
दोषैस्त्रिभिर्भवति सा पृथगेकशश्च
सम्मूर्च्छितैरपि च शल्यनिमित्ततोऽन्या ॥

वातजाया नाड्या लक्षणम् ।

तत्रानिलात परुषसूक्ष्ममुखी सशूला
फेनानुविद्धमधिक स्रवति क्षपासु ॥

पित्तजाया लक्षणम ।

पित्तात् तृषा ज्वरकरी परिदाहयुक्ता
पीत स्रवत्यधिकमुष्णमह सु चापि ॥
ज्ञेया कफाद् बहुघनार्ज्जुन पिच्छस्रावा
स्तब्धा सकण्डुरुजा रजनीप्रवृद्धा ॥

अर्ज्जुन श्वेत ।

त्रिदोषजाया लक्षणम् ।

दाहज्वर श्वसन मूर्च्छन वक्त्रशोषा
यस्या भवन्त्यभिहितानि च लक्षणानि ।
तामादिशेत पवनपित्तकफप्रकोपाद्
घोरामसुक्षयकरीमिव कालरात्रिम् ॥
दोषद्वयाभिहित लक्षणदर्शनेन
तिस्रो गतीर्व्यतिकरप्रभवास्तु विद्यात् ॥

शल्यनिमित्ताया लक्षणम् ।

नष्टं कथञ्चिदनुमार्गमुदीरितेषु
स्थानेषु शल्यमचिरेण गतिं करोति ।
सा फेनिल मथितमच्छमसृग्विमिश्रं
मुष्णा करोति महसा सरुजञ्च नित्यम् ॥

नष्टमदृष्टम् । मार्गमनु मार्गं लक्षीकृत्य । अणुमार्गमिति पाठे अणुः सूक्ष्मो मार्गो यस्य तत् शल्यम् । उदीरितेषु त्वगादिषु मथितमुन्मथितवत् ।

नाडी त्रिदोषप्रभवा न सिध्ये-
च्छेषाश्च तिस्रः खलु यत्नसाध्याः ॥

नाडीव्रणस्य चिकित्सा ।

नाडीनां गतिमन्विष्य शस्त्रेणापाद्य कर्म्मवत् ।
सर्व्वव्रणक्रमं कुर्य्याच्छोधनादि यथाविधि ॥
श्वेतैरण्डस्य निर्य्यासः खदिरेण समायुतः ।
हन्ति नाडीव्रणान् सर्व्वान् मृगान् मृगपतिर्यथा ॥
आस्फोतानीरसयोगो नाडीं नाशयति ध्रुवम् ॥
विडङ्गत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम् ।

हन्ति कुष्ठ क्रिमीन् मेह नाडीव्रण भगन्दरान् ॥
कृशदुर्ब्बलभीरूणा गतिर्म्मर्म्माश्रिता च या ।
क्षारसूत्रेण ता छिन्द्यान्न शस्त्रेण कदाचन ॥
स्वर्ज्जिकाद्य कुम्भिकाद्य तैल भल्लातकाद्यकम् ।
सप्ताङ्गगुग्गुलुश्चैव नाडीव्रणहितप्रदम् ॥

नाडीव्रणे पथ्यापथ्यानि ।

यद्वायोरानुलोम्याय यच्चाग्निवर्द्धनाय ।
यच्चासम्बृद्धये तत् पथ्यमतोऽन्यच्चात्र गर्हितम् ॥

त्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने आगन्तुव्रण
व्रण अग्निदग्धव्रण नाडीव्रणाधिकार सप्तमोऽध्याय ।

## अष्टमोऽध्याय ।

---

### उपदंशाधिकार ।

#### उपदंशस्य निदानम् ।

हस्ताभिघातान्नखदन्तपाता-
दधावनादत्युपसेवनाद् वा ।
योनिप्रदोषाच्च भवन्ति शिश्ने
पञ्चोपदंशा विविधोपचार ॥

अधावनात् अप्रक्षालनात् ।

वातिकोपदंशस्य लक्षणम् ।

सतोदभेदस्फुरणैः सकृष्णै
स्फोटैर्व्यवस्येत् पवनोपदंशम ॥

पैत्तिकस्य रक्तजस्य च लक्षणम् ।

पीतैर्बहुक्लेदयुतैः सदाहैः
पित्तेन रक्तात् पिशितावभासैः ॥

श्लैष्मिकस्य लक्षणम् ।

सकण्डुरैः शोथयुतैर्महद्भिः शुक्लैर्घनस्रावयुतैः कफेन ॥

त्रिदोषजस्य लक्षणम् ।

नानाविधस्रावरुजोपपन्न
मसाध्यमाहुस्त्रिमलोपदंशम ॥
विशीर्णमांस क्रिमिभिः प्रजग्ध
मुष्कावशेष परिवर्ज्जयेच्च ॥
सञ्जातमात्रे न करोति मूढ
क्रिया नरो यो विषये प्रसक्त ।
कालेन शोथक्रिमिदाहपाक
विशीर्णशिश्नो म्रियते च तेन ॥

लिङ्गवर्त्तिलक्षणम् ।

अङ्कुरैरिव सञ्जातैरुपर्य्युपरि संस्थितैः ।
क्रमेण जायते वर्त्तिस्ताम्रचूडशिखोपमा ॥
कोषस्याभ्यन्तरे सन्धौ पर्व्वसन्धिगतापि वा ।
सवेदना पिच्छिला च दुश्चिकित्स्या त्रिदोषजा ।
लिङ्गवर्त्तिरिति ख्याता लिङ्गार्श इति चापरैः ॥

सञ्जातैर्मांसप्रतानैः ।

सुश्रुते क्वचित् स्त्रीणामप्युपदंश पश्यते यथा—
मेढ्रसन्धौ व्रणा केचित् केचित् सर्व्वाश्रयास्तथा।
कुलत्थाकृतय केचित् केचित् पद्मदलोपमा ॥
शीघ्र केचित् विसर्पन्ति शनै केचित् तथापरे।
स्त्रीणा पुंसाञ्च जायन्ते उपदंशा सुदारुणा ॥

उपदंशस्य चिकित्सा।

स्निग्धस्विन्नशरीरस्य ध्वजमध्ये शिराव्यध ।
जलौक पातन वा स्यादूर्द्ध्वाध शोधन तथा ॥
सद्यो निर्ज्जितदोषस्य रुक्शोथावुपशाम्यत ।
पाको रक्ष्य प्रयत्नेन शिश्नक्षयकरो हि स ॥
त्रिफलाया कषायेण भृङ्गराजरसेन वा।
व्रणप्रक्षालन कुर्य्यादुपदंशप्रशान्तये ॥
त्रिफलाभस्म मधुना प्रलिप्त व्रणहृत् परम ॥
रसाञ्जन शिरीषेण पथ्यया वा समन्वितम्।
सक्षौद्र वा प्रलेपोऽय सर्व्वलिङ्गगदापह ॥
जयाजात्यश्वमारार्कशम्पाकाना जलै पृथक्।
कृत प्रक्षालने क्वाथ मेढ्रपाके प्रयोजयेत् ॥

धूप ।

वदरार्कमपामार्गस्तथा ब्राह्मणयष्टिका।
हिङ्गुलञ्च सम चैषा भाग कृत्वा च धूपनम्।
दोषज कर्म्मज हन्यादुपदंशादिज व्रणम् ॥
त्वचो दारुहरिद्राया शङ्खनाभि रसाञ्जनम्।
लाक्षा गोमयनिर्य्यासस्तैल क्षौद्र घृत पय ॥
एभिस्तु पिष्टैस्तुल्यांशैरुपदंश प्रलेपयेत्।

व्रणाश्च तेन शाम्यन्ति श्वयथुर्दाह एव च ॥
रसो भैरवनामा च रसगुग्गुलुकस्तथा ।
तैलञ्चागारधूमाद्य करञ्जाद्य घृत गदे ॥
उपदंशाभिधे देयानीत्याद्यानि भिषग्वरै ।
चिकित्सा व्रणशोथोक्ता कार्य्या चात्र विविच्य हि ॥
अपथ्य व्रणरोगे यद यच्च पथ्य प्रकीर्त्तितम ।
उपदंशे तथा तत्तद् विज्ञातव्य विचक्षणै ॥

औपसर्गिकोपदंश ।

बहुसङ्करसेवाभ्या सञ्जातो जननेन्द्रिये ।
व्रण कष्टतरो घोरो नानारोगप्रकाशक ॥
विषोपदंश पापोपदंश इत्येवमीरित ।
स एव हि बुधै पूर्व्वै कथितश्चौपसर्गिक ॥
व्याधि सङ्क्रामति स्रोत पसि तस्या ततस्तथा ।
अपत्येषु च जायेत कुलजोऽसौ सुदारुण ॥
उपदंशो द्विधा प्रोक्तो मुख्यगौणप्रभेदत ।
इन्द्रियस्यादिमो दोषो मुख्योऽन्यो दैहिकस्तथा ॥
आरभ्य च क्रियाकाल सप्ताहत्रयमध्यत ।
व्रणो विषोपदंशस्य जायते जननेन्द्रिये ॥
भवेद्व दीर्घतर काल यावन्त समतोत्य य ।
तथा कृच्छ्रतर स स्याद्व बहुदु खप्रदायक ॥
द्विधा पापोपदंशस्य व्रण स्यात् कठिनो मृदु ।
आद्य सङ्क्रामक कृच्छ्र सर्व्वदेहप्रतापन ॥
अपरो न च सङ्क्रामेत् कञ्चिद्देह न दूषयेत् ।
एष साध्यतर' प्रोक्तो न च कष्टो यथादिम ॥

पुंसो मेढ्रस्य मुण्डे च चर्म्मण्यावरके तथा।
भगद्वारे भगोष्ठे च जायन्ते पिडका स्त्रिया॥
समन्तात् कठिनास्तास्तु विदीर्णा रसवाहिका।
दृढमूला मध्यनिम्ना ज्वरभ्रमादिदायिका॥
मुख्योपदंश इत्यस्मिन् शान्तेऽपि पुनरेव हि।
विकृतिं विविधां कुर्य्यात् तद्विष देहसंस्थितम्॥
त्वग्विकारास्त्रिरोगो च केशलोम्नाञ्च सञ्चय।
ग्रन्थिपीनसकुष्ठानि गौणोपदंशलक्षणम्।

त्वग्विकारादयो गौणोपदंशत्वेन लक्ष्यन्ते।

विषं पापोपदंशस्य श्लेष्मग्रन्थिषु सस्तम।
व्रणरोगं मजनयेत् सज्वरं बहुदं खदम॥

विषोपदंशस्य चिकित्सा।

पिडकामुपदंशस्य दहेत् क्षारनिपातत।
व्याधिस्तेन शमं याति न काश्चिद् व्यापदोऽपरा॥
कर्ष शोधितसूतस्य कठिन्यास्तद्वय तथा।
यत्नतो मर्द्दयेत् तावद् यावत् सूतो न दृश्यते॥
अस्य गुञ्जाद्वयं खादेत् प्रत्यहं त्रि पुटस्थितम्।
दन्तवेष्टव्यथायाञ्च लालास्रावे च तत् त्यजेत्॥
रसचूर्णस्य कर्पूररसस्यापि निषेवणात्।
अनेन विधिनैवासौ गदो घोर प्रशाम्यति॥
पलार्द्धप्रमितं चूर्णं तोये पञ्चशरावके।
क्षिप्त्वा विलोड्य सम्यक् च चतुर्यामास्तल परम॥
स्वच्छांशमूर्द्धगञ्चास्य गृह्णीयाददतियत्नत।
इदं चूर्णोदकञ्चास्त्रनाशनं व्रणमिहनुत्॥

ि रक्ति चूर्णनीयेऽस्मिन् रसचूर्णस्य माषकम् ।
त्रिद्य। सम्मिश्रये त् तावत् यावत् कृष्णप्रभ जलम् ॥
कृष्णद्रवेन चानेन चालन व्रणस्तत् परम् ।
उपदंशे विशेषेण शस्तमेतन्महौषधम् ॥
माद्दद्विपलमानेऽस्मिन् निक्षिपेन्नवरक्तिकम् ।
कर्पूररसमेतेन कृत्वा पोतद्रवौषधम ॥
व्रण पापोपदंशस्य क्षालयेत् तेन वारिणा ।
ए— परम प्रोक्तमौषव विबुधैरिह ॥
विद्रवौ या क्रिया प्रोक्ता व्रध्नरोगेऽपि सा हिता ॥
गौणोपदंशो विषमे पित्तघ्नश्चास्रशोधनम् ।
मर भेषजमन्नञ्च पानञ्चापि विनिर्द्दिशेत् ॥

अनन्ताद्य घृतम ।

अनन्तामलकोद्राक्षा काकोलीयुगल वरीम् ।
एलाद्वय विदारीञ्च म॰क म धुक सुराम ॥
त्रिफला स्वर्णपर्णीञ्च वोज गोक्षुरसम्भवम् ।
दशमूल तालमूली त्रिवृतामिन्द्रवारुणीम् ॥
नीलिनी शूकशिम्ब्याश्च वीज कर्षप्रमाणत ।
कल्कीकृत्य पचेत् प्रस्थे सर्पिष शारिवाम्भसा ॥
घृतमेतदनन्ताद्यमुपदंशविनाशनम् ।
रसायन पर वृष्यमस्रदोषनिसूदनम ॥
भेषज कुष्ठशमन वातरक्तहर तथा ।
गौणे मुख्ये च संयोज्यमुपदंशे यथायथम् ॥
पापप्रमेही वातास्री कुष्ठी पापोपदंशवान् ।
न भजेदङ्गना नापि तद्वदित्यङ्गना नरम् ॥

रक्तशालि यव मुद्ग घृत शिग्रुफल तथा।
पटोल तिक्तवर्गञ्च निषेवेतोपदंशवान्॥
दिवानिद्राञ्च गुर्व्वन्न वेगसन्धारण गुडम्।
मद्यमायासमम्लञ्च वर्ज्जयेदुपदंशवान्॥
इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
उपदंशाधिकारोऽष्टत्रिंशोऽध्याय ।

---

## ऊनचत्वारिंशोऽध्याय ।

— o —

### शूकदोषाधिकार ।

शूकदोषस्य निदानम।

अक्रमाच्छेफसो वृद्धि योऽभिवाञ्छति मूढधी ।
व्याधयस्तस्य जायन्ते दश चाष्टौ च शूकजा ॥
अक्रमात् अनुचितवृद्धिकमात्।

तस्यायोग्योपाय ।

भल्लातकास्थि जलशूकमयाब्जपत्र
मन्तर्विदाह्य मतिमान् सह सैन्धवेन।
एतद विरूढबृहतीफलतोयपिष्ट
मालेपित महिषविड्विमलीकृतेऽङ्गे ॥
स्थूल महत्तरतुरङ्गमतुल्यमाशु
शेफ करोत्यभिमत न हि सशयोऽस्ति ॥

योग्योपाय ।

अश्वगन्धा वरी कुष्ठ मासी सिंहीफलान्वितम् ।
चतुर्गुणेन दुग्धेन तिलतैल विपाचयेत् ॥
तत् तैल मेढ्रवक्षोजकर्णपालिविवर्द्धनम् ॥

शूकदोषेषु सर्षपिका ।

गौरसर्षपसंस्थाना शूकदुर्भगहेतुका ।
पिडका श्लेष्मवाताभ्या ज्ञेया सर्षपिका तु सा ॥
शूकदुर्भगहेतुका शूकनिमित्ता दुष्टयोनिनिमित्ता च ॥

अष्ठीलिका ।

कठिना विषमैर्भुग्नैर्वायुनाष्ठीलिका भवेत् ।
विषमैर्भुग्नैरिति वक्ष्यमाणशूकविशेषणम ॥
विषमैर्ह्रस्वदीर्घ । भुग्नैवक्रै ।

ग्रथिता ।

शूकैर्यत् पूरित शश्वद ग्रथित नाम तत् कफात् ॥
यल्लिङ्ग सदा शूकै पूरित तद्ग्रथितत्वाद ग्रथितमिति ।

कुम्भिका ।

कुम्भिका रक्तपित्तोत्था जाम्बवास्थिनिभाशुभा ॥
अशुभा कृष्णा, कुम्भीफलतुल्यत्वात् कुम्भिका ।

अलजी ।

अलजी स्यात् तथा यादृक् प्रमेहपिडकालजी ।
सा च रक्ता सिता स्फोटाचिता च कथिता बुधै ॥
एषा रक्तपित्तनिमित्ता ज्ञेया ।

मृदितम् ।

मृदित पीडित यत्तु सरब्ध वातकोपत ॥

शूकदोषे जाते पीडित सत् यत् सरब्ध सशोथ भवति तल्लिङ्ग मृदितमुच्यते ।

सम्मूढपिडका ।

पाणिभ्या भृशसम्मूढे सम्मूढपिडका भवेत् ॥

शूकदोषे जाते पाणिभ्या भृशसम्मूढे पिच्चिते लिङ्गे, अत्रापि वातकोपत इत्यनुवर्त्तते ।

अवमन्थ ।

दीर्घा बह्वयश्च पिडका दीर्य्यन्ते मध्यतस्तु या ।

सोऽवमन्थ कफासृग्भ्या वेदनारोमहर्षकृत् ॥

दीर्घा दीर्घाङ्कुरा ।

पुष्करिका ।

पिडका पिडकाव्याप्ता पित्तशोणितसम्भवा ।

पद्मकर्णिकसस्थाना ज्ञेया पुष्करिकेति सा ॥

पिडकाव्याप्ता पाश्वत क्षुद्रपिडकाव्याप्ता अतएव पद्मकर्णिकसस्थाना ।

स्पर्शहानि ।

स्पर्शहानिन्तु जनयेच्छोणित शूकदूषितम ॥

अत्र स्पर्शासहत्वमेव लक्षणम् ।

उत्तमा ।

मुद्गमाषोपमा रक्ता रक्तपित्तोद्भवा च या ।

एषोत्तमाख्या पिडका शूकाजीर्णसमुद्भवा ॥

शूकाजीर्ण पुन पुनर्दुरवचारित शूकविकृतरूपमेव ।

शतपोनक ।

छिद्रैरणुमुखैर्लिङ्ग चिर यस्य समन्तत ।
वातशोणितजो व्याधिर्विज्ञेय शतपोनक ॥

शतपोनकश्चालनी, तत्तुल्यत्वाच्छतपोनक ।

त्वक्पाक ।

वातपित्तकृतो ज्ञेयस्त्वक्पाको ज्वरदाहकृत् ॥

एतस्य लिङ्ग त्वक्पाकलक्षणम् ॥

शोणितार्व्वुद ।

कृष्णै स्फोटै सरक्ताभि पिडकाभिर्निपीडितम ।
लिङ्ग वास्तुरुजश्चोग्रा ज्ञेय तच्छोणितार्व्वुदम ॥

वास्तु व्रणाधिष्ठान तत्र रुज ।

मासार्व्वुद ।

मासदोषेण जानीयादर्व्वुद मासमम्भवम ॥

मासपाक ।

शीर्य्यन्ते यस्य मासानि यस्य सर्व्वाश्च वेदना ।
विद्यात् त मासपाकन्तु सर्व्वदोषकृत भिषक् ॥

शीर्य्यन्ते गलन्ति, सर्व्वाश्च वेदना वातपित्तकफजा ।

विद्रधि ।

विद्रधि सन्निपातेन यथोक्तमभिनिर्द्दिशेत् ॥

उक्त सान्निपातिकविद्रधितुल्य कथयेत् ।

तिलकालक ।

कृष्णानि चित्राण्यथवा शूकानि सविषाणि तु ।
पतितानि पचन्त्याशु मेढ्र निरवशेषत ॥

कालानि भूत्वा मांसानि शीर्य्यन्ते यस्य देहिन ।
सन्निपातसमुत्थास्तु तान् विद्यात् तिलकालकान् ॥

सविषाणीति शूकाना सर्व्वेषामेव सविषत्वेऽपि विशेषार्थं मुक्तम । कृष्णतिलतुल्यत्वात् तिलकालकसञ्ज्ञा ।

असाध्या ।

तत्र मांसार्व्वुद यच्च मांसपाकश्च य स्मृत ।
विद्रधिश्च न सिध्यन्ति ये च स्युस्तिलकालका ॥

शूकरोगस्य चिकित्सा ।

शूकदोषेषु सर्व्वेषु विषघ्नी कारयेत् क्रियाम ।
जलौकोभिर्हरेद्रक्त रेचयेल्लघु भोजयेत् ॥
गुग्गुलु पाययेच्चापि त्रिफलाक्वाथसयुतम् ।
क्षीरिणा लेपसेकाश्च शीतानेव त्वि कारयेत् ॥

दार्व्वीतैलम् ।

दार्व्वी सुरसयष्ठ्याह्वैर्गृहधूम निशायुतै ।
सम्पक्व तैलमभ्यङ्गान्मेढ्ररोग विनाशयेत् ॥

रसाञ्जन साह्वयमेकमेव
प्रलेपमात्रेण नयेत् प्रशान्तिम् ।
सपूतिपूयव्रणशोथकण्डू-
शूलान्वित सर्व्वमनङ्गरोगम् ॥

साह्वयमित्यनङ्गरोगस्य विशेषण, अनङ्गरोगस्य नामापि दूरीकरोतीत्यर्थ ।

मलिख्य सर्षपी सम्यक् कषायैरवचूर्णयेत् ।
कषायेष्वेव तैलञ्च कुर्व्वीत व्रणरोपणम् ॥
अष्ठीलिका जलौकोभिर्ग्राहयेत् कुशलो भिषक् ।

तथा चानुपशाम्यन्ती कफग्रन्थिवदुद्धरेत ॥
स्वेदयेद्ग्रथित शश्वन्नाडीस्वेदेन बुद्धिमान् ।
सुखोष्णैरुपनाहैश्च सुस्निग्धैरुपनाहयेत् ॥
कुम्भिका पाकमापन्ना भिन्द्याच्छुद्धा तु रोपयेत् ।
तैलेन त्रिफलालोध्रतिन्दुकाम्रातकेन तु ॥
ग्राहयित्वा जलौकाभिरलजी सेचयेत् तत ।
कषायैस्तेषु सिद्धञ्च तैल रोपणमिष्यते ॥
वलातैलेन कोष्णेन मृदित परिषेचयेत् ।
मधुरै सर्पिषा सिग्धै सुखोष्णैरुपनाहयेत् ॥
समूढपिडका क्षिप्र जलौकाभिरुपाचरेत् ।
भित्त्वा पर्य्यग्गताञ्चापि लेपयेत् क्षौद्रसर्पिषा ॥
अवमन्थे गते पाक भिन्ने तैल विधीयते ।
धवाश्वकर्ण पत्तङ्ग सल्लकी तिन्दुकीकृतम् ॥
क्रिया पुष्करिकायान्तु शीता सर्व्वा प्रयोजयेत् ।
जलौकोभिर्हरेच्चासृक् सर्पिषा चावसेचयेत् ॥
स्पर्शहान्या हरेद्रक्त प्रदिह्यान्मधुरैरपि ।
क्षीरेक्षुरससर्पिर्भि सेचयेच्च सुशीतलै ।
पिडकामुत्तमाख्याञ्च वडिशेनोद्धरेद्भिषक् ।
उद्धृत्य मधुसयुक्तै कषायैरवचूर्णयेत् ॥
रसक्रिया विधातव्या लिखिते शतपोनके ।
पृथक्पर्ण्यादिसिद्धञ्च देय तैलमनन्तरम् ॥
क्रिया कुर्य्याद् भिषक् प्राज्ञस्त्वक्पाकस्य विसर्पवत् ।
रक्तविद्रधिवच्चापि क्रिया शोणितजेऽर्व्वुदे ॥
कषायकल्कसर्पींषि तैल चूर्ण रसक्रियाम ।

शोधन रोपणञ्चैव वीक्ष्य वीक्ष्यावचारयेत् ॥
यथास्व सर्पिष पान पथ्यञ्चापि विरेचनम् ।
हित शोणितमोचञ्च यच्चापि लघु भोजनम् ॥
अर्व्वुद मासपाकञ्च विद्रधि तिलकालकम् ।
प्रत्याख्याय प्रकुर्व्वीत भिषक् सम्यक् प्रतिक्रियाम् ॥

पथ्यापथ्यनिर्णय ।

शूकरोगेषु पथ्यानि सर्पि शालिर्यवो वचा ।
मुद्गयूषो दाडिमञ्च पटोल बालमूलकम् ॥
शिग्रु कर्कोटक चैव वेत्राग्रञ्च कठिल्लकम् ।
पत्तूर सैन्धव तैल कूपस्य सलिल तथा ॥
धारण मूत्रवेगस्य दिवानिद्रा च मैथुनम् ।
व्यायामो गुरु भोज्यञ्च न हितानि तथा गुड ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
शूकदोषाधिकार ऊनचत्वारिंशोऽध्याय ।

---

## चत्वारिंशोऽध्याय ।

पारदविकार ।

शुद्ध सूतोऽमृत साक्षादशुद्धस्तु रसो विषम् ।
अयुक्तियुक्तो रोगाय युक्तियुक्तो रसायन ॥
विधिवत् सेव्यमानोऽय निहन्ति सकलामयान् ।
तस्य मिथ्योपचारेण भवन्त्येते महागदा ॥

पीनसो नासिकाभङ्गो दन्तपात शिरोरुजा ।
भगन्दरो विसर्पश्च नेत्ररोगो मुखामया ॥
कोठ कण्डूस्त्वग्वैवर्ण्यं चतञ्च नासिकादिषु ।
कुष्ठोपदंशचिह्नानि गात्रेषु विविधानि च ॥
ग्रन्थिवत् शोथकाठिन्य सरुज फलकोषयो ।
पक्षाघातो ग्रन्थिवात प्रदाहोऽस्थ्नाञ्च दारुण ॥
जाड्य मनोविकारश्च सर्व्वे कृच्छ्रतमा गदा ॥

तस्य चिकित्सा ।

अहन्यहनि सेवेत वलि रक्तिचतुष्टयम् ।
शुद्धगन्धादृते नास्ति भेषज किञ्चिदुत्तमम् ॥

त्रिफलादि क्वाथ ।

त्रिफला कटुकाभीरु पटोलामृतपर्पट ।
क्वाथ पीत्वा जयेज्जन्तू रोग दुष्टसूतोद्भवम् ॥

सारिवाद्यवलेह ।

शारिवाया पलशत जलद्रोणे विपाचयेत् ।
तस्मिन् पादावशेषेषु गुडूची शतमूलिका ॥
जीवनीयगण त्रिवृत् कटुका त्रिफला तथा ।
क्षुद्रैला त्रायमाणा च प्रत्येकार्द्धपल मतम् ॥
सुपिष्ट निक्षिपेत्तत्र शीते मधु पलाष्टकम् ।
क्षीरानुपानयोगेन पिवेत् तोलकसम्मितम् ॥
प्रमेहाश्चोपदंशश्च मूत्रकृच्छ्रश्च पीडका ।
नश्यन्ति त्वपरे रोगा रक्तदुष्टा भवन्ति ये ॥
पारदविकृतिश्चापि सन्देहो नात्र कश्चन ।

मुक्त सर्व्वेभ्यो रोगेभ्यो बलवर्णाग्निसयुत ॥
मानवो सिद्धकामोऽस्मात् शीघ्र भवति निश्चितम् ॥

पारदविकृतिनाशकान्यौषधानि।

वातशोणित कुष्ठोक्त क्वाथगुग्गुलुकादिकम्।
शारिवाद्यवलेहञ्च वातरक्तान्तकञ्च यत् ॥
तत् मर्व्व योजयेद्वैद्यो ज्ञात्वा व्याधेर्बलाबलम्।
महारुद्र गुडूच्याख्य कन्दर्पसार नामकम् ॥
व्रणराक्षस तैलञ्च नाडीव्रण निसूदनम्।
तैल वृहन्मरीचाद्य यथायोग्य प्रकल्पयेत् ॥

पथ्यापथ्यम्।

वातरक्ते तथा कुष्ठे पथ्यानि यानि तानि च।
शिवतेजोभवे रोगे निर्द्दिशेत् कुशलो भिषक् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
पारदविकारश्चत्वारिंशोऽध्याय ।

---

## एकचत्वारिंशोऽध्यायः।

— o —

ऊरुस्तम्भविकार।

ऊरुस्तम्भस्य निदान सम्प्राप्तिर्लक्षणञ्च।

शीतोष्णद्रवसशुष्क गुरुस्निग्धैर्निषेवितै ।
जीर्णाजीर्णे तथायास सक्षोभ स्वप्नजागरै ॥
सश्लेष्ममेद पवन साममत्यर्थ सञ्चितम।
अभिभूयेतर दोषमूरू चेत् प्रतिपद्यते ॥

सक्थ्यस्थिनी प्रपूर्य्यान्तः श्लेष्मणा स्तिमितेन स ।
तदा स्तभ्नाति तेनोरू स्तब्धो शीतावचेतनौ ॥
परकीयाविव गुरू स्यातामतिभृशव्यथौ ।
ध्यानाङ्गमर्द्दस्तैमित्य तन्द्राच्छर्द्दरुचिज्वरैः ॥
संयुक्तौ पादसदन कृच्छ्रोद्धरण सुप्तिभिः ।
तमूरुस्तम्भमित्याहुराढ्यवातमथापरे ॥

तस्य पूर्व्वरूपम् ।

प्राग्रूप तस्य निद्रातिध्यान स्तिमितता ज्वरः ।
रोमहर्षोऽरुचिश्छर्द्दिर्जङ्घोर्व्वोः सदन तथा ॥

तस्यानुपशयः ।

वातशङ्किभिरज्ञानात् तस्य स्यात् स्नेहनात् पुनः ।
पादयोः सदन सुप्तिः कृच्छ्रादुद्धरण तथा ॥
जङ्घोरु ग्लानिरत्यर्थ शश्वच्चादाहवेदने ।
पदञ्च व्यथते न्यस्त शीतस्पर्श न वेत्ति च ॥
सस्थाने पीडने गत्या चालने चाप्यनीश्वरः ।
अन्यनेयौ हि सभग्नावूरू पादौ च मन्यते ॥

तस्यारिष्ट लक्षणम् ।

यदा दाहार्त्तितोदार्त्तो वेपनः पुरुषो भवेत् ।
ऊरुस्तम्भस्तदा हन्यात् साधयेदन्यथा नवम् ॥

ऊरुस्तम्भस्य चिकित्सा ।

स्नेहासृक्स्राववमन वस्तिकर्म्म विरेचनम् ।
वर्ज्जयेदाढ्यवाते तु यतस्तैस्तस्य कोपनम् ॥
तस्मादत्र सदा कार्य्य स्वेदलङ्घन रूक्षणम् ।
आममेद कफाधिक्यान्मारुत परिरक्षता ॥

यत् स्यात कफप्रशमन न तु मारुतकोपनम्।
तत् सर्व्वं सर्व्वदा कार्य्यमूरुस्तम्भस्य भेषजम ॥
सर्व्वो रूक्ष क्रम कार्य्यस्तत्रादौ कफनाशन ।
पश्चाद्वातविनाशाय विधेया निखिला क्रिया ॥
शिलाजतु गुग्गुल वा पिप्पलीमथ नागरम्।
ऊरुस्तम्भे पिबेन्मूत्रैर्दशमूलीरसेन वा ॥
भल्लातकामृताशुण्ठी दारु पथ्या पुनर्नवा ।
पञ्चमूलीद्वयोन्मिश्रा ऊरुस्तम्भनिवर्हणा ।
पिप्पली पिप्पलीमूल भल्लातक्वाथ एव वा।
कल्को वा समधुर्देय ऊरुस्तम्भविनाशन ॥
त्रिफला चव्य कटुक ग्रन्थिक मधुना लिहेत्।
ऊरुस्तम्भ विनाशाय शिग्रुक्वाथ पिबेदपि ॥
अत्र कटुक त्रिकटु।
क्षौद्र सर्षप वल्मीकमृत्तिका सयुत भिषक्।
कुर्य्यात् प्रलेपन गाढमुरुस्तम्भे सवेदने ॥
कृष्णाधुस्तूरमूलञ्च फलञ्च खाखसाभिधम्।
रसोन मरिचाजाजीजयन्ती शिग्रु सर्षपा ॥
सर्व्वाण्येतानि मूत्रेण पिष्टान्युष्णीकृतानि च।
गाढ प्रलेपयेद् वैद्य आढ्यवाते भयावहे ॥
अत्र गुञ्जाभद्रो रस सहिङ्गुसैन्धवो व्यवस्थीयते।
एभिश्चेद विधिभि शान्तिमूरुस्तम्भो न गच्छति।
तत् पाकाभिमुखे तस्मिन् युञ्ज्यात् पाचनमौषधम् ॥
एक एवातसीकल्क पाचन स्यान्निरत्यय ।
शणवीजस्य कल्कश्च पाचनार्थं प्रयुज्यते ॥

पाके गते गदे तस्मिन् पाययित्वातुर सुराम् ।
तत शस्त्रक्रिया वैद्य आचरेत् कर्म्मपारग ॥
सुहृद्भि सान्त्वितस्यास्य दृढमासैर्धृतस्य च ।
सुरामोहितचित्तस्य सावधानो लघुक्रिय ॥
गाढ शोथे निदध्याद्धि शस्त्रमुत्पलपत्रकम् ।
वैद्योऽथ तद विनिष्कृष्य शोफ सम्यक् प्रपीडयेत् ॥
ततो व्रणक्रम कुर्य्यात् यावद् व्याधिर्न शाम्यति ।
एव भाग्यबलाज्जीवेदूरुस्तम्भी कदाचन ॥

ऊरुस्तम्भे पथ्यापथ्यव्यवस्था ।

भोज्या पुराणा गोधूम कोद्रवोद्दालशालय ।
जाङ्गलैरघृतैर्मासै शाकैश्चालवणैर्हितै ॥
शाकैरलवणैर्दद्याज्जल तैलाज्य साधितै ।
सुनिषण्णकनिम्बाद्यैर्जीर्णं शाल्योदन भिषक् ॥
प्रतारयेत् प्रतिस्रोतो नदी शीतजला शिवाम् ।
सरश्च विमल शीत स्थिरतोय पुन पुन ॥
गुरुशीतद्रवस्निग्ध विरुद्धासात्म्यभोजनम् ।
त्यजेदम्लञ्च लवणमूरुस्तम्भगदार्द्दित ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
ऊरुस्तम्भाधिकार एकचत्वारिंशोऽध्याय ।

---

# द्विचत्वारिंशोऽध्यायः।

## विद्रध्यधिकारः।

### विद्रधेः सम्प्राप्तिः सामान्यलक्षणञ्च।

त्वग्रक्तमांसमेदांसि सदूष्यास्थिसमाश्रिताः।
दोषाः शोथं शनैर्घोरं जनयन्त्युच्छ्रिता भृशम्॥
महामूलं रुजावन्तं वृत्तं वाप्यथवायतम्।
स विद्रधिरिति ख्यातो विज्ञेयः षड्विधश्च सः॥
पृथग्दोषैः समस्तैश्च क्षतेनाप्यसृजा तथा।
षणामपि हि तेषान्तु लक्षणं सम्प्रचक्ष्यते॥

### वातिकस्य विद्रधेर्लक्षणम्।

कृष्णोऽरुणो वा विषमो भृशमत्यर्थवेदनः।
चित्रोत्थानप्रपाकश्च विद्रधिर्वातसम्भवः॥

विषमः कदाचिदल्पः कदाचिन्महान्। चित्रोत्थानप्रपाकः चित्रौ नानाविधौ वायोर्विषमक्रियत्वात् उद्गमप्रपाकौ यस्य स तथा।

### पैत्तिकस्य लक्षणम्।

पक्वोडुम्बरसङ्काशः श्यावो वा ज्वरदाहवान्।
क्षिप्रोत्थानप्रपाकश्च विद्रधिः पित्तसम्भवः॥

### श्लैष्मिकस्य लक्षणम्।

शरावसदृशः पाण्डुः शीतः स्निग्धोऽल्पवेदनः।
चिरोत्थानप्रपाकश्च विद्रधिः कफसम्भवः॥
तनुपीतसिताश्चैषामास्रावाः क्रमशः स्मृताः॥

सान्निपातिकस्य लक्षणम् ।

नानावर्णरुजास्रावो घाटालो विषमो महान् ।
विषम पच्यते वापि विद्रधि सान्निपातिक ॥

आगन्तुविद्रधे सम्प्राप्तिर्लक्षणञ्च ।

तैस्तैर्भावैरभिहते क्षते वापथ्यकारिण ।
क्षतोष्मा वायुविसृत सरक्त पित्तमीरयेत् ॥
ज्वरस्तृष्णा च दाहश्च जायते तस्य देहिन ।
आगन्तुर्विद्रधिर्ज्ञेय पित्तविद्रधिलक्षण ॥

रक्तविद्रधेर्लक्षणम ।

कृष्णस्फोटावृत श्यावस्तीव्रदाहरुजाज्वर ।
पित्तविद्रधिलिङ्गस्तु रक्तविद्रधिरुच्यते ॥

अन्तर्विद्रधिमाह ।

पृथक् सम्भूय वा दोषा कुपिता गुल्मरूपिणम् ।
वल्मीकवत् समुन्नद्धमन्त कुर्व्वन्ति विद्रधिम ॥
गुदे वस्तिमुखे नाभ्या कुक्षौ वङ्क्षणयोस्तथा ।
वृक्कयो प्लीह्नि यकृति हृदि वा क्लोम्नि वाप्यथ ॥
तेषामुक्तानि लिङ्गानि वाह्यविद्रधिलक्षणै ॥
अधिष्ठानविशेषेण लिङ्ग शृणु विशेषत ।
गुदे वातनिरोधश्च वस्तौ कृच्छ्राल्पमूत्रता ॥
नाभ्या हिक्काजृम्भणे च कुक्षौ मारुतकोपनम् ।
कटीपृष्ठग्रहस्तीव्रो वङ्क्षणोत्थे तु विद्रधौ ॥
वृक्कयो पार्श्वसङ्कोच प्लीह्नुरुच्छ्वासावरोधनम् ।
सर्व्वाङ्गप्रग्रहस्तीव्रो हृदि कासश्च जायते ॥
श्वासो यकृति हिक्का च क्लोम्नि पेपीयते पय ॥

स्रावमार्गमाह।

नाभेरुपरिजा: पक्का यान्त्यूर्द्धमितरे त्वधः।
अधः स्रुतेषु जीवेत्तु स्रुतेषूर्द्ध्वं न जीवति॥

अन्यच्च। ऊर्द्ध्वं प्रभिन्नेषु मुखान्नराणां
प्रवर्त्ततेऽसृक् सहितो हि पूयः।
अधः प्रभिन्नेषु तु पायुमार्गाद्
द्वाभ्यां प्रवृत्तिस्त्विह नाभिजेषु॥

हृन्नाभिवस्तिवर्ज्या ये तेषु भिन्नेषु वाह्यतः।
जीवेत् कदाचित् पुरुषो नेतरेषु कदाचन॥

वाह्यविद्रधीनां साध्यासाध्यत्वमाह।

साध्या विद्रधयः पञ्च विवर्ज्ज्यः सान्निपातिकः॥
आध्मातं वद्धनिष्यन्दं छर्द्दिहिक्कातृषान्वितम्।
रुजाश्वाससमायुक्तं विद्रधिर्नाशयेन्नरम्॥
आमपक्वविदग्धत्वं तेषां शोथवदादिशेत्॥

शोथवत् वक्ष्यमाणशोथवत्।

विद्रधेश्चिकित्सा।

जलौकापातनं शस्तं सर्व्वस्मिन्नेव विद्रधौ।
मृदुर्विरेको लघ्वन्नं स्वेदः पित्तोत्तरं विना॥
वातघ्नमूलकल्कैस्तु वसातैलघृतान्वितैः।
सुखोष्णावहलो लेपः प्रयोज्यो वातविद्रधौ॥
स्वेदोपनाहाः कर्त्तव्याः शिग्रुमूलसमन्विताः।
यवगोधूममुद्गैश्च सिद्धैः पिष्टैश्च लेपयेत्॥
पुनर्नवादारुविश्वदशमूलभवाम्भसा।
गुग्गुलुं रुवुतैलं वा पिबेन्मारुतविद्रधौ॥

पैत्तिक शर्करा लाजामधुकै शर्करायुतै ।
प्रदिह्यात् क्षीरपिष्टैर्वा पयस्योशीरचन्दनै ॥
पञ्चवल्कलकल्केन घृतमिश्रेण लेपनम् ।
यष्ट्याह्वाशारिवादूर्व्वानलमूलै सचन्दनै ॥
क्षीरपिष्टै प्रलेपस्तु पित्तविद्रधिनाशन ॥
इष्टकासिकतालोह गोशकृत्तुषपांशुभि ।
मूत्रपिष्टैश्च सतत स्वेदयेत् श्लेष्मविद्रधिम् ॥
गोमूत्रपिष्टमिष्टकादिकमुत्स्विद्य एरण्डादिपत्रैर्वा स्वेद ।
पित्तविद्रधिवत् सर्व्वा क्रिया निरवशेषत ।
विद्रधौ कुशल कुर्य्याद् रक्तागन्तुनिमित्तयो ॥
शोभाञ्जनकनिर्य्यूहो हिङ्गुसैन्धवसयुत ।
अचिराद् विद्रधि हन्ति प्रात प्रातर्निषेवित ॥
शिग्रुमूल जले धौत पिष्ट वस्त्रेण गालयेत् ।
तद्रस मधुना पीत्वा हन्त्यन्तर्विद्रधि नर ॥
श्वेतवर्षाभुवो मूल मूल वा वरुणस्य च ।
जलेन क्वथित पीतमन्तर्विद्रधिहृत् परम् ॥
शमयति पाठामूल क्षौद्रयुत तण्डुलाम्भसा पीतम ।
अन्तर्भूत विद्रधिमुद्धतमाश्वेव मनुजस्य ।
अपक्वे त्वेतदुद्दिष्ट पक्वे तु व्रणवत् क्रिया ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
विद्रधिरोगाधिकारो द्विचत्वारिंशोऽध्याय ।

# त्रिचत्वारिंशोऽध्यायः ।

## विस्फोटाधिकार ।

कट्वम्लतीक्ष्णोष्णविदाहिरूक्ष
क्षारैरजीर्णाध्यशनातपैश्च ।
तथर्त्तुदोषेण विपर्य्ययेण
कुप्यन्ति दोषा पवनादयस्तु ॥

त्वचमाश्रित्य ते रक्तं मांसास्थीनि प्रदूष्य च ।
घोरान् कुर्व्वन्ति विस्फोटान् सर्व्वान् ज्वरपुरःसरान् ॥

ऋतुदोषेण ऋतुहेतुकशीतोष्णादीनामतियोगेन । विपर्य्ययेण ऋतूचिताहारविहारवैपरीत्येन । त्वचमाश्रित्य त्वचि विस्फोटान् कुर्व्वन्तीत्यर्थः । ज्वरपुरःसरान् ज्वरपूर्व्वान् ।

### विस्फोटस्य सामान्य लक्षणम् ।

अग्निदग्धा इव स्फोटाः सज्वरा रक्तपित्तजाः ।
क्वचित् सर्व्वत्र वा देहे विस्फोटा इति ते स्मृताः ॥

अन्यच्च । यदा रक्तञ्च पित्तञ्च वातेनानुगतं त्वचि ।
अग्निदग्धनिभान् स्फोटान् कुरुते सर्व्वदेहगान् ।
सज्वरान् दाहसंयुक्तान् विद्याद्विस्फोटकास्तु तान् ॥

### वातिकस्य तस्य लक्षणम् ।

शिरोरुक्शूलभूयिष्ठं ज्वरहृट्पर्व्वभेदनम् ।
सकृष्णवर्णता चेति वातविस्फोटलक्षणम् ॥

शूलं तोदरूपम् ।

पैत्तिकस्य तस्य लक्षणम् ।

ज्वरदाहरुजापाकस्रावतृष्णासमन्वितम ।
पीतलोहितवर्णञ्च पित्तविस्फोटलक्षणम् ॥

श्लैष्मिकस्य लक्षणम् ।

छर्द्यरोचकजाड्यानि कण्डूकाठिन्यपाण्डुता ।
यस्मिन्न रुक् चिरात्पाक स विस्फोट कफात्मक ॥

जाड्य जडत्वमङ्गानाम् ।

द्वन्द्वजानाह ।

वातपित्तकृतो यस्तु कुरुते तीव्रवेदनाम ।
कण्डूस्तैमित्यगुरुभिर्जानीयात् कफवातिकम् ॥
कण्डूर्दाहो ज्वरश्छर्द्दिरेतैस्तु कफपैत्तिकम् ॥

कण्डूस्तैमित्यगुरुभि कण्डूस्तैमित्यगुरुताभिरित्यर्थ भावप्रधाननिर्द्देशात् ।

सान्निपातिकस्य लक्षणम् ।

मध्ये निम्नोन्नतोऽन्ते च कठिन स्वल्पपाकवान् ।
दाहरागतृषामोहच्छर्द्दिमूर्च्छारुजाज्वरा ॥
प्रलापो वेपथुस्तन्द्रा सोऽसाध्य स्यात् त्रिदोषज ।

मध्ये अन्ते च यथाक्रम निम्न उन्नतश्च । निम्नश्चासौ उन्नतश्चेति निम्नोन्नत । अत्र समासो न मनोहर ।

रक्तप्रकोपजस्य लक्षणम ।

वेदितव्याश्च रक्तेन पैत्तिकेन च हेतुना ।
गुञ्जाफलसमा रक्ता रक्तस्रावा विदाहिन ॥
न ते सिद्धि समायान्ति सिद्धैर्योगशतैरपि ॥

पैत्तिकेन हेतुना पित्तस्य हेतुना कट्वादिना ।

एकदोषोत्थित साध्य कृच्छ्रसाध्यो द्विदोषज ।
सर्व्वदोषोत्थितो घोरस्त्वसाध्यो भूर्य्युपद्रव ॥
भूर्य्युपद्रव इत्यत्र विसर्पोक्ता एव उपद्रवा ज्ञेया ।

विस्फोटकस्य चिकित्सा ।

विस्फोटे लङ्घन कार्य्यं वमन पथ्यभोजनम् ।
यथादोषबल वीक्ष्य युक्तमुक्त विरेचनम् ॥
जीर्णशालिर्यवो मुद्गो मसूरश्चाढकी तथा ।
एतान्यन्नानि विस्फोटे हितानि मुनयोऽब्रुवन् ॥
द्वे पञ्चमूल्यौ रास्ना च दार्व्युशीर दुरालभा ।
गुडूची धान्यक मुस्तमेषा क्वाथ पिबेन्नर ॥
विस्फोटान् नाशयत्याशु समीरणनिमित्तकान् ॥
द्राक्षाकाश्मर्य्यखर्ज्जूरपटोलारिष्टवासकै ।
कटुकालाजदुस्पर्शै सितायुक्तान्तु पैत्तिके ॥
भूनिम्बसवचावासात्रिफलेन्द्रजवत्सकै ।
पिचुमर्द्दपटोलाभ्या कफजे मधुयुक् शृतम् ॥
किराततिक्तकारिष्ट यष्ट्याह्वाम्बुदवासकै ।
पटोलपर्प्पटोशीरत्रिफलाकौटजान्वितै ॥
क्वथितैर्द्दादशाङ्गन्तु सर्व्वविस्फोटनाशनम् ॥
विस्फोटव्याधिनाशाय तण्डुलाम्बुप्रयोजितै ।
वीजै कुटजवृक्षस्य लेप कार्य्यो विजानता ॥
छिन्नापटोलभूनिम्बवासकारिष्टपर्प्पटै ।
खदिराब्दयुतै क्वाथो हन्ति विस्फोटकज्वरम् ॥
चन्दन नागपुष्पञ्च सारिवा तण्डुलीयकम् ।
शिरीषवल्कल जाती लेप स्याद्दाहनाशन ॥

उत्पल चन्दन लोध्रमुशीर सारिवाद्वयम् ।
एतेषा लेपनादाशु स्फोटदाह प्रशाम्यति ॥
रक्तदोषहर यद्यद यद्यत् पित्तप्रणाशनम् ।
सर्व्वमत्र प्रयोक्तव्य विविच्य भिषजा सदा ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
विस्फोटाधिकारस्त्रिचत्वारिंशोऽध्याय ।

---

## चतुश्चत्वारिंशोऽध्यायः ।



### गलगण्डगण्डमालापचोग्रन्थ्यर्व्वुदाधिकार ।

तत्र गलगण्डस्य सामान्य लक्षणम् ।

निवद्ध श्वयथुर्यस्य मुष्कवल्लम्बते गले ।
महान् वा यदि वा ह्रस्वो गलगण्ड तमादिशेत् ॥
अन्यच्च । महान्त शोथमल्प वा हनुमन्यागलाश्रयम ।
मुष्कवल्लम्बमानन्तु गलगण्ड विनिर्द्दिशेत् ॥

निवद्धो दृढ अचलो वा । मुष्कवल्लम्बते गले इत्यत्र गले इति हनुमन्ययोरुपलक्षणम् । तथाच महान्त शोथमल्प वेत्यादि ।

तस्य सम्प्राप्ति ।

वात कफश्चापि गले प्रदुष्टौ
मन्ये च सश्रित्य तथैव मेद ।

कुर्व्वन्ति गण्डं क्रमशः स्वलिङ्गैः
समाचितं तं गलगण्डमाहुः ॥
स्वलिङ्गैर्वातकफमेदोलक्षणैः ॥

वातिकस्य तस्य लक्षणम्।

तोदान्वितः कृष्णशिरावनद्धः
श्यावोऽरुणो वा पवनात्मकस्तु।
पारुष्ययुक्तश्चिरवृद्ध्यपाको
यदृच्छया पाकमियात् कदाचित् ॥
वैरस्यमास्यस्य च तस्य जन्तो
र्भवेत् तथा तालुगलप्रशोषः ॥

चिरवृद्ध्यपाकः चिरेण वृद्धिः अपाकश्च यस्य सः। अथवा चिरेण वृद्धिर्यस्य स चिरवृद्धिः। नास्ति पाको यस्य स अपाकः। ततः चिरवृद्धिश्चासौ अपाकश्चेति चिरवृद्ध्यपाकः।

श्लैष्मिकस्य लक्षणम्।

स्थिरः सवर्णो गुरुरुग्रकण्डू
श्शीतो महांश्चापि कफात्मकस्तु।
चिराच्च वृद्धिं भजतेऽचिराद्वा
प्रपच्यते मन्दरुजः कदाचित् ॥
माधुर्य्यमास्यस्य च तस्य जन्तो-
र्भवेत् तथा तालुगलप्रलेपः ॥

मेदोजस्य लक्षणम्।

स्निग्धो मृदुः पाण्डुरनिष्टगन्धो
मेदोभवः कण्डूयुतोऽल्परुक् च।

प्रलम्बतेऽलाबुवदल्पमूलो
देहानुरूपक्षयवृद्धियुक्त ॥
स्निग्धास्यता तस्य भवेच्च जन्तो-
र्गलेन शब्द कुरुते च नित्यम् ॥
कृच्छ्राच्छ्वसन्त मृदुसर्व्वगात्र
सवत्सरातीतमरोचकार्त्तम ।
क्षीणञ्च वैद्यो गलगण्डयुक्त
भिन्नस्वरञ्चापि विवर्ज्जयेच्च ॥

गण्डमालाया लक्षणम ।

कर्कन्धुकोलामलकप्रमाणै
कक्षास मन्या गल वङ्क्षणेषु ।
मेद कफाभ्या चिरमन्दपाकै
स्याद् गण्डमाला बहुभिश्च गण्डै ॥

कर्कन्धु क्षुद्रवदर । कोल बृहद्वदरम् । चिरमन्दपाकै चिरेण मन्द अल्प पाको येषा तै ।

अपच्या लक्षणम ।

ते ग्रन्थय केचिदवाप्तपाका
स्रवन्ति नश्यन्ति भवन्ति चान्ये ।
कालानुवद्ध चिरमादधाति
सैवापचीति प्रवदन्ति तज्ज्ञा ॥

ते ग्रन्थय गण्डमालाया एव गण्डा केचिदवाप्तपाका सन्त स्रवन्ति केचिन्नश्यन्ति सरोहन्ति अन्ये भवन्ति च कालानुवन्ध चिरमादधाति । या गण्डमाला चिर तिष्ठति सा एव अपची ।

साध्या स्मृता पीनस पार्श्वशूल
कासज्वरच्छर्दियुता त्वसाध्या ॥

निरुपद्रवा अपची साध्या। परन्तु पीनसाद्युपद्रवयुक्ता सा असाध्या।

ग्रन्थेर्लक्षणम।

वातादयो मांसमसृक् प्रदुष्टा
सन्दूष्य मेदश्च तथा शिराश्च।
वृत्तोन्नत विग्रथितञ्च शोथ
कुर्व्वन्त्यतो ग्रन्थिरिति प्रदिष्ट ॥

वातादयो वातपित्तकफा प्रदुष्टा सन्त मांसमसृक् मेद शिराश्च सन्दूष्य वृत्तोन्नत विग्रथित ग्रन्थिरूप शोथ कुर्व्वन्ति। विग्रथितत्वाद् ग्रन्थि। स पञ्चधा। यथा, वातिक, पैत्तिक श्लैष्मिक, मेदोज, शिराजश्चेति।

वातिकस्य ग्रन्थर्लक्षणम्।

आयम्यते वृश्चति तुद्यते च प्रभ्रश्यते मन्यति भिद्यते च।
कृष्णो मृदुर्वस्तिरिवाततश्च
भिन्न स्रवेच्चानिलजोऽस्रमच्छम् ॥

आयम्यते आकृष्य दीर्घ क्रियत इव। वृश्चति आश्रय छिनत्तीव। प्रभ्रश्यते स्खलतीव। भिद्यते विदार्य्यत इव। आततो विस्तारित इव। मृदु न त्वत्यन्तकठिन। अस्र रुधिरम। अच्छ प्रकृतम।

पैत्तिकस्य लक्षणम।

मन्दह्यते धूप्यति चूष्यते च
पापच्यते वा ज्वलतीव चापि।

रक्त सपीतोऽप्यथवापि पित्ताद्
भिन्न स्रवेद् दुष्टमतीव चास्रम् ॥

सन्दह्यते भृश दाह करोति सकलशरीरे। धूप्यति अन्तस्ताप करोति। चूष्यते शृङ्गेणेव। पापच्यते भृश पाक करोति। प्रज्वलतीव अग्निरिव ज्वालायुक्त इव भवति ग्रन्थि । अस्र रुधिरम्। अतीव दुष्ट हृष्णतादियुक्त मज्जविमिश्रञ्च। दुष्टमित्यस्य स्थाने उष्णमिति पाठान्तरम्।

श्लैष्मिकस्य लक्षणम।

शीतोऽविवर्णोऽल्परुजोऽतिकण्डू
पाषाणवत् सहननोपपन्न ।
चिराभिवृद्धिश्च कफप्रकोपाद्
भिन्न स्रवेच्छुक्लघनञ्च पूयम् ॥

अविवर्ण प्रकृतिवर्ण । पाषाणवत सहननोपपन्न सहततायुक्त ।

मेदोजस्य लक्षणम्।

शरीरवृद्धिक्षयवृद्धिहानि
स्निग्धो महान् कण्डूयुतोऽरुजश्च ।
मेद कृतो गच्छति चात्र भिन्ने
पिण्याकसर्पि प्रतिमन्तु मेद ॥

तिलकल्कसदृश घृतसदृश वा मेद गच्छति स्रवतीत्यर्थ ।

शिराजस्य लक्षणम्।

व्यायामजातैरबलस्य तैस्तैराक्षिप्य वायुश्च शिराप्रतानम्।
सङ्कोच्य सम्पिण्ड्य विशोष्य चापि
ग्रन्थि करोत्युन्नतमाशु वृत्तम् ॥

ग्रन्थि शिराज स तु कृच्छ्रसाध्यो
भवेद्‌ यदि स्यात सरुजश्चलश्च।
असृक् स एवाप्यचलो महांश्च
मर्म्मोत्थितश्चापि विवर्ज्जनीय ॥

तैस्तैर्बलवद्भिग्रहादिभि । आक्षिप्य चालयित्वा। सम्पिण्ड्य सहतोकृत्य।

पञ्चैतानरुजो ग्रन्थीन् मर्म्मजानचलांस्त्यजेत्।
कपोलगलमन्यासु दुश्चिकित्स्या हि सन्धिषु।

अर्व्वुदस्य सम्प्राप्ति सामान्य लक्षणञ्च।

गात्रप्रदेशे क्वचिदेव दोषा सम्मूर्च्छिता मासमसृक् प्रदूष्य।
वृत्त स्थिर मन्दरुज महान्त
मनल्पमूल चिरवृद्ध्यपाकन ॥
कुर्व्वन्ति मासोच्छ्रयमत्यगाध
तदर्व्वुद शास्त्रविदो वदन्ति ॥

महान्त ग्रन्थ्यपेक्षया। अत्यगाध दूरानुप्रविष्टम्। अत-एवानल्पमूलम्।

अर्व्वुदस्य निदान विशिष्ट लक्षणञ्च।

वातेन पित्तेन कफेन चापि
रक्तेन मासेन च मेदसा च।
तज्जायते तस्य च लक्षणानि
ग्रन्थे समानानि सदा भवन्ति ॥

रक्तजार्व्वुदस्य लक्षणम।

दोष प्रदुष्टो रुधिर शिरास्व
सङ्कोच्य सम्पिण्ड्य ततस्त्वपाकम्।

सास्रावमुन्नह्यति मांसपिण्डं
मांसाङ्कुरैराव्रतमाशु वृद्धिम ॥
स्रवत्यजस्रं रुधिरं प्रदुष्ट-
मसाध्यमेतद्रुधिरात्मकन्तु ।
रक्तक्षयोपद्रवपीडितत्वात्
पाण्डुर्भवेदर्व्वुदपीड़ितस्तु ॥

दोषोऽत्र पित्तम् । रुधिरं शिराश्च सङ्कोच्य सम्पिण्ड्य सङ्घतो-कृत्य । मांसासृजो सर्व्वेष्वर्व्वुदेषु दूष्यत्वम । रक्तजे तु विशेषतो रक्तदुष्टिः । एवं मांसार्व्वुदे विशेषतो मांसदुष्टिर्बोद्धव्या । ततो मांसपिण्डं उन्नह्यति उन्नतं करोति । अपाकं ईषत्पाकं यथा स्यादेवमिति क्रियाविशेषणम् । ईषत्पाकश्चैकदेशपाकेन । आशु-वृद्धिं शीघ्रवर्द्धनम । रक्तक्षयोपद्रवाः सुश्रुतोक्ता त्वक्पारुष्याम्ल-शीतप्रधानाशिशिरेच्छारूपा तैः पीडितत्वात् । अर्व्वुदपीड़ितः रक्तार्व्वुदपीड़ितः ।

मांसार्व्वुदस्य सम्प्राप्तिर्निदानञ्च ।

मुष्टिप्रहारादिभिरर्द्दितेऽङ्गे
मांसं प्रदुष्टं जनयेद्धि शोथम् ।
अवेदनं स्निग्धमनन्यवर्ण-
मपाकमश्मोपममप्रचाल्यम ॥
प्रदुष्टमांसस्य नरस्य गाढ-
मेतद्भवेन्मांसपरायणस्य ॥

मांसं प्रदुष्टं वातेन । अवेदनं वेदनारहितमीषद्वेदनं वा । अपाकं पाकरहितमीषत्पाकं वा । मांसाशनाभ्यासेन य प्रदुष्ट-मांसस्तस्यैतद्भवति ।

असाध्यत्वम्।

मांसार्व्वुदन्त्वेतदसाध्यमाहु
साध्येष्वपोमानि विवर्ज्जयेच्च।
सम्प्रस्रुत मर्म्मसु यच्च जात
स्रोत सु वा यच्च भवेदचाल्यम्॥

साध्येष्वपि वातजादिष्वपि इमानि वक्ष्यमाणानि सम्प्रस्रुतादीनि विवर्ज्जयेच्च। सम्प्रस्रुत स्रावयुक्त स्रावश्चात्रा पाकिलेऽपि त्वगवदरणात् मनागवगन्तव्य।

यज्जायतेऽन्यत् खलु पूर्व्वजाते
ज्ञेय तदध्यर्व्वुदमर्व्वुदज्ञै।
यद्द्वन्द्वजात युगपत् क्रमाद्वा
द्विरर्व्वुद तच्च भवेदसाध्यम्॥

अर्व्वुदाना पाकाभावहेतु।

न पाकमायान्ति कफाधिकत्वाद्
मेदोबहुत्वाच्च विशेषतस्तु
दोषस्थिरत्वाद् ग्रथनाच्च तेषा
सर्व्वार्व्वुदान्येव निसर्गतस्तु॥

अथैषा चिकित्सा।

यवमुद्गपटोलानि कटु रुक्षञ्च भोजनम्।
छर्द्दि शोणितमोक्षञ्च गलगण्डे प्रयोजयेत्॥
तण्डुलोदकपिष्टेन मूलेन परिलेपिन।
हस्तिकर्णपलाशस्य गलगण्ड प्रशाम्यति॥
सर्षपान् शिग्रुवीजानि शणवीजातसीयवान्।
मूलकस्य च वीजानि तक्रेणाम्लेन पेषयेत्॥

गलगण्डो गण्डमाला ग्रन्थयश्चैव दारुणा ।
प्रलेपादेव नश्यन्ति विलय यान्ति सत्वरम् ॥
जीर्णकर्कारुकरसो विड्सैन्धवसयुत ।
नस्येन हन्ति तरुण गलगण्ड न सशय ॥
रक्षोघ्नतैलयुक्तेन जलकुम्भीकभस्मना ।
लेपन गलगण्डस्य चिरोत्थस्यापि शस्यते ॥

रक्षोघ्न सर्षप ।

श्वेतापराजितामूल प्रात पिष्ट्वा पिबेन्नर ।
सर्पिषा नियताहारो गलगण्डप्रशान्तये ॥
तिक्तालावुफले पक्के सप्ताहमुषित जलम् ।
सद्य स्याद्गलगण्डघ्न पानात् पथ्यान्नसेविनाम ॥
काञ्चनारत्वच क्काथ शुण्ठीचूर्णेन सयुत ।
माक्षिकाढ्य सकृत्पीत क्काथो वरुणमूलज ॥
गण्डमाला हरत्याशु चिरकालानुवन्धिनीम् ॥
पलमर्द्धपल वापि पिष्ट तण्डुलवारिणा ।
काञ्चनारत्वच पीत्वा गण्डमाला व्यपोहति ॥

काञ्चनारत्वच पलमर्द्धपल वा तण्डुलजलेन पिष्टम ।

ऐन्द्र्या वा गिरिकर्ण्या वा मूल गोमूत्रयोगत ।
गण्डमाला हरेत् पीत चिरकालोत्थितामपि ॥
अलम्बुषादलोद्भूतस्वरस द्विपल पिबेत् ।
अपच्या गण्डमालाया कामलायाश्च नाशनम ॥
स्वर्जिकामूलकक्षार शङ्खचूर्णसमन्वित ।
एतेन विहितो लेपो हन्ति ग्रन्थि तथार्व्वुदम् ॥
ग्रन्थिष्वामेषु कुर्व्वीत भिषक् शोथप्रतिक्रियाम् ।

पक्वानुत्पाट्य संशोध्य रोपयेद्व्रणभेषजैः ॥

ग्रन्थीनमर्म्मप्रभवानपक्वा-
नुद्धृत्य चाग्निं विदधीत वैद्यः ।
क्षारेण चैतान् प्रतिसारयेत्तु
सर्व्वांश्च सलिख्य यथोपदेशम् ॥

दन्तीचित्रकमूलत्वक् सोधार्कपयसी गुडः ।
भल्लातकास्थि कासीसं लेपाच्छिन्द्याच्छिलामपि ॥
ग्रन्थ्यर्व्वुदादिजिल्लेपो मातृवाहककोटजः ॥

ग्रन्थ्यर्व्वुदाना न यतो विशेषः
प्रदेशहेत्वाशतिदोषदूष्यैः ।
अतश्चिकित्सेद्भिषगर्व्वुदानि
विधानविद् ग्रन्थिचिकित्सितेन ॥

मूलकस्य कृतः क्षारो हरिद्रायास्तथैव च ।
शङ्खचूर्णेन संयुक्तो लेपः सिद्धोऽर्व्वुदापहः ॥
हरिद्रा लोध्रपत्तङ्गगृहधूममनःशिलाः ।
मधुप्रगाढो लेपोऽयं मेदोऽर्व्वुदहरः परः ॥
शिग्रुमूलकयोर्वीजं रक्षोघ्नं सुरसा यवम् ।
तक्रेणाश्वरिपुं पिष्ट्वा लिम्पेदर्व्वुदशान्तये ॥
उपोदिकारसाभ्यक्तास्तत्पत्रपरिवेष्टिताः ।
प्रणश्यन्त्यचिरान्नृणां पिडकार्व्वुदजातयः ॥
कालाग्निभैरवरसो हेमामृतरसस्तथा ॥
रसो विद्याधराभ्रो गुडिकाकाञ्चनाभिधा ।
तुम्बीतैलं चामृताद्यं तैलञ्च सिन्दूरादिकम् ।

तैल विल्वादिक चैव निर्गुण्डीतैलमेव च ॥
व्योषाद्य चन्दनाद्यञ्च गुञ्जाद्य गलगण्डके ।
यथायथ प्रयोक्तव्य बलदोषविभेदत ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
गलगण्डाद्यधिकारश्चतुश्चत्वारिंशोऽध्याय ।

---

## पञ्चचत्वारिंशोऽध्याय ।

### वृद्ध्यधिकार ।

### वृद्धेर्निदानम ।

क्रुद्धोऽनूर्द्धगतिर्वायु शोथशूलकरश्चरन् ।
मुष्कौ वङ्क्षणत प्राप्य फलकोषाभिवाहिनी ॥
प्रपीड्य धमनीर्वृद्धि करोति फलकोषयो ॥

क्रुद्ध अनूर्द्धगतिरधोगतिर्वायु वङ्क्षणत जङ्घासन्धे मुष्कौ प्राप्य शोथशूलकरश्चरन् सन् फलकोषाभिवाहिनीर्धमनी प्रपीड्य फलकोषयोर्वृद्धि करोति ।

दोषास्रमेदोमूत्रान्त्रै स वृद्धि सप्तधा मत ।
मूत्रान्त्रजावप्यनिलाद्धेतुभेदस्तु केवलम ॥

वृद्धिशब्दोऽत्र सञ्ज्ञाया तिक्प्रत्ययेन निष्पन्न पुलिङ्ग । क्तिप्रत्ययान्तो वृद्धिशब्दस्तु स्त्रीलिङ्ग ।

वातजस्य वृद्धेर्लक्षणम्।

वातपूर्णदृतिस्पर्शो रुक्षो वाताद्धेतुरुक्॥

अहेतुरुक् अत्र ईषदर्थे नञ। तेन स्वल्पादपि विप्रकृष्टात् कारणात् रुक् पीडा यत्र स।

पित्तजस्य लक्षणम्।

पक्वोडुम्बरसङ्काश पित्ताद्दाहोष्मपाकवान्॥

कफजस्य लक्षणम्।

कफाच्छीतो गुरु स्निग्ध कण्डूमान् कठिनोऽल्परुक्॥

रक्तजस्य लक्षणम्।

कृष्णस्फोटावृत पित्तवृद्धिलिङ्गश्च रक्तज॥

मेदोजस्य लक्षणम्।

कफवन्मेदसो वृद्धिर्मृदुस्तालफलोपम॥

मूत्रजस्य लक्षणम्।

मूत्रधारणशीलस्य मूत्रज स तु गच्छत।

अम्भोभि पूर्णदृतिवत् क्षोभ याति सरुङ् मृदु॥

मूत्रकृच्छ्रमध कुर्य्यात् सञ्चलन् फलकोषयो॥

मूत्रधारणशीलस्य पुरुषस्य मूत्रजो वृद्धिर्भवति। गच्छतस्तस्य स वृद्धि जलपूर्णचर्म्मपुटकवत् क्षोभ याति। फलकोषयोरध सञ्चलश्च मूत्रकृच्छ्रवद्व्यथा कुर्य्यात्। मूत्रकृच्छ्रमध स्याच्च चलयन् फलकोषयो। इतिपाठे फलकोषयोश्चलयन् सन् अध स्यात्, तत्र मूत्रकृच्छ्राद्वेदना च स्यादित्यर्थ। चलयन्नित्यत्र स्वार्थे णिच् चलन्नित्यर्थ।

अन्त्रवृद्धेर्निदान लक्षणञ्च।

वातकोपिभिराहारै शीततोयावगाहनै।

धारणेरणभाराध्वविषमाङ्गप्रवर्त्तनै॥

क्षोभणै क्षोभितोऽन्यैश्च क्षुद्रान्त्रावयव यदा ।
पवनो विगुणीकृत्य स्वनिवेशादधो नयेत् ॥
कुर्य्याद्वङ्क्षणसन्धिस्थो ग्रन्थ्याभ श्वयथु तदा ॥

धारण उपस्थितस्य वेगस्य । ईरण अनुपस्थितस्य वेगस्य प्रेरणम । विषमाङ्गप्रवर्त्तन वक्रत्वेनाङ्गमोटनम । अन्यानि क्षोभणानि च बलवद्विग्रह कठोरधनुराकर्षणादीनि । तै सन्दूषित सञ्चालित पवन यदा क्षुद्रान्त्रावयव विगुणीकृत्य स्वनिवेशादधोनयेत् तदा वङ्क्षणसन्धिस्थ सन् वङ्क्षणसन्धौ ग्रन्थिरूप श्वयथ कुर्य्यादित्यर्थ ।

उपेक्षिताया अन्त्रवृद्धेरवस्था ।

उपेक्ष्यमाणस्य मरुद्विवृद्धि
माध्मानरुकस्तम्भवतीञ्च कुर्य्यात् ।
स पीडितोऽन्त स्वनवान् प्रयाति
प्रध्मापयन्नेति पुनश्च मुक्त ॥

उपेक्ष्यमाणस्य चिकित्सामकुर्व्वत मरुद्वायु विवृद्धि वृद्धिरोग आध्मानरुक्स्तम्भवती कुर्य्यादित्यन्वय । स वृद्धि (तिगन्तत्वात् पुलिङ्ग ) पीडित सन् स्वनवान भूत्वा अन्त उदरान्त प्रयाति प्रविशति । मुक्तस्तु उदर प्रध्मापयन् पुनरध एति ।

असाध्यान्त्रवृद्धिमाह ।

फलकोष यदा प्राप्तो नरस्याप्रतिकारिण ।
अन्त्रवृद्धिरसाध्योऽय वातवृद्धिसमाकृति ॥

सामीप्यादत्रैव ब्रध्नमाह ।

अत्यभिष्यन्दि गुर्व्वन्नशुष्कपूत्यामिषाशनात् ।
करोति ग्रन्थिवच्छोथ दोषो वङ्क्षणसन्धिषु ॥

(द, २५)

ज्वरशूलाङ्गसादाढ्यं तं ब्रध्नमिति निर्द्दिशेत्॥
दोषोऽत्र सवातः कफः।

वृद्धेश्चिकित्सा।

वृद्धावत्यशनं मार्गमुपवासं गुरूणि च।
वेगरोधं पृष्ठयानं व्यायामं मैथुनं त्यजेत्॥

गुरूणि अन्नानि। अथवा गुरूणि अधिकभारवन्ति वस्तूनि त्यजेत् गुरुभारं नोद्वहेदित्यर्थः।

वातवृद्धौ पिबेत् स्निग्धं यथाप्राप्तं विरेचनम्।
सक्षीरं वा पिबेत् तैलं मासमेरण्डसम्भवम्॥
गुग्गुल्वेरण्डजं तैलं गोमूत्रेण पिबेन्नरः।
वातवृद्धिं जयत्याशु चिरकालानुबन्धिनीम्॥
पित्तग्रन्थिक्रमेणैव पित्तवृद्धिमुपाचरेत्।
जलौकोभिर्हरेद्रक्तं वृद्धौ पित्तसमुद्भवे॥
चन्दनं मधुकं पद्ममुशीरं नीलमुत्पलम्।
क्षीरपिष्टप्रलेपेन दाहशोथरुजापहम्॥
त्रिकटुत्रिफलाक्वाथं सक्षारलवणं पिबेत्।
विरेचनमिदं श्रेष्ठं कफवृद्धिविनाशनम्॥
लेपनं कटुतीक्ष्णोष्णं स्वेदनं रूक्षमेव च।
परिषेकोपनाहौ च सर्व्वमुष्णमिहेष्यते॥
मुहुर्मुहुर्जलौकोभिः शोणितं रक्तजे हरेत्।
पिबेद्विरेचनं वापि शर्कराक्षौद्रसंयुतम्॥
शीतमालेपनं सद्यः सर्व्वं पित्तहरं तथा।
पित्तवृद्धिक्रमं कुर्य्यादामे पक्वे च रक्तजे॥
स्वेदो मेदःसमुत्थे तु लेपयेत् सुरसादिना।

शिरोविरेचनद्रव्यै सुखोष्णैर्मूत्रसयुतै ॥
मर्द्दयेत् सूत्रप्रभव वस्त्रपट्टेन वेष्टयेत ।
मोवन्या पार्श्वतोऽपरस्याद् दिग्मेढ्रं व्रीहिमुखेन वै ॥
मुष्कोपमगच्छन्त्यासन्न वृद्धौ विचक्षण ।
वातवृद्धिक्रम कुर्य्यात् स्वेदस्तत्राग्निना हित ॥
तैलमैरण्डज पीत्वा बलासिद्ध पयोऽन्वितम् ।
आध्मानशूलोपचितामन्त्रवृद्धि जयेन्नर ॥
गन्धर्व्वहस्ततैलेन चीरेण विहित घृतम् ।
विशालामूलज चूर्णमन्त्रवृद्धि विनाशयेत् ॥
वचासर्षपकल्केन प्रलेप शोथनाशन ।
शिग्रुत्वक्सर्षपैर्लेप शोथश्लेष्मानिलापह ॥
वहुवारस्य बीजञ्च पिष्ट तत्रार्द्रके सह ।
कुरण्ड नाशयेद् भद्रे लेपनान्नात्र सशय ॥
न्यग्रोधक्षीरलेपेन ब्रध्नरोगो विनश्यति ॥
अजाक्षीरेण गोधूमकल्क कुन्दुरुकस्य वा ।
विलेपन सुखोष्ण स्याद्ब्रध्नशूलहर परम् ॥
अजाजी हवुषा कुष्ठ गोधूम वदराणि च ।
काञ्जिकेन सम पिष्ट्वा कुर्य्याद् ब्रध्ने प्रलेपनम् ॥
हरीतकी वचा शुण्ठी त्रिवृता स्वर्णपत्रिका ।
एलाद्वय देवपुष्प क्वाथयित्वा जल पिबेत् ।
अनेन प्रशम यान्ति ब्रध्नकासज्वरा ध्रुवम् ॥

वृद्धिहरो रस ।

रस गन्ध विष व्योष तथा लवणपञ्चकम् ।
त्रिक्षार जयपालञ्च मर्द्दयेद्वह्निवारिणा ॥

रक्तिमाना वटी कृत्वा पाययेत् पयसा सह ।
अनेन प्रशम यान्ति वृद्धिब्रध्नादयो गदा ॥

शतपत्राद्य तैलम् ।

दशमूल तुलामान गन्धाढ्या तत्समा मता ।
वारिद्रोणे पृथक् पक्वा पादशेष समुद्धरेत् ॥
आढक कटुतैलस्य तत्कषाये विपाचयेत् ।
स्वरस शतपत्रस्य समृणालच्छदस्य च ॥
तैलतुल्य प्रदातव्य पेष्याणीमानि दापयेद् ।
शतपत्र वला रास्ना पाठा मूर्व्वा च चित्रकम् ॥
भल्लातक वाजिगन्धा सैन्धव खदिर कणा ।
शिग्रुधुस्तूरमूलञ्च ग्रन्थिक रक्तचन्दनम् ॥
त्रायन्ती सरलोशीर कारवी पद्मिनीद्वयम ।
कालीयक च मूशली प्रत्येक पलसम्मितम ॥
अस्य तैलस्य पक्वस्य शृणु वीर्य्यमत परम् ।
अण्डवृद्ध्यन्त्रवृद्धि वा पाङ्गुल्य श्लीपद तथा ॥
पक्षाघात गृध्रसीञ्च सर्व्ववातरुजा जयेत् ।
शतपत्रादिक तैल दुर्लभ जगतीतले ॥

---

रेचन मूत्रकृद् यच्च यद्वातस्यानुलोमनम् ।
तत्सर्व्व वृद्धिरोगेषु भेषज परियोजयेत् ॥
तैल गन्धर्व्वहस्ताख्य बृहन्मन्दार तैलकम् ।
रसो वातारिनामा च योज्यान्यत्रापराणि च ॥
पर्व्वणि सलिलोच्छ्वासाद रोगा रसनिमित्तजा. ।
वृद्धिश्लीपद गण्डाद्याश्चान्येऽपि श्लेष्मवातजा ॥

वङ्क्ते वा प्रवर्त्तन्ते पच्चान्तेऽहितसेविनाम् ।
उष्णवीर्य्यं तदा पथ्यं सशुष्कं लघुभोजनम ॥
पयोगुणाधिकञ्चान्नं स्नानाभ्यङ्गं विवर्ज्जयेत् ॥
अनभिष्यन्दि पानान्नं नातिशीता क्रिया तथा ।
वृद्धिरोगे हिताय स्याद्विपरीतं विवर्ज्जयेत् ॥

---

## श्लीपदाधिकार ।

### श्लीपदस्य सामान्य लक्षणम् ।

य सज्वरो वङ्क्षणजो भृशार्त्ति
शोथो नृणा पादगत क्रमेण ।
तच्छ्लीपद स्यात् करकर्णनेत्र-
शिश्नौष्ठनासास्वपि केचिदाहु ॥

### वातज श्लीपदस्य लक्षणम ।

वातज कृष्णरूक्ष हि स्फुटित तीव्रवेदनम् ।
अनिमित्तरुज चास्य बहुशो ज्वर एव च ॥

### पित्तजस्य लक्षणम् ।

पित्तज पीतसङ्काश दाहज्वरयुत भृशम् ॥

### कफजस्य लक्षणम् ।

श्लैष्मिकन्तु भवेत् स्निग्ध तथा पाण्डु गुरु स्थिरम् ॥
त्रीण्यप्येतानि जानीयाच्छ्लीपदानि कफोच्छ्रयात् ।
गुरुत्वञ्च महत्त्वञ्च यस्मान्नास्ति कफ विना ॥

असाध्य श्लीपदमाह।

वल्मीकमिव सञ्जात कण्टकैरुपचीयते।
अब्दात्मक महत्तच्च वर्ज्जनीय विशेषत ॥
स्रावाणमत्युन्नत सर्व्वलिङ्ग
सकण्डुक श्लेष्मयुत विवर्ज्यम् ॥
पुराणोदकभूयिष्ठा सर्व्वर्त्तुषु च शीतला ।
ये देशास्तेषु जायन्ते श्लीपदानि विशेषत ॥

श्लीपदस्य चिकित्सा।

लङ्घनालेपनस्वेदरेचनै रक्तमोक्षणै ।
प्राय श्लेष्महरै रुक्षै श्लीपद समुपाचरेत् ॥

श्लीपदहर प्रलेप ।

धुस्तूरैरण्डनिर्गुण्डी वर्षाभू शिग्रु सर्षपै ।
प्रलेप श्लीपद हन्ति चिरोत्थमपि दारुणम् ॥

वर्षाभू श्वेतपुनर्नवा।

---

निष्पिष्टमारनालेन रुपिकामूलवल्कलम ।
प्रलेपाच्छ्लीपद हन्ति बद्धमूलमपि स्थिरम् ॥

रुपिका श्वेतार्क तस्य मूलस्य वल्कलम्

हितश्चालेपने नित्य चित्रको देवदारु वा।
सिद्धार्थशिग्रुकल्को वा सुखोष्णो मूत्रपेषित ॥
शाखोटवल्कलक्काथ गोमूत्रेण युत पिबेत्।
श्लीपदाना विनाशाय मेदोदोषनिवृत्तये ॥
रजनी गुडसम्मिश्र गोमूत्रेण पिबेन्नर ।
वर्षोत्थ श्लीपद हन्ति दद्रुकुष्ठ विशेषत ॥

श्लीपदघ्नो रसोऽभ्यासाद् गुडूच्यास्तैलसंयुत ॥
वर्षाभूस्त्रिफलाचूर्णं पिप्पल्या सह योजितम ।
सक्षौद्रं श्लीपद हन्ति चिरोत्थमपि दारुणम् ॥
गन्धर्व्वतैलसिद्धां हरीतकीं गोऽम्बुना पिबति ।
श्लीपदविबन्धमुक्तो भवत्यसौ सप्तरात्रेण ॥
गन्धर्व्वतैल एरण्डतैलम । गोऽम्बुना गोमूत्रेण ।
धान्याम्लं तैलसंयुक्तं कफवातविनाशनम् ।
दीपनञ्चामदोषघ्नमेतच्छ्लीपदनाशनम् ॥
काञ्जिकेन पिबेच्चूर्णं लूनैर्वा वृद्धदारजम् ॥
त्रिकटु त्रिफला दारु निम्बतैला पुनर्णवा ।
निशाद्वय देवपुष्पमरणाच्छेत्न्वारुणीम ॥
क्वाथयित्वा पिबेत् तोयं यवक्षारसमायुतम् ।
अनेन प्रशमं यान्ति व्याधय श्लीपदादय ॥
शोथाधिकारकथिता क्रियाश्चात्र प्रयोजयेत् ।
वृद्धदारस्य चूर्णं पिण्याघ्य तथैव च ।
कृष्णाद्यो मोदकश्चैव घृतं सौरेश्वराभिधम् ॥
तथा विडङ्गादितैलं नित्यं नन्दरसस्तथा ।
श्लीपदघ्ना भवन्त्येते श्लीपदगजकेशरी ॥

श्लीपदे पथ्यापथ्यानि ।

कफघ्नं मारकं पानमन्नं वह्निकरञ्च यत् ।
नाभिष्यन्दकरं पथ्यं ज्ञेयमन्यद्विजानता ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने मुष्कवृद्धयन्त्रवृद्धि-
श्लीपदाधिकार पञ्चचत्वारिंशोऽध्याय ।

# षट्चत्वारिंशोऽध्यायः ।

—— o ——

## भग्नाधिकार ।

भग्नस्य भेदमाह ।

भग्न समासाद् द्विविध हुताश ।
काण्डे च सन्धौ च हि तत्र सन्धौ ।
उत्पिष्ट विश्लिष्ट-विवर्त्तितानि
तिर्य्यग्गत क्षिप्तमधश्च षड्धा ॥

भग्नमित्यत्र भावार्थे क्तप्रत्ययस्तेन भग्न भङ्ग स चात्र विश्लेषोऽप्यभिप्रेत । समासात् सङ्क्षेपात् । हुताश हे अग्निवेश । काण्डे सन्धिपर्य्यन्ते एकखण्डे । सन्धौ द्वयोरस्थ्नो सन्धानस्थाने । तत्र सन्धौ उत्पिष्टादिभेदै षट्प्रकार भग्न भवति । अध अधोभग्नमित्यर्थ । स्वल्पवक्तव्यत्वेन सन्धिभग्नस्यादौ विवरणम् ।

सन्धिभग्नस्य सामान्य लक्षणमुत्पिष्ट-
विश्लिष्टयोश्च लक्षणम् ।

प्रसारणाकुञ्चनवर्त्तनोग्रा
रुक् स्पर्शविद्वेषणमेतदुक्तम् ।
सामान्यत सन्धिगतस्य लिङ्ग
मुत्पिष्टसन्धे श्वयथ समन्तात् ॥
विशेषतो रात्रिभवा रुजश्च
विश्लिष्टके तौ च रुजा च नित्यम् ॥

वर्त्तन परिवर्त्तनम् । उत्पिष्टस्य लिङ्गमाह । उत्पिष्टसन्धे उत्पिष्ट द्वाभ्यामस्थिभ्या पिष्ट सन्धिर्यस्य तस्य अथवा

उत्पिष्टश्चासौ सन्धिश्चेति कर्म्मधारय । समन्तात् उभयभागयो । विश्लिष्टमाह विश्लिष्टके इत्यादि । विश्लिष्टजे इतिपाठे विश्लेषजे इत्यर्थ । तौ चेति तौ रात्रिरुक्समन्त।च्छोथौ । रुजा च नित्य सदा रुजाधिका भवतीत्युत्पिष्टाद्भेद ।

विवर्त्तित तिर्य्यग्गत क्षिप्ताधोभग्नाना लक्षणानि ।

विवर्त्तिते पार्श्वरुजश्च तीव्रा
स्तिर्य्यग्गते तीव्ररुजो भवन्ति ।
क्षिप्तेऽतिशूल विषमञ्च सक्थ्नो
क्षिप्ते त्वधो रुग्विघटश्च सन्धे ॥

विवर्त्तिते विपरीत वर्त्तिते अस्थिद्वयोपरिवर्त्तिते, पार्श्वरुज मन्धिस्थितास्थिखण्डद्वयपार्श्वयो रुज ।

काण्डभग्नमाह ।

भग्नञ्च काण्डे बहुधा प्रयाति
समासतो नामभिरेव तुल्यम् ॥
काण्डे त्वथ कर्कटकाश्वकर्णौ
विचूर्णित पिच्चितमस्थिछल्लितम् ।
काण्डेषु भग्न ह्यतिपातितञ्च
मज्जागत विस्फुटितञ्च वक्रम् ॥
छिन्न द्विधा द्वादशधा च काण्डे
स्रस्ताङ्गता शोथरुजातिवृद्धि ।
सपीड्यमाने भवतीह शब्द
स्पर्शासह स्पन्दनतोदशूलम् ॥
सर्व्वास्ववस्थासु न शर्म्मलाभो
भग्नस्य काण्डे खलु चिह्नमेतत् ॥

अत सन्धिभग्नानन्तरं काण्डभग्नमाह। कर्कटक अस्थि विश्लेषपूर्व्वको मध्ये प्रोन्नत पार्श्वयोरवनत कर्कटतुल्यरूपत्वात् कर्कटक । म-ाकर्णं अश्वकर्णवद विपुत ।स्थि।-े । ।ाद वकर्ण । विचूर्णित चूर्णितमस्थि तच्च शब्दस्पर्शाभ्या बोद्धव्यम्। पिच्चित पिष्टास्थि ताच्च नियन्त्रितबहुशोथम्। छलित वितिष्टम्। काण्डेषु भग्न काण्डभग्नम्। यद्यपि कर्कटकादि सर्व्वमेव काण्डभग्न तथापि इय काण्डभग्नसञ्ज्ञा विशिष्टा। अत्र भग्न भङ्ग त्रुटि तेन सर्व्वथा त्रुटित पृथग्भूत त्वचि स्थित यत्र काण्ड तत् काण्ड भग्नम्। अतिपातितमर्शेषेण च्छित्वा पातितमस्थि। मज्जागत अस्थ्यवयवोऽस्थिमध्ये प्रविश्य मज्जान नि सारयति। विस्फुटित स्तोकविदीर्णम्। वक्र स्थान त्यक्त्वा कुटिलीभूतम्। छिन्न द्विधा एव विदीर्ण सलग्न अपर विदीर्य्य द्विधाभूतम्। द्वादशधा च काण्डे। काण्डे च भग्न द्वादशधेत्यन्वय। काण्डभग्नस्य सामान्य लक्षणमाह स्रस्ताङ्गतेत्यादि। स्पर्शासहमिति काण्ड-भग्नस्य विशेषणम। शूल शूलेनेव व्यथा। रुजा सामान्या पीडा। सर्व्वास्ववस्थासु शयनासनादिषु।

कष्टसाध्यमाह।

अल्पाशिनोऽनात्मवतो जन्तोर्वातात्मकस्य च।
उपद्रवैर्वा जुष्टस्य भग्न कृच्छ्रेण सिध्यति॥

अनात्मवतो रोगप्रतीकारे यत्नरहितस्य। वातात्मकस्य वातप्रकृते। उपद्रवैर्ज्वराध्मान मोह मूत्र पुरीषसङ्गादिभि।

असाध्यमाह।

भिन्न कपाल कट्यान्तु सन्धिमुक्त तथा च्युतम्।
जघन प्रतिपिष्टञ्च वर्ज्जयेद्धि विचक्षण॥

कपाल जानु नितम्बास [illegible] तालु शङ्ख वङ्क्षण-शिरोऽस्थीनि कपालानि । तथा च्युत तथा च्छिन्नम् । प्रतिपिष्टमुत्पिष्टम् ।

पुनरसाध्यमाह ।

असंश्लिष्टकपालञ्च ललाटे चूर्णितञ्च यत् ।
भग्नं स्तनान्तरे पृष्ठे शङ्खे मूर्द्ध्नि च वर्ज्जयेत् ॥

असंश्लिष्टकपालमिति [illegible] स्तनान्तरे उरसि । मूर्द्ध्नि चूडास्थाने ।

अपरमसाध्यमाह ।

सम्यक संहितमप्यस्थि दुर्न्यासाद्दुष्टवन्धनात् ।
सङ्क्षोभाद्वापि यद्गच्छेद्विक्रिया तच्च वर्ज्जयेत ॥

सम्यक संहितमपि सम्यगयोजितमपि अस्थि दुर्न्यासात् दुःस्थापनात् सन्यस्तमपि दुष्टवन्धनात् सुवद्धमपि सङ्क्षोभात् अभिघातादिना सञ्चालनात् यद्विक्रिया गच्छेत् विकृत भवति तद्वर्ज्जयेत् ।

तरुणास्थीनि नाम्यन्ते भिद्यन्ते नलकानि तु ।
कपालानि विभज्यन्ते स्फुटन्ति रुचकानि च ॥

तरुणास्थीनि घ्राणकर्णाक्षिगुदेषु कोमलास्थीनि नाम्यन्ते वक्रीभवन्ति । तेनात्र वक्रतालक्षणं भग्नम् । नलकानि नलादीनि नाडीवत् सरन्ध्राण्यस्थिपर्व्वाणि भिद्यन्ते अस्थ्यन्तरानुप्रवेशाद्विदीर्य्यन्ते । कपालानि जानुनितम्बासगण्डतालुशङ्खाशिरोऽस्थीनि विभज्यन्ते । स्फुटन्ति रुचकानि दन्ता स्फुटन्ति तुद्यन्ति । अस्थीनि तरुण नलक कपाल रुचक वलयभेदात्पञ्चविधानि ।

तत्र रुचकानि चेति चकाराद्दलयान्यपि तुष्यन्तीति बोद्धव्यम्। पाख्यो पार्श्वयुगे पृष्ठे वक्षोजठरपायुषु। पादयोरपि चास्थीनि वलयानि वभाषिरे॥ इति।

भग्नस्य चिकित्सा।

आदौ भग्न विदित्वा तु सेचयेच्छीतलाम्बुना।
पङ्केनालेपन कार्य्य वन्धनञ्च कुशान्वितम्॥
सप्ताहादथ सप्ताहात् सौम्येष्वतुषु वन्धनम्।
साधारणेषु कर्त्तव्य पञ्चमे पञ्चमेऽहनि॥
आग्नेयेषु त्र्यहात् कार्य्य भग्नदोषनशेन वा।
तत्रातिशिथिले वन्धे सन्धिस्थैर्य्य न जायते॥
गाढेनापि त्वगादीना शोफो रुक् पाक एव च।
तस्मात साधारण वन्ध भग्ने शसन्ति तद्विद॥
भग्ने लेपाय मञ्जिष्ठा मधुकञ्चाम्लपेषितम्।
शतधौतघृतोन्मिश्र शालिपिष्टञ्च लेपनम॥
रसोनमधुलाक्षाज्यसिताकल्क समश्नताम्।
छिन्नभिन्नच्युतास्थ्नाञ्च सन्धानमचिराद्भवेत्॥
सघृतञ्चास्थिसङ्हार लाक्षागोधूममर्ज्जुनम।
सन्धिभग्नेऽस्थिसम्भग्ने पिबेत क्षीरेण वा पुन॥
पीत वराटिकाचूर्ण पयसा भग्नदोषहृत्॥
अवनामितमुन्नह्येदुन्नतञ्चावपीडयेत्।
अञ्चेदतिक्षिप्तमधोगतञ्चोपरि वर्त्तयेत॥
सव्रणस्य तु भग्नस्य व्रण सर्पिर्मधूत्तरै।
प्रतिसार्य्य कषायैश्च शेष भग्नवदाचरेत्॥
भग्न नैति यथा पाक प्रयतेत तथा भिषक।

वातव्याधिविनिर्द्दिष्टान् स्नेहांश्चात्र प्रयोजयेत् ॥
गन्धतैलादिकञ्चात्र भिषग् बुद्ध्वा प्रयोजयेत् ॥

भग्ने पथ्यापथ्यानि ।

मांस मांसरस क्षीर सर्पिर्यूष कलायज ।
बृंहणञ्चान्नपानञ्च देय भग्नाय जानता ॥
लवण कटुक क्षारमम्ल मैथुनमातपम ।
व्यायामञ्च न सेवेत भग्नो रूक्षान्नमेव च ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
भग्नाधिकार षट्चत्वारिंशोऽध्याय ।

---

## सप्तचत्वारिंशोऽध्यायः ।

वातव्याध्यधिकार ।

वातव्याधीना विप्रकृष्ट निदान सम्प्राप्तिश्च ।

रूक्ष शीताल्प लघ्वन्न व्यवायातिप्रजागरै ।
विषमादुपचाराच्च दोषासृक्स्रवणादपि ॥
लङ्घन प्लवनात्यध्व व्यायामादि विचेष्टितै ।
धातूना सङ्क्षयाच्चिन्ता शोकरोगातिकर्षणात् ॥
वेगसन्धारणादामादभिघातादभोजनात् ।
मर्म्माबाधाद् गजोष्ट्राश्व शीघ्रयानापतसनात् ॥
देहे स्रोतासि रिक्तानि पूरयित्वानिलो बली ।
करोति विविधान् व्याधीन् सर्व्वाङ्गैकाङ्गसंश्रयान् ॥

(द, २६)

अव्यक्त लक्षण तेषा पूर्व्वरूपमिति स्मृतम्।
आत्मरूपन्तु यद् व्यक्तमपायो लघुता पुन ॥
सङ्कोच पर्व्वणा स्तम्भो भङ्गोऽस्था पर्व्वणामपि।
रोमहर्ष प्रलापश्च पाणिपृष्ठ शिरोग्रह ॥
खाञ्ज पाङ्गुल्यकुब्जत्व शोषोऽङ्गानामनिद्रता।
गर्भशुक्र रजोनाश स्पन्दन गात्रसुप्तता ॥
शिरोनासाक्षि जत्रूणा ग्रीवायाश्चापि हुण्डनम्।
भेदस्तोदोऽर्त्तिराक्षेपो मुहुश्चायास एव च ॥
एव विधानि रूपाणि करोति कुपितोऽनिल।
हेतुस्थान विशेषाच्च भवेद्रोगविशेषकृत् ॥

कोष्ठाश्रितस्य वातस्य लक्षणम्।

तत्र कोष्ठाश्रिते दुष्टे निग्रहो मूत्रवर्च्चसो।
व्रध्नहृद्रोग गुल्मार्श पार्श्वशूलञ्च मारुते ॥

गुदगतस्य तस्य लक्षणम।

ग्रहो विण्मूत्र वाताना शूलाध्मानाश्मशर्करा।
जङ्घोरुत्रिक पार्श्वांस पृष्ठरोगो गुदे स्थिते ॥

आमाशयगतस्य लक्षणम्।

रुक् पार्श्वोदरहृन्नाभेस्तृष्णोद्गार विसूचिका।
कास कण्ठास्यशोषश्च श्वासश्चाम।शयस्थिते ॥

पक्काशयगतस्य लक्षणम।

पक्काशयस्थोऽन्त्रकूज शूलाटोपौ करोति च।
कृच्छ्रमूल पुरीषत्वमानाह त्रिकवेदनाम् ॥
(आटोपो वातस्य क्षुब्धत्वम्)।

श्रोत्रादीन्द्रियगतस्य लक्षणम् ।

श्रोत्रादिष्विन्द्रियवध कुर्य्याद् दुष्ट समीरण ॥

त्वग्गतस्य लक्षणम् ।

त्वग्रुक्षा स्फुटिता सुप्ता कृशा कृष्णा च तुद्यते ।
आतन्यते सरागा च पर्व्वरुक्_त्वग्गतेऽनिले ॥

रक्तगतस्य लक्षणम् ।

रुजस्तीव्रा ससन्तापा वैवर्ण्य कृशतारुचि ।
गात्रे चारु षि भुक्तस्य स्तम्भश्चासृग्गतेऽनिले ॥

मासमेदोगतस्य लक्षणम् ।

गुर्व्वङ्ग तुद्यतेऽत्यर्थं दण्डमुष्टिहत यथा ।
सरुक् श्रमितमत्यर्थं मासमेदोगतेऽनिले ॥

मज्जास्थिगतस्य लक्षणम् ।

भेदोऽस्थ्ना पर्व्वणा सन्धिशूल मासबलक्षय ।
अस्वप्न सन्तता रुक् च मज्जास्थि कुपितेऽनिले ॥

शुक्रगतस्य लक्षणम् ।

क्षिप्र मुञ्चति वध्नाति शुक्र गर्भमथापि वा ।
विकृति जनयेच्चापि शुक्रस्य कुपितोऽनिल ॥

शिरागतस्य लक्षणम् ।

कुर्य्याच्छिरागत शूल शिराकुञ्चन पूरणम् ।
सवाह्याभ्यन्तरायाम खल्ली कौञ्जमथापि वा ॥

स्नायुगतस्य लक्षणम् ।

सर्व्वाङ्गैकाङ्ग रोगांश्च कुर्य्यात् स्नायुगतोऽनिल ॥

सन्धिगतस्य लक्षणम् ।

हन्ति सन्धिगत सन्धीन् शूलशोथौ करोति च ॥

सर्व्वाङ्गगतस्य लक्षणम्।

सर्व्वाङ्गकुपिते वाते गात्रस्फुरण भञ्जनम्।
जायन्ते वेदनास्तीव्रा स्फुटन्तीवास्य सन्धय ॥

पित्तकफावृताना प्राणादीना वायूणा लक्षणान्युच्यन्ते।

प्राणे पित्तावृते च्छर्द्दि र्दाहश्चैवोपजायते।
दौर्ब्बल्य मदन तन्द्रा वैरस्यञ्च कफावृते ॥
अपाने पित्तयुक्ते तु दाहौष्ण्यरक्तमूत्रता।
अध कायि गुरुत्वञ्च शीतता च कफावृते ॥
स्वेददाहौष्ण्यमूर्च्छा स्यु समाने पित्तसवृते।
कफेन सक्ते विण्मूत्रे गात्रहर्षश्च जायते ॥
उदाने पित्तयुक्ते तु दाहो मूर्च्छा भ्रम क्लम।
अस्वेदहर्षौ मन्दोऽग्नि शीतता च कफावृते ॥
व्याने पित्तावृते दाहो गात्रविक्षेपण क्लम।
स्तम्भोऽथ दण्डकश्चापि शूलशोथौ कफावृते ॥

आक्षेपकस्य सामान्य लक्षणम्।

यदा तु धमनी सर्व्वा कुपितोऽभ्येति मारुत।
तदाक्षिपत्याशु मुहुर्मुहुर्देह मुहुश्चर।
मुहुर्मुहुश्चाक्षेपणादाक्षेपक इति स्मृत ॥
गजारूढजनस्येव गात्रविक्षेपण बुधा।
आहुराक्षेपक व्याधि गात्रस्याक्षेपणान्मुहु ॥

आक्षेपक विशेषस्यापतन्त्रकस्य लक्षणम्।

क्रुद्धे स्वै कोपनैर्वायु स्थानादूर्द्ध्व प्रपद्यते।
पीडयन् हृदय गत्वा शिर शङ्खौ च पीडयन् ॥
धनुर्व्वन्नमयेद् गात्राण्याक्षिपेन्मोहयेत् तथा।

स कृच्छ्रादुच्छ्‌सेदुच्चै स्तब्धाक्षोऽथ निमीलक ॥
कपोत इव कूजेच्च नि सञ्ज्ञ सोऽपतन्त्रक ॥

अपतानकस्य लक्षणम् ।

दृष्टि सस्तभ्य सञ्ज्ञाञ्च हत्वा कण्ठेन कूजति ।
हृदि मुक्ते नर स्वास्थ्य याति मोह वृते पुन ॥
वायुना दारुण प्राहुरेके तदपतानकम् ॥

दण्डापतानकस्य लक्षणम् ।

कफान्वितो भृश वायुस्तास्वेव यदि तिष्ठति ।
दण्डवत् स्तम्भयेद् देह स तु दण्डापतानक ॥
तासु धमनीषु ।

धनु स्तम्भस्य लक्षणम् ।

धनुस्तुल्यो नमेद् यस्तु स धनुस्तम्भसञ्ज्ञित ।
विवर्णवक्रवदन स्रस्ताङ्गो नष्टचेतन ॥
प्रस्वेदवान् धनु स्तम्भो दशरात्र न जीवति ॥
विवर्णवक्रवदन मुखकपोलादीना विवर्णत्व, चिवुकस्य वक्रत्व ज्ञेयम ।

अन्तरायामस्य लक्षणम ।

अङ्गुली गुल्फजठरहृद वक्षोगल सश्रित ।
स्नायुप्रतानमनिलो यदाक्षिपति वेगवान् ॥
विष्टब्धाक्ष स्तब्धहनुर्भग्नपार्श्व कफ वमन ।
अभ्यन्तर धनुरिव यदा नमति मानव ॥
तदास्याभ्यन्तरायाम कुरुते मारुतो बली ॥

वाह्यायामस्य लक्षणम् ।

वाह्यस्नायुप्रतानस्थो वाह्यायाम करोति च ।
तमसाध्य बुधा प्राहुर्वक्ष कट्यूरुभञ्जनम् ॥

आक्षेपस्य दोषानुबन्धादि भेदेन चत्वारो भेदा ।
कफपित्तान्वितो वायुर्वायुरेव च केवल ।
कुर्य्यादाक्षेपकञ्चान्य चतुर्थमभिघातजम ॥
गर्भपातनिमित्तश्च शोणितातिस्रवाच्च य ।
अभिघातनिमित्तश्च न सिध्यत्यपतानक ॥
गते वेगे भवेत् स्वास्थ्य सर्व्वेष्वाक्षेपकादिषु ॥

कुब्जस्य लक्षणम ।

हृदय यदि वा पृष्ठमुन्नत क्रमश सरुक् ।
क्रुद्धो वायुर्यदा कुर्य्यात तदा त कुब्जमादिशेत् ॥

पक्षवधस्य लक्षणम ।

गृहीत्वार्द्ध तनोर्वायु शिरास्नायुर्विशोष्य च ।
पक्षमन्यतम हन्ति सन्धिवन्धान् विमोक्षयन् ॥
कृत्स्नार्द्धकायस्तस्य स्यादकर्म्मण्यो विचेतन ।
एकाङ्गरोग त केचिदन्ये पक्षवध विदु ॥
सर्व्वाङ्गरोगस्तद्वच्च सर्व्वकायाश्रितेऽनिले ॥
दाह सन्तापमूर्च्छा स्युर्वायौ पित्तसमन्विते ।
शैत्यशोथ गुरुत्वानि तस्मिन्नेव कफावृते ॥
शुद्धवातहत पक्ष कृच्छ्रसाध्यतम विदु ।
साध्यमन्येन सयुक्तमसाध्य क्षयहेतुकम् ॥
क्षयहेतुक धातुक्षयकुपित शुद्धवातजमित्यर्थं ।

अर्द्दितस्य सम्प्राप्तिर्लक्षणञ्च ।

उच्चैर्व्याहरतोऽत्यर्थं खादत कठिनानि वा ।
हसतो जृम्भतो वापि भारात् विषमशायिन ॥
शिरोनासौष्ठ चिवुक ललाटेक्षण सन्धिग ।

अर्द्दयत्यनिलो वक्त्रमर्द्दित जनयेत तत ॥
वक्रीभवति वक्त्रार्द्ध ग्रीवा चाप्यपवर्त्तते ।
शिरश्चलति वाक्सङ्गो नेत्रादीनाञ्च वैकृतम् ॥
ग्रीवा चिवुक दन्ताना तस्मिन् पार्श्वे च वेदना ।
तमर्द्दितमिति प्राहुर्व्याधि व्याधिविशारदा ॥
वातात् पित्तात कफाच्च स्यात् त्रिविध तत् समासत ।
लालास्रावो व्यथा कम्प स्फुरण हनुवाग्ग्रह ॥
ओष्ठयो श्वयथु शूलञ्चार्द्दिते वातजे भवेत् ।
पीतमास्य ज्वरस्तृष्णा पित्तजे मोहधूपने ॥
गण्डे शिरसि मन्याया शोथ स्तम्भ कफात्मके ॥

अर्द्दितस्यासाध्यस्य लक्षणम् ।

क्षीणस्यानिमिषाक्षस्य प्रसक्ताव्यक्तभाषिण ।
न सिध्यत्यर्द्दित गाढ त्रिवर्ष वेपनस्य च ॥

हनुग्रहस्य निदान लक्षणञ्च ।

जिह्वा निर्लेखनाच्छुष्क भक्षणादभिघातत ।
कुपितो हनुमूलस्थ स्रंसयित्वानिलो हनुम ॥
करोति विवृतास्यत्वमथवा सवृतास्यताम ।
हनुग्रह स तेन स्यात् कृच्छ्राच्चर्व्वण भाषणम् ॥

स्रसयित्वा अध कृत्वा, निर्लेखन कर्षणम् ।

मन्यास्तम्भस्य निदान लक्षणञ्च ।

दिवास्वप्नासमस्थान विकृतोर्द्ध निरीक्षणै ।
मन्यास्तम्भ प्रकुरुते स एव श्लेष्मणावृत ॥

जिह्वास्तम्भस्य लक्षणम ।

वाग्वाहिनी शिरासस्थो जिह्वा स्तम्भयतेऽनिल ।
जिह्वास्तम्भ स तेनान्न पान वाक्येष्वनीशता ॥

शिरोग्रहस्य लक्षणम्।

रक्तमाश्रित्य पवनः कुर्य्यान्मूर्द्धधराः शिराः।
रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिरोग्रहः॥

गृध्रस्या लक्षणम।

स्फिक्पूर्व्वा कटिपृष्ठोरुजानुजङ्घा पदं क्रमात्।
गृध्रसी स्तम्भरुक्तोदैर्गृह्णाति स्पन्दते मुहुः॥
वाताद्वातकफाभ्यां सा विज्ञेया द्विविधा पुनः।
वातजायां भवेत् तोदो देहस्यातीव वक्रता॥
जानुजङ्घोरुसन्धीनां स्फुरणं स्तम्भता भृशम्।
वातश्लेष्मोद्भवायास्तु गौरवं वह्निमार्द्दवम्॥
तन्द्रा मुखप्रसेकश्च भक्तद्वेषस्तथैव च॥

विश्वच्या लक्षणम्।

तलं प्रत्यङ्गुलीनां या कण्डरा बाहुपृष्ठतः।
बाह्वोः कर्म्मक्षयकरी विश्वची सा निगद्यते॥

विश्वाचीत्यपि पाठः। कण्डरा महास्नायवः। तलं हस्तस्योपरिभागः। तलशब्दोऽत्र उपरिवाचकः। यथा, भूतलमिति। तेनायमर्थः। या बाहुपृष्ठतः बाह्वोः पृष्ठमारभ्य तलं प्रतिहस्ततलं यावद्गत्वोत्क्रम्य अङ्गुलीनां या कण्डराः ताः सन्दूष्य बाह्वोः प्रसारणाकुञ्चनादि कर्म्मक्षयकरी भवति सा इह वातव्याधिषु विश्वचीत्युच्यते। बाह्वोरिति द्वित्वं सम्भवपरम्। एकस्मिन्नपि बाहौ विश्वची भवति।

क्रोष्टुकशीर्षस्य लक्षणम्।

वातशोणितजः शोथो जानुमध्ये महारुजः।
ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलः क्रोष्टुकशीर्षवत्॥

क्रोष्टुकः शृगालः।

खञ्जस्य पङ्गोश्च लक्षणम् ।

वायु कट्याश्रित सक्थ्न कण्डरामाक्षिपेद् यदा ।
खञ्जस्तदा भवेज्जन्तु पङ्गु सक्थ्नोर्द्वयोर्वधात् ॥

कलायखञ्जस्य लक्षणम ।

प्रक्रामन् वेपते यस्तु खञ्जन्निव च गच्छति ।
कलायखञ्ज त विद्यान्मुक्तसन्धि प्रवर्द्धनम ॥

प्रक्रामन् गमनमारभमाण । कलायखञ्ज इति शास्त्रे रूढ़ा सञ्ज्ञा न तु यौगिकी ।

वातकण्टकस्य लक्षणम ।

रुक् पादे विषमे न्यस्ते श्रमाद् वा जायते यदा ।
वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥

पाददाहस्य लक्षणम ।

पादयो कुरुते दाह पित्तासृक् सहितोऽनिल ।
विशेषतश्चक्रमणात् पाददाह तमादिशेत् ॥

पादहर्षस्य लक्षणम ।

हृष्येते चरणौ यस्य भवेताञ्चापि सुप्तकौ ।
पादहर्ष स विज्ञेय कफवात प्रकोपज ॥

हृष्येते रोमाञ्चितौ भवत । सुप्तकौ झिनि झिनि युक्तौ इति भावमिश्र ।

बाहुशोषस्य लक्षणम् ।

अंसदेशे स्थितो वायु शोषयेदंसबन्धनम् ।
अंसबन्धनशोषात् स्याद् बाहुशोष सवेदन ॥
शिरा, सङ्कोच्य बाहुस्था स कुर्य्यादवबाहुकम् ॥

मूक मिन्मिण गद्गदाना लक्षणम् ।

आवृत्य वायु सकफो धमनो शब्दवाहिनी ।
नरान् करोत्यक्रियकान् मूक मिन्मिण गद्गदान् ॥

अक्रियकान् वचनक्रियाव्यतिक्रमयुक्तान् ।

तूण्या लक्षणम् ।

अधो या वेदना याति वर्च्चो मूत्राशयोत्थिता ।
भिन्दतीव गुदोपस्थ सा तूणी नामतो मता ॥

प्रतितूण्या लक्षणम ।

गुदोपस्थोत्थिता या तु प्रतिलोम प्रधाविता ।
वेगै पक्काशय याति प्रतितूणीति सोच्यते ॥

आध्मानस्य लक्षणम् ।

साटोपमत्युग्ररुजमाध्मातमुदर भृशम् ।
आध्मानमिति जानीयाद्द घोर वातनिरोधजम् ॥

प्रत्याध्मानस्य लक्षणम् ।

विमुक्तपार्श्वं हृदय तदेवामाशयोत्थितम् ।
प्रत्याध्मान विजानीयात् कफव्याकुलितानिलम् ॥

विमुक्तपार्श्वहृदय पार्श्वहृदये विहाय जात तदेवाध्मान कफव्याकुलितानिल कफेन विरुद्धवातम ।

वाताष्ठीलाया लक्षणम ।

नाभेरधस्तात् सञ्जात सञ्चारी यदि वाचल ।
अष्ठीलावद्द घनो ग्रन्थिरूर्द्धमायत उन्नत ॥
वाताष्ठीला विजानीयाद्द वहिर्मार्गावरोधिनीम् ॥

प्रत्यष्ठीलाया लक्षणम ।

एतामेव रुजोपेता वातविण्मूत्र रोधिनीम् ।
प्रत्यष्ठीलामिति वदेज्जठरे तिर्य्यगुत्थिताम् ॥

वस्तिवातस्य लक्षणम ।

मारुतेऽविगुणे वस्तौ मूत्र सम्यक् प्रवर्त्तते ।
विकारा विविधाश्चात प्रतिलोमे भवन्ति च ॥

वेपथोर्लक्षणम् ।

सर्व्वाङ्गकम्प शिरसो वायुर्वेपथुसञ्ज्ञक ॥

शिरस शिर कम्प इत्यर्थ । वायुर्वायुरोग ।

खल्या लक्षणम् ।

खल्ली तु पादजङ्घोरु करमूलावमोटनी ॥
स्थाननामानुरूपैश्च लिङ्गै शेषान् विनिर्द्दिशेत् ॥
सर्व्वेष्वेतेषु ससर्ग पित्ताद्यैरुपलक्षयेत ॥
हनुस्तम्भार्द्दिताक्षेप पक्षाघातापतानका ।
कालेन महता व्याना यत्नात् सिध्यन्ति वा न वा ॥
नवान् बलवतस्त्वेतान् साधयेन्निरुपद्रवान् ॥
विसर्प दाहरुक् सङ्गमूर्च्छारुच्यग्निमार्द्दवै ।
क्षीणमासबल वाता घ्नन्ति पक्षवधादय ॥
शून सुप्तत्वच भग्न कम्पाध्माननिपीडितम् ।
अर्त्तिमन्त नरञ्चाशु वातव्याधिर्विनाशयेत् ॥
अव्याहतगतिर्यस्य स्थानस्थ प्रकृतिस्थित ।
वायु स्यात् सोऽधिक जीवेद्द् वीतरोग समा शतम् ॥

वातव्याधीना चिकित्सा।

स्वादम्ललवणै स्निग्धैराहारैर्वातरोगिण।
अभ्यङ्ग स्नेह वस्त्याद्यै सर्व्वानेवोपपादयेत्॥
विशेषतस्तु कोष्ठस्थे वाते चीर पिबेन्नर।
आमाशयस्थे शुद्धस्य यथारोगहरी क्रिया॥
आमाशयगते वाते च्छर्द्दिताय यथाक्रमम्।
रुच्च स्वेदो लङ्घनञ्च कर्त्तव्य वह्निदीपनम्॥
पक्काशयगते वाते हित स्नेह विरेचनम्॥
कार्य्यो वस्तिगते वापि विधिर्वस्तिविशोधन।
त्वङ्मासासृक् शिराप्राप्ते कुर्य्याच्चासृग् विमोचणम्॥
स्वेदाभ्यङ्गावगाहाश्च हृद्य चान्न त्वगाश्रिते॥
स्नेहोपनाहाग्निकर्म्म वन्धनोन्मर्द्दनानि च।
स्नायुसन्ध्यस्थि सम्प्राप्ते कुर्य्याद्द वाते विचच्चण॥
शीता प्रदेहा रक्तस्थे विरेको रक्तमोच्चणम्।
विरेको मासमेद स्थे निरूहा शमनानि च॥
वाह्याभ्यन्तरत स्नेहैरस्थिमज्जगत जयेत्॥
हृद्यान्नपान शुक्रस्थे वलशुक्रकर हितम्।
विवद्धमार्गा शुक्रन्तु दृष्ट्वा दद्याद विरेचनम्॥
गर्भे शुष्के तु वातेन वालानाञ्चापि शुष्यताम।
सितामधुक काश्मर्य्यै र्हितमुत्थापने पय॥
शिरोगतेऽनिले वात शिरोरोगहरी क्रिया॥
व्यादिताखे हनु स्विन्नामङ्गुष्ठाभ्या प्रपीड्य च।
प्रदेशिनीभ्याञ्चोन्नम्य चिवुकोन्नमन हितम॥
वलाया पञ्चमूल्या वा चीर वातार्द्दिते पिबेत्।

छागयूष समर्पिष्क क्वाथञ्च दशमूलजम ॥
अर्द्दिते पित्तजे शीतान स्नेहांश्चैव विनिर्द्दिशेत् ।
घृतवस्ति प्रसेकञ्च क्षीरवस्ति तथैव च ॥
जिह्मीभूताननो मूको दाहवान् योऽर्द्दितो भवेत् ।
कुर्य्यात प्रतिक्रिया तस्य वातपित्तविनाशिनीम् ॥
कफघ्नी कफजे कुर्य्यात क्रिया निरवशेषत ।
वमन शोथयुक्तो कुर्य्याद् वीक्ष्य बल भिषक् ॥
छागलाद्य घृत तैल महामाषाख्यक तथा ।
अर्द्दित त्तर्पयेदाशु विशेषश्चात्र शस्यते ॥
आयामयोरर्द्दितवद् वाह्याभ्यन्तरगो क्रिया ।
तैलद्रोण्याञ्च शयनमान्तरोऽत्र सुदुस्तर ॥
वलामाषात्मगुप्ताश्च रोहिषाख्य तथा तृणम ।
एरण्डमूलमित्येषा क्वाथो हन्त्यर्द्दित गदम् ।
पक्षाघात विश्वचीञ्च पाने नस्ये च योजित ॥

रसोनकल्क नवनीत मिश्र
खादेन्नरो योऽर्द्दितरोगयुक्त ।
तस्यार्द्दित नाशयतीह शीघ्र
वृन्द घनानामिव मातरिश्वा ॥

पञ्चमूलीकृत क्वाथो दशमूलीकृतोऽथवा ।
रूक्ष स्वेदस्तथा नस्य मन्यास्तम्भे प्रशस्यते ॥
अर्द्दिते कफजे शस्त तैलञ्च दशमूलजम् ।
महालक्ष्मीविलासादि तथा चार्द्रकलेपनम् ।
ऊर्णातन्तुमयैर्वस्त्रै पीडास्थानस्य वन्धनम् ॥
कुक्कुटाण्डद्रवैरुष्णै सैन्धवाज्य समन्विते ।

ग्रीवा समर्दयेत तेन मन्यास्तम्भ प्रशाम्यति ॥
वाताद् वाग्धमनीदुष्टौ स्नेहगण्डूषधारणम् ॥
वातघ्नैर्दशमूल्या च नर कुब्जमुपाचरेत्।
स्निग्धैर्मांसरसैर्वापि प्रवृद्ध न विवर्ज्जयेत् ॥
आध्माने लङ्घन पाणितापश्च फलवर्त्तय ।
दीपन पाचनञ्चैव वस्तिश्चाप्यत्र शोधन ॥
कर्षमात्रा भवेत् कृष्णा त्रिवृता स्यात् पलोन्मिता
खण्डादपि पल ग्राह्य चूर्णमेकत्र कारयेत् ॥
मधुना शाणकमित लिह्यादाध्माननाशनम् ॥
दारु हैमवती कुष्ठ शताह्वा हिङ्गु सैन्धवै ।
लिम्पेदुष्णैरम्लपिष्टै शूलाध्मानयुतोदरम् ॥
प्रत्याध्माने समुत्पन्ने कुर्य्याद् वमन लङ्घने ।
दीपनादीनि युञ्जीत पूर्व्ववद् वस्तिकर्म्म च ॥
प्रत्यष्ठीलाष्ठीलकयोरन्तर्विद्रधि गुल्मवत ।
क्रिया कार्य्या च हिङ्ग्वादि चूर्ण कोष्णाम्भसा हितम्।

हिङ्ग्वादि चूर्णम्।

हिङ्गुग्रन्थिक धान्यजीरक वचा चव्याग्निपाठा शटी
वृक्षाम्ल लवणत्रय त्रिकटुक क्षारद्वय दाडिमम।
पथ्या पौष्कर वेतसाम्ल हवुषा योज्य तदेभि कृत
चूर्ण भावित मेतदार्द्रकरसे स्याद् वीजपूरद्रवे ॥
तैलमेरण्डज वापि त्रिफलाक्काथसयुतम् ।
मासमेक पिबेत् प्रातर्गृध्रस्यूकग्रहापहम् ॥
शेफालिकादलक्काथो मृद्वग्निपरिसाधित ।
दुर्व्वार गृध्रसीरोग पीतमात्र समुद्धरेत् ॥

पिष्टैरण्डफल चीरे पक्का विश्वौषधान्वितम ।
पायसो भक्षितो नित्य गृध्रसी कटिशूलनुत् ॥
एरण्डमूल विल्वच्च वृहती कण्टकारिका ।
कषायो रुचकोपेत पीतो वङ्क्षणवस्तिगम् ।
गृध्रसीज हरेच्छूल चिरकालानुवन्धि च ॥
वृहन्निम्बतरो सारो वारिणा परिपेषित ।
पीत प्रणाशयेत् क्षिप्रमसाध्यामपि गृध्रसीम् ॥
रक्तावसेचन कार्य्यमभीक्ष्ण वातकण्टके ।
पिवेदेरण्डतैल वा दहेत् सूचीभिरेव वा ॥
वातरक्तक्रम कुर्य्यात् पाददाहे विशेषत ॥
मसूर विदलै पिष्टै शृतशीतेन वारिणा ।
चरणौ लेपयेत् सम्यक् पाददाहप्रशान्तये ॥
नवनीतेन सलिप्तौ वह्निना परितापितौ ।
मुच्येते चरणौ क्षिप्र परितापात् सुदारुणात् ॥
पादहर्षे तु कर्त्तव्य कफवातहरो विधि ॥
दशमूलीवला माषक्काथ तैलाज्य मिश्रितम ।
साय भुक्ता पिवेन्नस्य विश्वच्यामववाहुके ॥

माषादितैलम् ।

माष सिन्धु वला रास्ना दशमूलक हिङ्गुभि ।
वचा शिवजटाख्याभि सिद्ध तैल सनागरम् ॥
ऊर्द्ध भक्ताशनाद्न्याद वाहुशोषाववाहुकौ ।
विश्वचीमुद्धताञ्चापि पक्षाघात तथार्द्दितम् ॥
खञ्जा स्निग्धाम्ललवणै स्वेदोन्मर्द्दोपनाहनम् ॥
कुष्ठसैन्धवयो कल्कश्चुक्रतैलसमन्वित ।

सुखोष्णो मर्दने योज्य खल्लीशूलनिवारण ॥
कोल कुलत्थ सुरदारु रास्ने
माषातसीतैल फलानि कुष्ठग ।
वचा शताह्वा यवचूर्णं मल्प
मुष्णानि वातामयिना प्रदेह ॥
फलानि त्रिफला ।
दशमूली कषायेण मातुलुङ्गरसेन च ।
शृतेन तैलेनाभ्यङ्ग शिरोवस्तिश्च तद्ग्रहे ॥
तद्ग्रहे शिरोग्रहे ।
तृण्याञ्च प्रतितूण्याञ्च प्रशस्ता स्नेहवस्तय ।
पिवेद्वा स्नेहलवण पिप्पल्यादिमथाम्बुना ॥
स्नेहलवण घृतादि स्नेहपदार्थयुक्त लवणम ।
वला दूर्व्वात्वचश्चूर्णं सहित कर्पसम्मितम् ।
पिवेत् कुडवदुग्धेन मुहुर्मूत्रस्य शान्तये ॥
पथ्या विभीत धात्रीणा चूर्णं चूर्णं मृतायस ।
मधुना सह सलीढ मुहुर्मूत्रस्य शान्तिकृत् ॥
यवक्षारस्य चूर्णन्तु सयोज्य सितया सह ।
भक्षयेन्नियत तेन प्रशाम्येन्मूत्र निग्रह ॥
आमलक्यास्तु कल्केन वस्तिभाग प्रलेपयेत् ।
तेन प्रशाम्यति क्षिप्र दारुणो मूत्रनिग्रह ॥
मेहनस्याथ योनेर्वा मुखस्याभ्यन्तरे शनै ।
घनसारयुता वर्त्ति धारयेन्मूत्र निग्रहे ॥
गुग्गुलु क्रोष्टुशीर्षे तु गुडूची त्रिफलाम्भसा ।
क्षीरेणैरण्ड तैल वा पिवेद वा वृद्धदारकम ॥

रसैस्तित्तिरिमांसस्य पीतेर्गुग्गुलु संयुतैः ।
वातरक्तक्रियाभिश्च जयेज्जम्बुकमस्तकम् ॥
माषात्मगुप्ता वातारि वाट्यालक जटाशृतम् ।
हिङ्गुसैन्धव संयुक्तं पक्षाघातं विनाशयेत् ॥
ग्रन्थिकाग्निकणा शुण्ठी रास्ना सैन्धव कल्कितम् ।
माषक्वाथशृतं तैलं पक्षाघातं व्यपोहति ॥

माषात्मगुप्तातिविषाकवूक
रास्ना शताह्वा लवणैः सुपिष्टैः ।
चतुर्गुणे माष बला कषाये
तैलं शृतं हन्ति हि पक्षघातम् ॥

पक्षाघातसमाक्रान्तं सुतीक्ष्णैश्च विरेचनैः ।
शोधयेद् वस्तिभिश्चापि व्याधिरेव प्रशाम्यति ॥
सर्व्वाङ्गगतमेकाङ्गगतञ्चापि समीरणम ।
तैलावगाहनं हन्ति तोयवेगमिवाचल ॥
पक्षाघातेऽर्दिते चापि धनु स्तम्भेऽपतन्त्रके ।
अन्येष्वपि च सर्वेक शस्यते तैलगाहनम् ॥
वाह्यायामेऽन्तरायामे वस्तिस्तीक्ष्ण विरेचनम् ।
पृष्ठपर्श्वे च शीताम्भ सेचनं हितमुच्यते ॥
सच्छिदामञ्जरोधूमो धूमश्च फणिफेनज ।
सद्यश्च कनकद्राव आयामौ द्वौ निवारयेत् ॥
पत्रञ्च कानकं वीज पिष्ट्वा तेन प्रलेपयेत् ।
आयामिनं पृष्ठवंश स तेन सुखमाप्नुयात् ॥
महामाषाख्यकं तैलं मायामावर्दितं तथा ।
हनुग्रहं विश्वचीञ्च निहन्याच्चाववाहुकम् ॥

प्रायशः सर्व्ववातेषु विरेक स्नेह सेवनम्।
तथानुवासन स्नेह स्वेदश्चापि प्रशस्यते॥

## त्रैलोक्यचिन्तामणि रस।

हीरं सुवर्णं सुमृतञ्च तारं
मिषा मम तीक्ष्णरजश्चतुर्णाम।
मम मृताभ्र रससिन्दूरञ्च
निक्षिप्य तीक्ष्णस्य तथाश्मनो वा॥
खल्ले द्रवेणैव कुमारिकाया
गुञ्जाप्रमाणा वटिका प्रकुर्य्यात्।
त्रैलोक्यचिन्तामणिरेष नाम्ना
सपूज्य सम्यक् गिरिजा दिनेन॥
हन्त्यामयान् योगशतैर्व्विवर्ज्या-
नजप्रणाशाय मुनिप्रणीत।
अस्य प्रसादेन गदानशेषान्
जरा विनिर्जित्य सुख विभाति॥

श्लेष्मे श्लेष्मण्यार्द्रकस्य रसेन पाययेत् सुधी।
शर्क्करं च माक्षिकेणैव पित्ते घृतसितायुतम॥
सर्व्वाणि मारुते सम्यक् दुष्टे च समता गते।
कणाचूर्णं क्षौद्रयुतं प्रमेहे दुग्धसयुतम॥
बलवर्णाग्निजनन कासघ्न कफवातजित्।
आयुः पुष्टिकरो वृष्य सर्व्वरोगनिसूदन॥

तारशब्देनात्र शुभ्रमौक्तिकमिवोच्यते न तु रजतम।
स्वर्णं सुशुभ्रञ्च मौक्तिकमिति पाठान्तरदर्शनात्।

कल्याणलेहश्च रसोनपिण्ड
त्रयोदशाङ्ग किल गुग्गुलुश्च ।
इत्येवमादीनि च भेषजानि
ज्ञेयानि वातामयसूदनानि ॥

चतुर्म्मुखरसश्चापि चिन्तामणिचतुर्म्मुख ।
योगीन्द्राख्यो रसो वातचिन्तामणिरसस्तथा ॥
वातरोगेषु सर्व्वेषु रसराजोऽपि युज्यते ॥
छागाद्य नकुलाद्यञ्च घृतमत्र प्रशस्यते ॥

श्रीविष्णु नारायण माषनाम
प्रसारणी नामक तैलवर्ग ।
सम्यक् प्रयुक्तोऽनिलरोगसघ
हत्वा ध्रुव बुद्धिबले विधत्ते ॥

वातरोगे पथ्यापथ्यनिर्णय ।

सवत्सरोषिता शालि षष्टिकास्तैलसर्पिषी ।
ग्राम्यानूपौदकानाञ्च यूषो माषकुलत्थयो ॥
नवीन तिल गोधूम वार्त्ताकु लशुनानि च ।
रोहितो मद्गुर शृङ्गी वर्म्मी च कवयील्लिशी ॥
द्राक्षा दाडिम जम्बीर परूषकफलानि च ।
स्निग्धोष्णानि च भोज्यानि स्निग्धोष्णमनुलेपनम ॥
एवविधानि सर्व्वाणि हितानि वातरोगिणाम ॥
प्रजागरो वेगरोध श्रमश्छर्दिश्च लङ्घनम् ।
तृणधान्य कलायश्च चणको राजमाषक ॥
कठिल्लकञ्च निष्पाववीज विम्बी कशेरुकम् ।
शीतमम्ब विरुद्धान्न व्यवायो भ्रमण वहु ॥

एवंविधानि सर्व्वाणि न हितान्यनिलामये।
विशेषादर्दिताध्मानवता स्नान विगर्हितम्॥



## आगन्तुज पक्षाघाताधिकारः।

पक्षाघातो द्विधा ज्ञेयो दोषागन्तुजभेदत।
दोषज कथित पूर्व्वमधुनागन्तुज शृणु॥
आगन्तुजोऽपि द्विविध पक्षाघात प्रकीर्त्यते।
आद्य पारदसम्भूतो द्वितीयो नागज स्मृत॥
नागज सीसकज।

तत्र पारदज पक्षाघातस्य निदानम्।

रसससर्गमातत्वात् तद्धूमस्य च सेवनात।
पक्षाघातो भवेद् यस्तु स ज्ञेय पारदोद्भव॥

तस्य लक्षणम्।

आदौ वाह्वोर्बलध्वसस्तत कम्प प्रजायते।
वेपते सवाथिनो चापि काय सर्व्वस्तत परम॥
गदी चलति नृत्यन् वै दृढ द्रव्य न धारयेत्।
स्पष्ट प्रभाषितुञ्चापि चर्व्वितुञ्च न च क्षम॥
ततस्तस्यातिनिद्रा च प्रलापो बलसक्षय।
हृत्त्रासो वह्निनाशश्च दन्तध्वस क्वचित् स्रुति॥
शान्तिर्भवति कम्पस्य विधृतेऽङ्गे रसामये।
नागामयस्य लिङ्गानि शृणुतात समाहित॥

अत्र वै शब्दस्य इवार्थे प्रयोग। स्रुतिर्लालास्राव।

अस्य चिकित्सा ।

मुख्य चिकित्सितञ्चास्य निदानपरिवर्ज्जनम् ।
निदानसेविनो व्याधिर्नाश गा न विनिवर्त्तते ॥
स्वेद सन्तनन सर्व्वं मूत्रकाञ्च विरेचनम् ।
रक्तदोषहर चात्र शर्म्मद भेषज मतम् ॥
गन्धक परम प्राहुर्भेषज पारदामये ॥
नेपालनिम्बतोयेन सेव्यो लौहोऽस्य शान्तये ॥

---

नागज पक्षाघातस्य निदानम् ।

चित्रकृत्प्रमुखा ये हि नागे कर्म्म प्रकुर्व्वते ।
ये वा व्यवहरन्त्यस्य पात्र तेषा ततो गद ॥

अस्य लक्षणम् ।

अङ्गुलोस्तु ममारभ्य मणिवन्ध ततोऽखिलम् ।
व्याधिर्व्याप्नोति दौर्ब्बल्य तत्रैक लक्षण महत् ॥
असे प्रकोष्ठे तोदश्च वाह्वोश्च परिशीर्णता ।
नीलिमा दन्तवेष्टे च शूल चिह्नानि चास्य वै ॥

अस्य चिकित्सा ।

स्वेदन भेदन चापि कुष्ठघ्न यच्च भेषजम् ।
तत्सर्व्वमिह ससेव्य कृत्वा हेतुविवर्ज्जनम ॥

---

## वेपथुवाताधिकार. ।

--- o ---

वेपथुवातस्य निदानम् ।

वातप्रकोपिपानान्नैर्जरसा सुरया तथा ।
कशेरुमज्जरोगाच्च वेपथ्वनिलसम्भव ॥

तस्य लक्षणम्।

आदौ हस्त समारभ्य कदाचिद्वापि मस्तकम्।
भ्रमात् क्रमक्रतर सर्व्व देह व्याप्नोति वेपथु ॥
स ना शक्नोति सम्यङ् न चलितुञ्चाभित पतेत्।
गच्छेच्चातिद्रुतमिव निद्रितोऽपि च वेपते ॥
नाहार भक्षयेत् सम्यग् वक्रकायो भवत्यपि।
चिवुकञ्च समारोप्य वक्षोऽस्यन्यवतिष्ठते ॥
धृताङ्ग कम्पते चापि न शक्नोत्यपि भाषितुम्।
ततो बहुप्रलापश्च चेतनापरिवर्ज्जित ॥
स्वयप्रवृत्तविण्मूत्र श्वासी प्राणास्त्यजत्यपि।
अतोऽय दारुणो व्याधिर्नोपेक्ष्यो जीवनैषिणा ॥

तस्य चिकित्सा।

बृहण भेषज सर्व्व ज्ञेय वेपथुवातहृत्।
वातव्याधिहर तैल घृतञ्च निखिल हतम ॥
वातव्याधिषु यत्पथ्य यदपथ्यञ्च कीर्त्तितम्।
ज्ञेय वेपथुवाते तत् पथ्यञ्चापथ्यमेव च ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने आक्षेपकापतानक दण्डापतानक धनुस्तम्भान्तरायाम वाह्यायाम कुब्ज पक्षवधा-हित हनुग्रह मन्यास्तम्भ जिह्वास्तम्भ शिरोग्रह गृध्रसी विश्वची क्रोष्टुकशीर्ष खञ्ज पङ्ग कलायखञ्ज वात-कण्टक पाददाह पादहर्ष वाहुशोष मूक मिन्मिण गद्गद तूणी प्रतितूणी आध्मान प्रत्याध्मान वाता ष्ठीला वस्तिवात वेपथु खल्ली प्रभृति वात व्याधि आगन्तुजपक्षाघात वेपथुवाताधि-कार सप्तचत्वारिंशोऽध्याय।

---

# अष्टचत्वारिंशोऽध्याय ।

—— o ——

## आमवाताधिकार ।

### आमवातस्य निदान सम्प्राप्तिश्च ।

विरुद्धाहारचेष्टस्य मन्दाग्नेर्निश्चलस्य च ।
स्निग्ध भुक्तवतो ह्यन्न व्यायाम कुर्व्वतस्तथा ॥
वायुना प्रेरितो ह्याम श्लेष्मस्थान प्रधावति ।
तेनात्यर्थं विदग्धोऽसौ धमनो प्रतिपद्यते ॥
वातपित्तकफैर्भूयो दूषित सोऽन्नजो रस ।
स्रोतास्यभिष्यन्दयति नानावर्णोऽतिपिच्छिल ॥
जनयत्याशु दौर्ब्बल्य गौरव हृदयस्य च ।
व्याधीनामाश्रयो ह्येष आमसज्ञोऽतिदारुण ॥

स्निग्ध भुक्तवतो व्यायाम कुर्व्वत इति मिलितो हेतु ।

### आमवातस्य सामान्य लक्षणम् ।

युगपत् कुपिताविती त्रिक सन्धि प्रवेशकौ ।
स्तब्धञ्च कुरुतो गात्रमामवात स उच्यते ॥

### तस्यापर लक्षणम् ।

अङ्गमर्द्दोऽरुचिस्तृष्णा चालस्य गौरव ज्वर ।
अपाक शूनताङ्गानामामवातस्य लक्षणम् ॥

शूनता शोथ ।

स कष्ट सर्व्वरोगाणा यदा प्रकुपितो भवेत् ।
हस्तपाद शिरो गुल्फ त्रिक जानूरु सन्धिषु ॥
करोति सरुज शोथ यत्र दोष प्रपद्यते ।
स देशो रुज्यतेऽत्यर्थं व्याविद्ध इव वृश्चिकै ॥

जनयेत् सोऽग्निदौर्ब्बल्य प्रसेकारुचि गौरवम्।
उत्साहहानि वैरस्य दाहञ्च बहुमूत्रताम ॥
कुक्षौ कठिनता शूल तथा निद्राविपर्य्ययम।
तृट् च्छर्दि भ्रम मूर्च्छांश्च हृद्ग्रह विड्विबद्धताम ॥
जाड्यान्त्रकूजमानाह कष्टाश्चान्यानुपद्रवान् ॥

तस्य विशिष्टानि लक्षणानि।

पित्तात् सदाहरागञ्च सशूल पवनात्मकम्।
स्तिमित गुरु कण्डूक कफजुष्ट तमादिशेत् ॥
एकदोषानुग साध्यो द्विदोषो याप्य उच्यते।
सर्व्वदेहचर शोथ स कृच्छ्र सान्निपातिक ॥

आमवातस्य चिकित्सा।

लङ्घन स्वेदन तिक्त दीपनानि कटूनि च।
विरेचन स्नेहनञ्च वस्तयश्चाममारुते ॥
रुक्ष स्वेदो विधातव्यो बालुकापुटकैस्तथा।
उपनाहाश्च कर्त्तव्यास्तेऽपि स्नेहविवर्ज्जिता ॥
आमवाताभिभूताय पोडिताय पिपासया।
पञ्चकोलेन ससिद्ध पानोय हितमुच्यते ॥
शुष्कमूलकयूष वा यूष वा पाञ्चमौलिकम।
सौवीर काञ्जिक वापि शुण्ठीचूर्णावचूर्णितम् ॥
शतपुष्पा वचा शिग्रु खदिरा वरुणत्वच।
सहदेवी च वर्षाभू शटी चापि प्रसारणी ॥
सतर्कारीफल हिङ्गु शुक्त काञ्जिक पेषितम।
आमवातहर श्रेष्ठ सुखोष्ण लेपन हितम् ॥
तर्कारीफल जयन्तीफलम।

छित्वा केसुकमूलञ्च शिग्रु वल्मीकमृत्तिका ।
मूत्रेणैतानि सपिष्य चोपनाहाय कल्पयेत् ॥
चित्रक कटुका पाठा कलिङ्गातिविषामृता ।
देवदारु वचा मुस्त नागरातिविषाभया ॥
पिबेदुष्णाम्बुना नित्यमामवातस्य भेषजम् ॥

अत्र अतिविषाशब्दस्य वारद्वयोल्लेखात् तस्या भागद्वय देयम् ।

रास्नापञ्चकम ।

रास्ना गुडूचीमेरण्ड देवदारु महौषधम् ।
पिबेत् सार्व्वाङ्गिके वाते सामे सन्ध्यस्थिमज्जगे ॥

रास्नासप्तकम् ।

रास्नामृतारग्वध देवदारु
त्रिकण्टकैरण्ड पुनर्नवानाम ।
क्वाथ पिबेन्नागरचूर्णमिश्र
जङ्घोरुपार्श्वं त्रिकपृष्ठशूली ॥

रास्नापञ्चक रास्नासप्तकयोरुष्णे क्वाथे विरेचनार्थमेरण्डतैल प्रक्षिपन्ति वृद्धा ।

आमवात गजेन्द्रस्य शरीरवनचारिण ।
एक एव निहन्तासावेरण्ड स्नेहकेशरी ॥
भृष्टाद्यात् कटुतैलेऽन्नै सद्यारग्वधपल्लवम् ।
किवाम्लकाञ्जिके पक्ता खादेदामानिलापहम् ॥
चूर्ण स्नुह्या नागरस्य काञ्जिकेन पिबेत् सदा ।
आमवात प्रशमन कफवातहर परम् ॥

त्रिवृत् सैन्धव शुण्ठीनामारनालेन चूर्णितम् ॥
पीत्वा विरिच्यते जन्तुरामवातहरं परम ॥

आमप्रमाथिनी वटिका ।

सोरक रविमूलञ्च गन्धक लौहमभ्रकम ।
पिष्टारग्वधतोयेन कुर्य्यान्माषमिता वटीम ॥
त्रिवृत्क्वाथे च सा सेव्या कफामयनिसूदनी ।
आमवातप्रशमनी वटिकामप्रमाथिनी ॥

आमवाताद्रिवज्र रस ।

रस गन्धक लौहाभ्र फणिफेन सम समम् ।
समवा यावशूकस्य मर्दयेद्विजयाम्भसा ॥
ततो माषाद्धमानाञ्च विदध्याद्वटिका भिषक् ।
यथादोषानुपानेन प्रदद्यादामवातिने ॥
आमवात महाघोर प्रमेहानपि विंशतिम् ।
आमवाताद्रि वज्राख्यो रसो हन्ति न संशय ॥
चूर्णं वैश्वानर नाम रसोनपिण्डमेव च ।
योगराजगुग्गुलु च सिंहनादाख्य गुग्गुलु ॥
तथा त्रिफलादिलौह विडङ्गादिकलौहकम ।
पञ्चाननरसलौह वातगजेन्द्रसिंहकम् ।
आमवातेश्वररस आमवातारि नामिका ॥
वटिका चामवातारिरसादीन्यामवातके ।
यथादोषानुपानानि युक्त्या योज्यानि यत्नत ॥
तैल बृहत् सैन्धवाद्य तैल विजयभैरवम् ।
महामाषाभिध तैल छागलाद्य तथैव च ।
छागलाद्यघृतञ्चैव आमवातनिसूदनम् ॥

आमवाते पथ्यापथ्य व्यवस्था।

वास्तूकशाक मारिष्टशाक पौनर्नव हितम् ।
पटोल लशुनञ्चैव वार्त्ताकु कारवेल्लकम् ॥
यवान्न कोरदूषान्न पुराण शालिषष्टिकम् ।
लावकाना तथा मास हित तक्रेण सस्कृतम् ॥
हितञ्च यूष कौलत्थ कालाय चणकस्य च ।
रुच्य दद्याद्‌ यथासात्म्यमामवातहितञ्च यत् ॥
दधि मत्स्यो गुड क्षीर दुष्टनीरमुपोदिका ।
विरुद्धमशन पूर्व्वो वायुर्वेगस्य रोधनम ॥
निशाया जागर शीततोयस्य परिषेवणम ।
न हितान्यनिले सामे व्यवायातिशयोऽपि च ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
आमवाताधिकारोऽष्टचत्वारिंशोऽध्याय ।

---

## ऊनपञ्चाशत्तमोऽध्यायः ।

### उदावर्त्तानाहाधिकार ।

अधश्चोर्द्ध्वञ्च भावाना प्रवृत्ताना स्वभावत ।
न वेगान् धारयेत् प्राज्ञो वातादीना जिजीविषु ॥

उदावर्त्तस्य विप्रकृष्ट निदानम ।

वातविण्मूत्र जृम्भाश्रु क्षवोद्गारवमीन्द्रियै ।
क्षुत्तृष्णोच्छ्वासनिद्राणा धृत्योदावर्त्तसम्भवं ॥

इन्द्रियमत्र शुक्रम्। अत्र तृतीया सहार्था। धृत्या वेगविघातेन।

त्रयोदशविधश्चासौ भिन्न एतैस्तु कारणैः॥

उदावर्त्तस्य सामान्य लक्षणम्।

यत्रोर्द्ध जायते वायोरावर्त्त स चिकित्सकैः।
उदावर्त्त इति प्रोक्तो व्याधिस्तत्रानिल प्रभुः॥

आवर्त्तो भ्रमः।

अपानवातनिरोधजोदावर्त्तस्य लक्षणम्।

वातमूत्रपुरीषाणां सङ्गो ध्मान क्लमो रुजा।
जठरे वातजाश्चान्ये रोगाः स्युर्वातनिग्रहात्॥

सङ्गः अप्रवृत्तिः। ध्मानमाध्मानम्। रुजा जठरे। अन्ये रोगाः तोदशूलगुल्मादयः।

पुरीषनिरोधजस्य लक्षणम्।

आटोपशूलौ परिकर्त्तिका च
सङ्गः पुरीषस्य तथोर्द्धवातः।
पुरीषमास्यादथवा निरेति
पुरीषवेगेऽभिहते नरस्य॥

पुरीषवेगे धारिते सति आटोपः सम्यग् गुडगुडशब्दः। शूलमिति पक्वाशये, परिकर्त्तिका गुदे कर्त्तनवत् पीडा, ऊर्द्धवातः उद्गारः।

मूत्रनिरोधजस्य लक्षणम्।

वस्तिमेहनयोः शूलं मूत्रकृच्छ्रं शिरोरुजा।
विनामो वङ्क्षणानाहः स्याल्लिङ्गं मूत्रनिग्रहे॥

विनामो व्यथया वपुषो नमनम् । वङ्क्षणानाहो वङ्क्षणयो-
राकर्षणवद्व्यथा ।

जृम्भानिरोधजस्य लक्षणम् ।

मन्यागलस्तम्भशिरोविकारा
जृम्भोपघातात् पवनात्मका स्यु ।
तथाक्षिनासावदनामयाश्च
भवन्ति तीव्रा सह कर्णरोगै ॥

अश्रुनिरोधजस्य लक्षणम् ।

आनन्दज वाप्यथ शोकज वा
नेत्रोदक प्राप्तममुञ्चतो हि ।
शिरोगुरुत्व नयनामयाश्च
भवन्ति तीव्रा सह पीनसेन ॥

क्षिकानिरोधजस्य लक्षणम् ।

मन्यास्तम्भ शिर शूलमर्दितार्द्धावभेदकौ ।
इन्द्रियाणाञ्च दौर्ब्बल्य क्षवथो स्याद् विनिग्रहात् ।

उद्गारनिरोधजस्य लक्षणम् ।

कण्ठास्यपूर्णत्वमतीव तोद
कूजश्च वायोरथवा प्रवृत्ति ।
उद्गारवेगेऽभिहते भवन्ति
घोरा विकारा पवनप्रसूता ॥

तोदो हृदि आमाशये च । कूजोऽव्यक्तशब्द । उदरे
वायोरप्रवृत्ति । घोरा विकारा हिक्कादय ।

वान्तिनिरोधजस्य लक्षणम् ।

कण्डूकोठारुचिव्यङ्ग शोथपाण्ड्वामयज्वरा ।
कुष्ठहृल्लासवीसर्पाश्छर्दि निग्रहजा गदा ॥

शुक्रनिरोधजस्य लक्षणम् ।

मूत्राशये वै गुदमुष्कयोश्च
शोथो रुजा मूत्रविनिग्रहश्च ।
शुक्राश्मरी तत्स्रवण भवेच्च
ते ते विकारा विहते तु शुक्रे ॥

तत्स्रवण शुक्रस्राव ते ते विकारा वातकुण्डलिकादय ।

क्षुधाविघातजस्य लक्षणम् ।

तन्द्राङ्गमर्दावरुचि श्रमश्च
क्षुधोऽभिघातात कृशता च दृष्टे ।

तृष्णाभिघातजस्य लक्षणम ।

कण्ठास्यशोष श्रवणावरोध-
स्तृष्णाभिघाताद्धृदये व्यथा च ॥

श्वासनिरोधजन्य लक्षणम ।

श्रान्तस्य निश्वासविनिग्रहेण
हृद्रोगमोहावथवापि गुल्म ॥

निद्राविघातजस्य लक्षणम् ।

जृम्भाङ्गमर्दोऽक्षिशिरोऽतिजाड्य
निद्राविघातादथवापि तन्द्रा ॥

अतिजाड्य गौरव, शिरोगात्राक्षिगौरवमिति तन्त्रान्तरे पाठात् ।

वेगरोधजमुदावर्त्तमभिधाय रुचादिकुपितवातजमाह ।

तस्य निदानसम्प्राप्तिपूर्व्वक लक्षणम् ।

वायु कोष्ठानुगो रूक्षै कषायकटुतिक्तकै ।
भोजनै कुपित सद्य उदावर्त्त करोति च ॥
वातमूत्रपुरीषासृकफमेदोवहानि वै ।
स्रोतास्युदावर्त्तयति पुरीष चातिवर्त्तयेत् ॥
ततो हृद्वस्तिशूलार्त्तो हृल्लासारतिपीडित ।
वातमूत्रपुरीषाणि कृच्छ्रेण लभते नर ॥
श्वासकासप्रतीश्यायदाहमोहतृषाज्वरान् ।
वमिहिक्काशिरोरोगमन श्रवणविभ्रमान् ॥
बहूनन्यांश्च लभते विकारान् वातकोपगान् ॥

उदावर्त्तयति निरुणद्धि, न तु विडादीन् अधोगमयति ।
मनोविभ्रम रज्जौ सर्पज्ञान, श्रवणविभ्रम अन्यथा श्रवणम् ।

असाध्यस्योदावर्त्तस्य लक्षणम् ।

तृष्णार्द्दिंपरिक्लिष्ट क्षीण शूलैरुपद्रुतम् ।
शकृद्वमन्त मतिमानुदावर्त्तिनमुत्सृजेत् ॥

आनाहस्य लक्षणम् ।

आमं शकृद् वा निचित क्रमेण
भूयो विबद्ध विगुणानिलेन ।
प्रवर्त्तमान न यथास्वमेन
विकारमानाहमुदाहरन्ति ॥

यथास्व पूर्व्ववत् ।

आमजस्यानाहस्य लक्षणम् ।

तस्मिन् भवन्त्यामसमुद्भवे तु
तृष्णाप्रतिश्यायशिरोविदाहा ।
आमाशये शूलमथो गुरुत्व
हृत्स्तम्भ उद्गारविघातनञ्च ॥

शकृत्सञ्चयजस्य लक्षणम् ।

स्तम्भ कटीपृष्ठपुरीषमूत्रे
शूलोऽथ मूर्च्छा शकृतो वमिश्च ।
श्वासश्च पक्वाशयजे भवन्ति
तथालसोक्ता'न च लक्षणानि ॥

पक्वाशयजे शकृत्सञ्चयजे आनाहे । स्तम्भशब्द कटीपृष्ठयो स्तब्धतावाची । मूत्रपुरीषयोरप्रवृत्तिवाची च । अलसोक्तानि लक्षणानि । आध्मानवातविघातादीनि । श्वास इत्यत्र शोथ इति पाठान्तरम् ।

उदावर्त्तानां चिकित्सा ।

सर्व्वेष्वेतेषु विधिवदुदावर्त्तेषु कृत्स्नश ।
वायो क्रिया विधातव्या स्वमार्गप्रतिपत्तये ॥
अधोवातनिरोधोत्थे उदावर्त्ते हित मतम् ।
स्नेहपान तथा स्वेदो वर्त्तिर्वस्तिर्हितो मत ॥
पुरीषजे तु कर्त्तव्यो विधिरानाहिको भवेत् ॥
सौवर्च्चलाढ्या मदिरा मूत्रे त्वभिहते पिबेत् ।
एलामप्यथ मद्येन क्षीर वापि पिबेन्नर ॥
धात्रीफलाना स्वरस सजल वा पिबेत् त्र्यहम् ।

रसमश्वपुरीषस्य गर्द्दभस्याथवा पिवेत् ॥
भद्रदारु घन मुर्व्वा हरिद्रा मधुक तथा ।
कोलप्रमाणानि पिवेदान्तरीच्चेण वारिणा ॥
दुस्पर्शास्वरस वापि कषाय ककुभस्य च ।
एर्व्वारुवीज तोयेन पिबेद् वा लवणान्वितम् ॥
पञ्चमूलीशृत चीर द्राक्षारसमथापि वा ।
योगाश्च वितरेत् तत्र सर्व्वथैवाश्मरीभिद ॥
दुष्पर्शा दुरालभा ।
स्नेहस्वेदैरुदावर्त्त जृम्भाज समुपाचरेत् ।
अश्रुमोचोऽश्रुजे कार्य्य स्निग्धस्विन्नस्य देहिन ॥
क्षवरोधभवे तीक्ष्णघ्राण नस्यार्कदर्शनै ।
प्रवर्त्तयेत् चुत सक्त स्नेहस्वेदौ च शीलयेत् ॥
उद्गारस्यावरोधे तु स्नैहिक धूममाचरेत् ॥
छर्द्दिनिग्रहसञ्जाते वमन लङ्घन हितम् ।
विरेचमत्रात्र मत तैलेनाभ्यञ्जन तथा ॥
वस्तिशुद्धिकरै सिद्ध चतुर्गुणजल पय ।
आवारिनाशात् क्वथित पीतवन्त प्रकामत ॥
रमयेयु प्रिया नार्य्य शुक्रोदावर्त्तिन परम् ।
तस्याभ्यङ्गोऽवगाहश्च मदिरा चरणायुधा ॥
शालि पयोनिरूहश्च हित मैथुनमेव च ॥
क्षुद्विघाते हित स्निग्धमुष्णमन्नञ्च भोजनम् ।
तृष्णाघाते पिबेन्मन्थ यवागू वापि शीतलाम ॥
भोज्यो रसेन विश्रान्त श्रमश्वासातुरो नर ।
निद्राघाते पिबेत् चीर स्वप्याच्चेष्टकथारत ॥

रुचादिकुपितवातजोदावर्त्तस्य चिकित्सा।

हिङ्गुमाक्षिकसिन्धूत्थैः पिष्टैर्वर्त्तिं विनिर्म्मिताम्।
घृताभ्यक्ता गुदे न्यसेदुदावर्त्तविनाशिनीम्॥

फलवर्त्तिः।

युञ्ज्यान्नाराचचूर्णादीन्यौषधानि यथायथम्।
उदावर्त्ते तथानाहे यद्‌ वायोश्चानुलोमनम॥

आनाहस्य चिकित्सा।

तुल्यकारणकार्य्यत्वादुदावर्त्तहरी क्रियाम्।
आनाहेषु च कुर्व्वीत विशेषश्चाभिधीयते॥
त्रिवृत् कृष्णा हरीतक्यो द्विचतुः पञ्चभागिका।
गुडेन तुल्या गुटिका हरत्यानाहमुल्वणम्॥
मूत्रकृच्छ्रप्रशमनी तथा चाप्यतिरेचनीम्।
सर्व्वथैव प्रयुञ्जीत क्रियामानाहशान्तये॥
सुजरञ्च सर यद्वयदन्न पानञ्च पुष्टिदम्।
उदावर्त्ते तथानाहे सेव्य वर्ज्यं ततोऽन्यथा॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
उदावर्त्तानाहाधिकार ऊनपञ्चाशत्तमोऽध्याय।

# पञ्चाशत्तमोऽध्याय ।

---

## उन्मादाधिकार ।

### उन्मादस्य निरुक्ति ।

मदयन्त्युद्गता दोषा यस्मादुन्मार्गमाश्रिता ।
मानसोऽयमतो व्याधिरुन्माद इति कीर्त्तित ॥

### तस्यैवावस्थाभेदेन सञ्ज्ञान्तरम् ।

स चाप्रवृद्धस्तरुणो मदसञ्ज्ञां बिभर्ति च ॥

### उन्मादस्य विप्रकृष्ट निदानम् ।

विरुद्ध दुष्टाशुचि भोजनानि
प्रधर्षण देवगुरुद्विजानाम् ।
उन्मादहेतुर्भयहर्षपूर्व्वो
मनोऽभिघातो विषमाश्च चेष्टा ॥

### तस्य सन्निकृष्ट निदान सङ्ख्या च ।

एकैकश सर्व्वशश्च दोषैरत्यर्थं मूर्च्छितै ।
मानसेन च दुःखेन स पञ्चविध उच्यते ॥
विषाद् भवति षष्ठश्च यथास्व तत्र भेषजम् ॥

### तस्य सम्प्राप्ति ।

तरल्पसत्त्वस्य मला प्रदुष्टा-
बुद्धेर्निवास हृदय प्रदूष्य ।
स्रोतास्यधिष्ठाय मनोवहानि
प्रमोहयन्त्याशु नरस्य चेत ॥

तस्य सामान्य लक्षणम्।

धीविभ्रम सत्त्वपरिप्लवश्च
पर्य्याकुला दृष्टिरधीरता च।
अबद्धवाक्त्व हृदयञ्च शून्य
सामान्यमुन्मादगदस्य लिङ्गम्॥

वातिकोन्मादस्य निदानादि।

रूक्षाल्प शीतान्न विरेक धातु
क्षयोपवासैरनिलोऽतिवृद्ध।
चिन्तादि दुष्ट हृदय प्रदूष्य
बुद्धि स्मृतिञ्चाप्युपहन्ति शीघ्रम॥
अस्थानहास्य स्मितनृत्यगीत
वागङ्ग विक्षेपण रोदनानि।
पारुष्य कार्श्यारुण वर्णताश्च
जीर्णे बलञ्चानिलजस्य रूपम॥

पैत्तिकोन्मादस्य निदानानि।

अजीर्ण कट्वम्ल विदाह्य शीतै
र्भोज्यैश्चिर पित्तमुदीर्णवेगम्।
उन्मादमत्युग्र मनात्मकस्य
हृदि स्थित पूर्ववदाशु कुर्य्यात्॥
अमर्ष सरम्भ विनग्नभावा
सन्तर्ज्जनाभिद्रवणौष्ण्य रोषा।
प्रच्छाय शीतान्न जलाभिलाषा
पीता च भा पित्तकृतस्य लिङ्गम्॥

श्लैष्मिकस्य निदान सम्प्राप्ति लक्षणञ्च ।

सपूरणैर्मन्दविचेष्टितस्य
सोष्मा कफो मर्म्मणि सम्प्रदुष्ट ।
बुद्धि स्मृतिञ्चाप्युपहत्य चित्त
प्रमोहयन् सजनयेद् विकारम् ॥
वाक्चेष्टित मन्दमरोचकञ्च
नारीविविक्तप्रियता च निद्रा ।
छर्द्दिश्च लाला च बलञ्च भुक्ते
नखादिशौक्ल्यञ्च कफात्मके स्यात् ॥

---

सान्निपातिकस्य निदान लक्षणञ्च ।

य सन्निपातप्रभवोऽतिघोर
सर्व्वै समस्तै स च हेतुभि स्यात ।
सर्व्वाणि रूपाणि विभर्त्ति तादृग
विरुद्ध भैषज्यविधिर्विवर्ज्य ॥

---

मनोदुःखजस्य निदानादि ।

चौरैर्नरेन्द्रपुरुषैररिभिस्तथान्यै-
र्वित्रासितस्य धनवान्धवसक्षयाद् वा ।
गाढ क्षते मनसि च प्रियया रिरसो-
र्जायेत चोत्कटतरो मनसो विकार ॥
चित्र ब्रवीति च मनोऽनुगत विसज्ञो
गायत्यथो हसति रोदिति चापि मूढ ।

---

विषजस्य लक्षणम ।

रक्तेक्षणो हतबलेन्द्रियभा सुदीन
श्यावाननो विषकृतेऽथ भवेद् विसञ्ज्ञ ॥

---

उन्मादानामरिष्ट लक्षणम् ।

अवाङ्मुखस्तून्मुखो वा क्षीणमासबलो नर
जागरूको ह्यसन्देहमुन्मादेन विनश्यति ॥

---

भौतिकस्योन्मादस्य लक्षणम् ।

अमर्त्यवाग् विक्रम वीर्य्यचेष्टो
ज्ञानादि विज्ञान बलादिभिर्य ।
उन्मादकालोऽनियतश्च यस्य
भूतोत्थमुन्माद मुदाहरेत तम ॥

---

देवाविष्टस्य लक्षणम् ।

सन्तुष्ट शुचिरतिदिव्य माल्यगन्धो
निस्तन्द्रीरवितथ संस्कृत प्रभाषी ।
तेजस्वी स्थिरनयनो वरप्रदाता
ब्रह्मण्यो भवति नर स देवजुष्ट ॥

---

दैत्याविष्टस्य लक्षणम ।

सस्वेदी द्विजगुरुदेव दोषवक्ता
जिह्माक्षो विगतभयो विमार्गदृष्टि ।

सन्तुष्टो भवति न चान्नपानजातै-
र्दुष्टात्मा भवति स देवसत्वजुष्ट ॥
विमार्गदृष्टि कुमार्गरत ।

---

गन्धर्व्वाविष्टस्य लक्षणम् ।

हृष्टात्मा पुलिनवनान्तरोपसेवी
स्वाचार प्रियपरिगीत गन्धमाल्य ।
नृत्यन् वै प्रहसति चारु चाल्पशब्द
गन्धर्व्वग्रहपरिपीडितो मनुष्य ॥

हृष्टात्मा हृष्टजीवात्मा, पुलिन तोयोत्थित तट, वनान्तर वनमध्य, तयो सेवी। चारु चाल्पशब्दमिति हसनक्रिया-विशेषणम् ।

---

यक्षाविष्टस्य लक्षणम ।

ताम्राक्ष प्रियतनू रक्तवस्त्रधारी
गम्भीरो द्रुतगतिरल्पवाक् सहिष्णु ।
तेजस्वी वदति च कि ददामि कस्मै
यो यक्षग्रहपरिपीडितो मनुष्य ॥

---

पित्राविष्टस्य लक्षणम् ।

प्रेताना स दिशति संस्तरेषु पिण्डान्
शान्तात्मा जलमपि चापसव्यवस्त्र ।
मासेप्सुस्तिलगुडपायसाभिलाषी
तद्भक्तो भवति पितृग्रहाभिजुष्ट ॥

प्रेताना मृताना पितॄणा दिशति ददाति। अपसव्यवस्त्र दक्षिणस्कन्धकृतोत्तरीय ।

---

नागाविष्टस्य लक्षणम् ।

यस्तूर्व्यां प्रसरति सर्पवत् कदाचित्
सृक्कण्यो मुहुरपि जिह्वयावलेढि ।
क्रोधालुर्घृतमधुदुग्ध पायसेप्सु
र्विज्ञेय स खलु भुजङ्गमेन जुष्ट ॥

---

राक्षसाविष्टस्य लक्षणम ।

मासासृग् विविध सुरा विकार लिप्सु
र्निर्लज्जो भृशमतिनिष्ठुरोऽतिशूर ।
क्रोधालुर्विपुलबलो निशाविहारी
शौचद्विड् भवति स राक्षसैर्गृहीत ॥

---

ब्रह्मराक्षसाविष्टस्य लक्षणम् ।

देवविप्रगुरुद्वेषो वेदवेदाङ्गनिन्दक ।
आत्मपीडाकरोऽहिंस्रो ब्रह्मराक्षससेवित ॥

---

पिशाचाविष्टस्य लक्षणम् ।

उद्वस्त कृशपरुषो विरुद्धभाषी
दुर्गन्धो भृशमशुचिस्तथातिलोल ।
बह्वाशो विजन वनान्तरोपसेवी
व्याचेष्टन् भ्रमति रुदन् पिशाचजुष्ट ॥

उद्वस्त इत्यत्र उद्धस्त इतिपाठे नग्न इत्यर्थ ।

ग्रहा हिंसाय पूजार्थं वा नरान् गृह्णन्ति ।
तत्र हिंसार्थं गृहीतस्य लक्षणम् ।
स्थूलाक्षो द्रुतमटन सफेनवामी
निद्रालु पतति च कम्पते च योऽति ।
यश्चाद्रि द्विरदनगादिविच्युत स्यात्
सोऽसाध्यो भवति तथा त्रयोदशेऽब्दे ॥

देवादीनामावेशसमय ।

देवग्रहा पौर्णमास्यामसुरा सन्ध्ययोरपि ।
गन्धर्वा प्रायशोऽष्टम्या यक्षाश्च प्रतिपद्यथ ॥
कृष्णक्षये हि पितर पञ्चम्यामपि चोरगा ।
यक्षासि रात्रौ पिशाचाश्चतुर्द्दश्या विशन्ति हि ॥
दर्पणादीन् यथाच्छाया शीतोष्ण प्राणिनो यथा ।
स्वमणि भास्करार्च्चिश्च यथा देहञ्च देहभृक् ।
विशन्ति न च दृश्यन्ते ग्रहास्तद्वच्छरीरिण ॥

उन्मादस्य चिकित्सा ।

वातिके स्नेहपान प्राग् विरेक पित्तसम्भवे ।
कफजे वमन कार्य्य परो वस्त्यादिक क्रम ॥

अपस्मारे यदुद्दिष्ट कर्म्मकल्याणसाधनम् ।
उन्मादेऽपि च तत्कार्य्य सामान्याद् दोषदूष्ययो ॥

जलाग्निद्रुमशैलेभ्यो विषमेभ्यश्च त सदा ।
रक्षेदुन्मादिन यत्नात् सद्य प्राणहर हि तत् ॥

सभोज्य पिकमास त निर्व्वाते स्नापयेत् सुखम ।
त्यक्ता स्मृतिमतिभ्रंश सञ्ज्ञा लब्ध्वा प्रबुध्यते ॥

---

ब्राह्मी कुष्माण्डीफल षड्ग्रन्था शङ्खपुष्पिका स्वरसा ।
दृष्टा उन्मादहृत पृथगेते कुष्ठमधुमिश्रा ॥

---

कुष्माण्डवीजकल्कञ्च मधुना दिवसत्रयम् ।
पीत्वोन्माद महाघोर व्यपहाय सुखी भवेत् ॥

---

पुराणमथवा सर्पि पिबेत् प्रातरतन्द्रित ॥

---

तर्ज्जन त्रासन दान सान्त्वन हर्षण तथा ।
विस्मयो विस्मृतेर्हेतोर्नयन्ति प्रकृति मन ॥
सिद्धार्थको हिङ्गु वचा करञ्जो देवदारु च ।
मञ्जिष्ठा त्रिफला श्वेता कटभीत्वक् कटुत्रयम ।
समाशानि प्रियङ्गुश्च शिरोषो रजनोद्वयम ।
वस्तमूत्रेण पिष्टोऽयमगद पानमञ्जनम ॥
नस्यमालेपनञ्चैव स्नानमुद्वर्तन तथा ।
अपस्मार विषोन्माद ग्रहालक्ष्मोप्रशान्तये ॥
भूतेभ्यश्च भय हन्ति राजद्वारे च शस्यते ।
सर्पिरेतेन सिद्ध वा सगोमूत्र तदर्थकृत् ॥

---

त्र्यूषण हिङ्गु लवण वचा कटकरोहिणी ।
शिरीषस्य करञ्जस्य वोज श्वेताश्च सर्षपा ॥

गोमूत्रपिष्टैरेतैर्वा वर्त्तिर्नेत्राञ्जने हिता ।
चातुर्थकमपस्मारमुन्मादञ्च नियच्छति ॥

—— -

इष्टद्रव्यविनाशेन मनो यस्याभिहन्यते ।
तस्य तत्सदृशप्राप्त्या सान्त्वाश्वासै शम नयेत् ॥

———

कामशोक भयक्रोधहर्षेर्षा लोभसम्भवान् ।
परस्पर प्रतिद्वन्द्वैरेभिरेव शम नयेत् ॥
गन्धर्व्वैं पितृभिर्दैवैरुन्मत्तस्य च बुद्धिमान् ।
वर्ज्जयेदञ्जनादीनि तीक्ष्णानि क्रूरमेव च ॥

———

कृष्णा मरिच सिन्धूत्थ मधु गोपित्त निर्म्मितम् ।
अञ्जन सर्व्वभूतोत्थ मन्होन्माद विनाशनम ॥

———

निम्बपत्र वचा हिङ्गु सर्पनिर्म्मोक सर्षपै ।
डाकिन्यादिहरो धूपो भूतोन्माद विनाशन ॥

———

घृत पानीयकल्याण क्षीरकल्याणक तथा ।
हिङ्ग्वाद्य चैतस चैव महापैशाचक घृतम् ।
शिवाघृतञ्च वैद्येन योज्यमुन्मादशान्तये ॥
तैल नारायण वापि महानारायण तथा ।
उन्मादेषु प्रयोक्तव्यमिति चक्रेण भाषितम ॥
चतुर्म्मुखरसश्चैव तथोन्मादगजाङ्कुश ।
इत्यादय प्रयोक्तव्या रसा उन्मादशान्तये ॥

उन्मादे पथ्यापथ्यानि।

रक्तशालिर्यवो मुद्गो गोधूम कौम्ममामिषम्।
धन्वोद्भवरसो द्राक्षा कपित्थ नारिकेलकम्॥
वास्तूकञ्च तथा ब्राह्मी कुष्माण्डस्य फल महत्।
पटोल धारोष्णपय मतधौत तथा हवि॥
पुरातन नूतनञ्च सुशीतमनुलेपनम्।
हितान्युक्तान्यथोन्मादे विरुद्धमशन सुरा॥
उष्णाशन तीक्ष्णवीर्य्य पत्रशाक कठिल्लकम्।
तिक्तानि निखिलान्येव व्यवायो निशि जागर॥
निद्रातृष्णा क्षुधादीना बलाद् वेगविधारणम्।
सर्व्वाणि क्रूरकर्म्माणि मतानि न शुभाय च॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
उन्मादाधिकार पञ्चाशत्तमोऽध्याय।

---

## एकपञ्चाशत्तमोऽध्याय.।

स्मरोन्मादाधिकार।

स्मरोन्मादस्य निदानम्।

उन्मादो दयिताप्राप्ते शुक्रस्य विकृतेरपि।
जननेन्द्रियदोषाच्च वैगुण्यादनिलस्य च॥
पुरुषस्य तथा नार्य्या स्मरोन्माद इतीरित॥

तस्य लक्षणम् ।

स्तब्धता वेपन श्वास प्रलाप पाण्डुता तथा ।
चिन्ताधैर्य्य रोदनञ्च लक्षण स्मरजे मदे ॥
चक्षुरागस्तदनु मनस सङ्गतिर्भावना च
व्यावृत्ति स्यात्तदनु विषयग्रामतश्चेतसोऽपि ।
निद्राच्छेदस्तदनु तनुता निस्त्रपत्व ततोऽनू
न्मादो मूर्च्छा तदनु मरण स्युर्दशा प्रक्रमेण ॥

तस्य चिकित्सा ।

प्रियमिलनमिवैक स्मरोन्मादस्य भेषजम् ।
उन्मादो बत्क्षते तत्र क्रोधोत्पादनमेव वा ॥

अभयादिचूर्णम् ।

अभया त्रिवृता द्राक्षा कुटजस्य फल वचा ।
इन्द्रवारुणिकामूल पिप्पली गजपिप्पली ॥
सुरप्रिय विषा वह्नि शशाङ्क सूर्य्य एव च ।
एतच्चूर्ण पिबेन्नित्य स्मरोन्मादनिवृत्तये ॥
स्मरोन्मादापहा प्रोक्ता सेविता तु हरीतकी ॥
मेदोहृद्भेषज यच्च यत्कफस्य निवारकम् ॥
स्मरोन्मादे प्रयोक्तव्य तत्तदबुद्धा भिषग्वरै ॥
हित प्रकीर्त्तितञ्चात्र शुक्रमेहघ्नमौषधम् ॥
वातानुलोमन यच्च सुपाच्य वह्निदीपनम् ।
अन्नान्न योजयेत् प्राज्ञो विपरीत विवर्ज्जयेत् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
स्मरोन्मादाधिकार एकपञ्चाशत्तमोऽध्याय ।

# द्विपञ्चाशत्तमोऽध्याय ।

— ☙ —

## गदोद्वेगाधिकार ।

### गदोद्वेगस्य स्वरूपम ।

विना व्याधि व्याधिशङ्का गदोद्वेग इतीरित ।
पदार्थत्वाभाववत्त्वादपदार्थगदश्च स ॥

### अपदार्थगदस्य निदानम् ।

कायेन मनसा भूयान् श्रम शोको बलक्षय ।
नैराश्य मानहानिश्च गदोद्वेगो महाभयम् ॥
दुरदृष्ट बीजदोष सत्त्वस्याभाव एव च ।
अपदार्थगदस्यैते हेतव कथिता बुधै ॥

### तस्य लक्षणम् ।

अद्भुतस्य गदस्यास्य लक्षणान्यद्भुतानि च ॥
कोऽप्येव मन्यते नूनमुदर भुजगोऽविशत् ।
कोष्ठे भ्रमत्यसौ नित्य भुङ्क्ते यद्भुज्यते मया ॥
निर्यास्यति पथा केन केनोपायेन नङ्क्ष्यति ।
किं विधास्यति न। जाने दश्ये वाह दुरात्मना ॥
कोऽपि वा मनुते भेको ममैको मूर्ध्नि सस्थित ।
विघट्टयति मस्तिष्क मारयिष्यति मा ध्रुवम् ॥
कोऽपीत्थ चिन्तयेच्चित्र काय काचमयो मम ।
सञ्जातोऽयमतो रक्ष्य सदाघातात् प्रयत्नत ॥
इत्येव बहुरूपाभिर्व्यर्थचिन्ताभिराकुल ।
अपदार्थगदी शुष्येत् सदा भीत सदासुखी ॥

बहुधा बोधितोऽप्येष सान्त्वितोऽपि पुन पुन ।
चित्ताद् भ्रम दूरीकर्त्तुं भ्रम न शक्न ति न साध्वसम् ॥
यश्चास्य कथयेद्भ्रान्ति तस्मै द्रुह्यात नित्यश ।
प्रीयते च गदोद्वेगी व्याधे सत्त्वात्ववादिनि ॥
गदोद्वेगवता कोष्ठे कस्मिंश्चिदनुभूयते ।
सुतीव्रा वेदना प्राय पाककोष्ठे विशेषत ॥
जिह्वा स्यात कफलिप्तास्य पूति श्वासो निरेति च ।
उतक्लेशश्च तथा वान्तिरित्यश्च जीर्णलक्षणम ॥
प्राखय्य स्पर्शशक्तेश्च पाण्डुत्वमुदरामय ॥

पाककोष्ठे आमाशये ।

हृदि साघातिको व्याधि केन वाप्यनुभूयते ।
गदोद्वेगवतान्येन पुरुषत्वस्य सत्क्षय ॥
ज्वर सततकोऽन्येन दुष्प्रतीकार्य्य एव च ।
किमाश्चर्य्य वेपनाद्य जायते च तदा तदा ॥
इत्थ बहुविधकारा व्याधय कल्पनाकृता ।
भ्रमरूपा प्रजायन्ते नि सत्त्वानाममेधसाम् ॥
शक्यन्ते व्याधयो वक्तु नैते निरवशेषत ।
बुद्धिमद्भिर्लक्षणीया यथास्व दोषलक्ष्म च ॥
प्रायश षोडशादर्व्वाङ् नच पञ्चाशत परम् ।
व्याधिरेष प्रदृश्येत हेतुस्तत्र मनोगति ॥
मासि मासि रज स्रावात् सर्व्वे शुध्यन्ति धातव ।
अत स्नायुगद स्त्रीणामेष प्रायो न जायते ॥

गदोद्वेगस्य चिकित्सा ।

सान्त्वनाश्वासनस्नेहहर्षणै परिचर्य्यया ।

अपदार्थगदाक्रान्त चिकित्सेत् तर्पणेन च ॥
पाचन वह्निकृद यच्च यट वातस्यानुलोमनम ।
पित्तह्वन्नातिकफकृत् तद्द युञ्ज्यादत्र भेषजम् ॥
वातव्याध्युदितान्यत्र तैलानि च घृतानि च ।
युक्त्या युञ्ज्याद्भिषकप्राज्ञो भेषजञ्च रसायनम ॥
गदो मिथ्येति न वदेद्भिषगस्य कदाचन ।
स यद्ब्रवीति वृत्तान्त शृणुयादवधानवान् ॥

अत्र पथ्यापथ्य व्यवस्था ।

हृद्य स्निग्धञ्च पानान्न सुपाच्य देहपोषणम् ।
अपदार्थगदे प्रोक्त शुभायान्यन्न शर्म्मणे ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
गदोद्वेगाधिकार द्विपञ्चाशत्तमोऽध्याय ।

---

## त्रिपञ्चाशत्तमोऽध्याय ।

—— ० ——

### मूर्च्छाधिकार ।

मूर्च्छाया निदान सम्प्राप्तिश्च ।

क्षीणस्य बहुदोषस्य विरुद्धाहारसेविन ।
वेगाघातादभीघाताद्धीनसत्त्वस्य वा पुन ॥
करणायतनेषूग्रा वाह्येष्वाभ्यन्तरेषु च ।
निविशन्ते यदा दोषास्तदा मूर्च्छन्ति मानवा ॥

बहुदोषस्याधिकदोषस्य नत्वनेकदोषस्य, तथा सति मूर्च्छा त्रिदोषजैव स्यात्, तथैवास्तु को दोष ? अत्र पृथग्दोषाणा मूर्च्छाना वक्ष्यमाणत्वात्। वेगाघातात् मलादे अभिघातात् लगुडादिना, हीनसत्त्वस्य स्वल्पसत्त्वगुणस्य अर्थादधिकतमो गुणस्य, यत उक्त, मूर्च्छा पित्ततम प्रायेति। करणायतनेषु करण मन तस्यायतनेषु स्वस्थानेषु वाह्येषु कर्म्मेन्द्रियेषु, आभ्यन्तरेषु बुद्धीन्द्रियेषु।

तस्य सामान्य लक्षणम्।

सञ्ज्ञावहासु नाडीषु पिहितास्वनिलादिषु।
तमोऽभ्युपैति सहसा सुखदु खव्यपोहकृत्।
सुखदु खव्यपोहाच्च नर पतति काष्ठवत्।
मोहो मूर्च्छेति तामाहु षड्विधा सा प्रकीर्त्तिता॥
वातादिभि शोणितेन मद्येन च विषेण च।
षट्स्वप्येतासु पित्तन्तु प्रभुत्वेनावतिष्ठते॥

तस्या पूर्व्वरूपम्।

हृत्पीडा जृम्भण ग्लानि सञ्ज्ञादौर्ब्बल्यमेव च।
सर्व्वासा पूर्व्वरूपाणि यथास्व ता विभावयेत्॥

सञ्ज्ञादौर्ब्बल्य असम्यगज्ञानत्वम्। यथास्व ता विभावयेत् ता मूर्च्छा यथास्व वातजादिभेदेन जानीयात् व्यक्तरूपावस्थाया न तु पूर्व्वरूपावस्थायाम्।

वातजाया मूर्च्छाया लक्षणम्।

नील वा यदि वा कृष्णमाकाशमथवारुणम्।
पश्यस्तम प्रविशति शीघ्रञ्च प्रतिबुध्यते॥

(द, ३०)

वेपथुश्चाङ्गमर्द्दश्च प्रपीडा हृदयस्य च ।
कार्श्यं श्यावारुणाच्छाया मूर्च्छाये वातसम्भवे ॥

नील नीलवर्णं, कृष्ण कज्जलाभं, अरुण अलक्तरागम् । तम प्रविशति मूर्च्छति । श्यावारुणाच्छाया गात्रस्य । मूर्च्छाया मूर्च्छायोऽपि पर्य्याय । यत उक्तम । सञ्ज्ञोपघातो मूर्च्छायो मूर्च्छा स्यान्मूर्च्छन तथा । कश्मल प्रलयो मोह सन्न्यासस्तु मृतोपम इति ।

पित्तजाया लक्षणम् ।

रक्त हरितवर्णं वा वियत पीतमथापि वा ।
पश्यस्तम प्रविशति सस्वेदश्च प्रबुध्यते ॥
सपिपास ससन्तापो रक्तपीताकुलेक्षण ।
सभिन्नवर्च्चा पीताभो मूर्च्छाये पित्तसम्भवे ॥

कफजाया लक्षणम् ।

मेघसङ्काशमाकाश तमोभिर्वा घनैर्वृतम् ।
पश्यस्तम प्रविशति चिराच्च प्रतिबुध्यते ॥
गुरुभि प्रावृतैरङ्गैर्यथैवार्द्रेण चर्म्मणा ।
सप्रसेक सहृल्लासो मूर्च्छाये कफसम्भवे ॥

मेघसङ्काश शुभ्रमेघसङ्काशमित्यर्थं । घनैर्निविडैस्तमोभि रन्धकारै । गुरुभिरङ्गैरुपलक्षित ।

चरकोक्त त्रिदोषजमूर्च्छा लक्षणम् ।

सर्व्वाकृति सन्निपातादपस्मार इवागत ।
स जन्तु पातयत्याशु विना वीभत्सचेष्टितै ॥

अपस्मार इवागतस्तेन महताभिघातेन पतित चिरेण प्रतिबुध्यते च तर्हि तयो को भेद इतत्र आह । सान्निपातिक

मूर्च्छाय फेनवमनदन्तघट्टनाक्षिविकृत्यादिभिर्वीभत्सचेष्टितै विनापि पातयति ।

रक्तजाया निदानम् ।

पृथिव्यम्भस्तमोरूप रक्तगन्धस्तदन्वय ।
तस्माद्रक्तस्य गन्धेन मूर्च्छन्ति भुवि मानवा ॥
द्रव्यस्वभाव इत्येके दृष्ट्वा यदभिमुह्यति ॥

रक्तेन मूर्च्छितस्य लक्षणम् ।

स्तब्धाङ्गदृष्टिस्त्वस्रजा गूढोच्छ्वासश्च मूर्च्छित ॥

मद्यजाया विषजायाश्च निदानम ।

गुणास्तीव्रतरत्वेन स्थितास्तु विषमद्ययो ।
त एव तस्मात्ताभ्यान्तु मोहौ स्याता यथेरितौ ॥
त एव गुणा लघुरुक्षाशुविशदादय ।

मद्यजाया लक्षणम् ।

मद्येन प्रलपन् शेते नष्टविभ्रान्तमानस ।
गात्राणि विक्षिपन् भूमौ जरा यावन्न याति तत ॥

विषजाया लक्षणम् ।

वेपथु स्वप्नतृष्णा स्युस्तमश्च विषमूर्च्छिते ।
वेदितव्य तीव्रतर यथास्व विषलक्षणै ॥

विषस्य मूलकन्दफलपत्रक्षीरादिभेदभिन्नस्य यथास्व लक्षणमुक्त सुश्रुते कल्पस्थाने, तल्लक्षण मद्यापेक्षया तीव्रतर वेदितव्यम् ।

मूर्च्छा पित्ततम प्राया रज पित्तानिलाद् भ्रम ।
तमोवातकफात तन्द्रा निद्रा श्लेष्मतमोभवा ॥

सञ्ज्ञानाशसाधर्म्म्यात् मूर्च्छाभ्रमतन्द्रानिद्राणां को भेद ? इत्यत आह। मूर्च्छा पित्ततम प्रायेत्यादि।

भ्रमरोगस्य लक्षणम्।

एतद् भ्रमति विश्वं वा देहं वा भ्रमति स्वकम्।
ज्ञानमेवंविधं प्रोक्तं भ्रमरोगाभिधानकम्॥

तन्द्राया लक्षणम्।

इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः।
निद्रार्त्तस्येव यस्येति तस्य तन्द्रा विनिर्द्दिशेत्॥

इन्द्रियार्थेषु विषयेषु असंवित्तिरसम्यग्ज्ञानम्। इति इन्द्रियार्थासम्यग्ज्ञानादि। यस्येत्यत्र यस्येहा इति पाठान्तरे ईहा चेष्टा जृम्भादिरूपः कायिकव्यापारः।

निद्राया लक्षणम्।

यदा तु मनसि क्लान्ते कर्म्मात्मानः क्लमान्विताः।
विषयेभ्यो निवर्त्तन्ते तदा स्वपिति मानवः॥

कर्म्मात्मान इन्द्रियाणि।

सन्न्यासस्य सम्प्राप्तिर्लक्षणञ्च।

वाग्देहमनसां चेष्टामाक्षिप्यातिबला मलाः।
सन्न्यस्यन्त्यबलं जन्तुं प्राणायतनमाश्रिताः॥
स ना सन्न्याससन्न्यस्तः काष्ठीभूतो मृतोपमः।
प्राणैर्विमुच्यते शीघ्रं मुक्त्वा सद्यःफलां क्रियाम्॥

आक्षिप्य विन्यस्य। सन्न्यस्यन्ति मूर्च्छयन्ति। प्राणायतनं हृदयम्। सन्न्यस्तः मूर्च्छितः। काष्ठीभूतः क्रियारहितः अतएव मृतोपमः। सद्यःफलां क्रियां सूचीव्यधनाञ्जनावपीडकपिकच्छु-घर्षणादिरूपाम्।

दोषेषु मदमूर्च्छाया गतवेगेषु देहिनाम् ।
स्वयमप्युपशाम्यन्ति सन्न्यासो नौषधैर्विना ॥

मदश्च मूर्च्छायाश्च मदमूर्च्छाया । मद अप्रवृद्ध उन्माद । मूर्च्छाया मूर्च्छा । मूर्च्छाया इति मूर्च्छायशब्दस्य जसि रूपम् । मूर्च्छायशब्दो मूर्च्छाशब्दस्य पर्य्याय । मदो मूर्च्छाश्च औषधैरुपशाम्यन्ति, वेगहानौ स्वयमपि च उपशाम्यन्ति । सन्न्यासस्तु कदापि स्वय नोपशाम्यति, तच्छान्तये भेषजमवश्य प्रयोक्तव्यम् ।

शैशवसन्न्यासस्य निदान लक्षणञ्च ।

दुष्टस्तन्यस्य पानाच्च सदा शीतगृहे स्थिते ।
वातातपविहीने वा दुष्टानिलविदूषिते ॥
पानाशनविहारैश्च दोषलैर्बहुभि शिशु ।
सन्न्यासाख्येन रोगेण पीड्यते क्रिमिभिस्तथा ॥
उत्तारनयन स स्यादाचिप्ताङ्गस्त्वसञ्ज्ञक ।
दारुवत्पतितो भूमौ दृढकायो मृतोपम ।
नाम्ना शैशवसन्न्यासो गदोऽय शिशुपीडन ।
क्रिया सद्य फला चात्र रेचनञ्च हित मतम् ॥

मूर्च्छायाश्चिकित्सा ।

सेकावगाहौ मणय सहारा
शीता प्रदेहा व्यजनानिलश्च ।
शीतानि पानानि च गन्धवन्ति
सर्व्वासु मूर्च्छास्वनिवारितानि ॥

रक्तजायान्तु मूर्च्छाया हित शीतक्रियाविधि ॥
मृदुवीर्य्यं हित मद्य मूर्च्छाये मद्यसम्भवे ।

सेवन फणिफेनस्य स्तोकमात्रस्य चाम्भसा ॥
वमन पीतमद्यस्य मद्यमूर्च्छाहर मतम् ॥
शीतक्रियाश्च निखिला निद्रा चात्र हिता मता ॥
विषजाया विषघ्नानि भेषजानि प्रयोजयेत् ॥
कोलमज्जोषणोशीरकेशर शीतवारिणा ।
पीत मूर्च्छा जयेल्लीढा कृष्णा वा मधुसयुता ॥
पीन पयश्च धारोष्ण मूर्च्छायान्तकर परम् ॥

मूर्च्छायस्य मूर्च्छाया अन्तकर नाशकम् ।

शिरीषबीजगोमूत्रकृष्णामरिचसैन्धवै ।
अञ्जन स्यात प्रबोधाय सरसोनशिलावचै ।
अञ्जन मस्यगारब्ध मधुसिन्धुशिलोषणै ।
प्रमोहघ्नोहि भवति भाषित भिषजा वरै ॥
मधुकसारसिन्धूत्थवचोषणकणा समा ।
श्लक्ष्णा पिष्टाम्भसा नस्य कुर्य्यात् सज्ञोदयाय च ॥
पिबेद् दुरालभाक्काथ सघृत भ्रमशान्तये ।
त्रिफलाया प्रयोगो वा प्रयोग पयसोऽपि वा ॥
रसायनाना कौम्भस्य सर्पिषो वा प्रशस्यते ॥

रसायनाना शिलाजत्वादि रसायनौषधानाम। कौम्भ सर्पिर्दशाब्दिकम।

मधुना हन्त्यपयुक्ता त्रिफला रात्रौ गुडार्द्रक प्रात ।
सप्ताहात पथ्यभुजो मदमूर्च्छाकामलोन्मादान् ॥

सन्न्यासस्य चिकित्सा ।

प्रभूतदोषस्तमसोऽतिरेकात्
सम्मूर्च्छितो नैव विबुध्यते य ।

सन्यस्तसञ्ज स हि दुश्चिकित्स्यो
नरो भिषग्भि परिकीर्त्तितोऽसौ ॥

अञ्जनान्यवपीडाश्च धूमा प्रधमनानि च ।
सूचिभिस्तोदन शस्त दाह पीडा नखान्तरे ॥
लुञ्चन केशलोम्नाञ्च दन्तैर्दंशनमेव च ।
आत्मगुप्तावघर्षश्च हितस्तस्यावबोधने ॥

अवपीड कल्कीकृतौषधस्य नासापुटे दानम् । प्रधमन औषधचूर्णस्य द्विमुख्या नाडिकया मुखवातेन दानम् । तस्य सन्यस्तस्य ।

मूर्च्छास्वपि च सर्व्वासु सन्यासाख्ये तथा गदे ।
अपस्मारोन्मादहरान् योगान् युक्त्या प्रयोजयेत् ॥

शैशवसन्यासस्य चिकित्सा ।

व्याधौ शैशवसन्यासे निदानाना निराकृतौ ।
विदध्यात् सर्व्वथा यत्न कर्म्मदोषहर तथा ॥
कुर्य्याच्च रुबुतैलेन रसचूर्णेन वा पुन ।
रेचन शिशुसन्यासे स्वेदस्तत्रोदरे हित ॥
अरोगिण्या शिशु धात्र्या स्तन्य शुद्ध प्रपाययेत् ।
स्तन्यस्य शोधन वापि कुर्य्याद्‌ यस्या पिबेत् स तत् ॥

स शिशु । तत् स्तन्यम् ।

क्रिमिजे शिशुसन्यासे क्रिमीणा हरण हितम् ॥
कणामधुयुत सूत मूर्च्छाया प्राशयेद्भिषक् ॥

सूत मारितम् ।

ताम्रचूर्ण समोशीर केशर शीतवारिणा ।
पीत मूर्च्छा द्रुत हन्याद्‌ वृत्रमिन्द्राशनिर्यथा ॥

शुण्ठीकृष्णाशतावाश्च साभया गुडसंयुता।
प्राशिता नाशयत्याशु भ्रमरोगं सुदारुणम्॥
तांम्र दुरालभाक्वाथं पीतन्तु घृतसंयुतम्।
निवारयेद्भ्रमं शीघ्रं समयोऽत्र न विद्यते॥
सैन्धवं श्वेतमरिचं सर्षपाः कुष्ठमेव च।
वस्तमूत्रेण सम्पिष्टं नस्यं तन्द्रानिवारणम्॥

वस्तमूत्रेण छागमूत्रेण।

शिरीषबीजं लशुनं पिप्पली लवणोत्तमम्।
मनःशिलाञ्च मधुना सूक्ष्मा यत्नेन मर्द्दयेत्॥
तस्याञ्जनेन तन्द्राशु सनिद्रा विनिवर्त्तते॥
तन्द्रिणं सुखशय्यायां प्रकामं स्वापयेद्भिषक्॥

निद्रानाशस्य चिकित्सा।

पिप्पलीचूर्णयुक्तस्य गुडस्य परिलेहनात्।
चिरादपि च संनष्टां निन्द्रामाप्नोति मानवः॥
इक्षुरः पीतकी माषाः सुरा मांसं घृतं पयः।
गोधूमगुडमत्स्याश्च निद्रां कुर्व्वन्ति देहिनाम॥
शङ्काशनमञ्जाचीर पादलेपात् तदर्थकृत्॥

---

मूर्च्छान्तकरसः।

सिन्दूरं माक्षिकं हेम शिलाजत्वयसी तथा।
शतमूल्या विदार्य्याश्च स्वरसेन विभावयेत्॥
सूक्ष्मा पिष्ट्वा ततः कुर्य्याद्वटिका वल्लसम्मिताः।
रसो मूर्च्छान्तको हन्यादसौ मूर्च्छां शिवोदितः॥

---

तैल नारायणाद्यञ्च कल्याणाद्य तथा घृतम ।
मूर्च्छास्वपि च सर्व्वासु सन्यासे च प्रयोजयेत् ॥

अत्र पथ्यापथ्य व्यवस्था ।

यवो लोहितशालिश्च वार्त्ताकुश्च पटोलकम ।
यूषा जाङ्गलमासश्च रोहिताद्यास्तथा झषा ॥
धारोष्ण गोपयस्तक्र स्नान नद्या जलेऽमले ।
हितान्येतानि मूर्च्छाया सन्यासाख्ये तथा गदे ॥
तीक्ष्ण द्रव्य क्रिया तीक्ष्णा वेगानाञ्च विधारणम् ।
क्रोधशोकाद्यभिभव इत्येतैर्व्वर्द्धते गद ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने मूर्च्छाभ्रमसन्नग्रार
शैशवसन्नग्रासनिद्रानाशाधिकारस्त्रिपञ्चाशत्तमोऽध्याय ।

---

## चतु.पञ्चाशत्तमोऽध्यायः ।

अपस्माराधिकार ।

अपस्मारस्य निदान सम्प्राप्तिश्च ।

चिन्ताशोकादिभिर्दोषा क्रुद्धा हृत्स्रोतसि स्थिता ।
कृत्वा स्मृतेरपध्वसमपस्मार प्रकुर्व्वते ॥

तस्य सङ्ख्या ।

वातात् पित्तात कफात् सर्व्वैर्दोषै स स्याच्चतुर्विध

तस्य सामान्य लक्षणत्।

तम प्रवेश सरम्भो दोषोद्रेकहृतस्मृति ।
अपस्मार इति ज्ञेयो गदो घोरतरो हि स ॥

दोषोद्रेकहृतस्मृतेरिति पाठे दोषोद्रेकहृतस्मृते पुरुषस्य इत्यर्थ ।

तस्य पूर्व्वरूपम्।

हृत्कम्प शून्यता स्वेदो ध्यान मूर्च्छा प्रमूढता।
निद्रानाशश्च तस्मिंश्च भविष्यति भवन्त्यथ ॥

वातिकस्यापस्मारस्य लक्षणम।

कम्पते प्रदशेद् दन्तान् फेनोद्वामो श्वसित्यपि।
अभितोऽरुण कृष्णानि पश्येद्रूपाणि चानिलात् ॥

पैत्तिकस्य तस्य लक्षणम्।

पीतफेनाङ्गवक्त्राक्ष पीतासृग्रूपदर्शन ।
सतृष्णोष्णानल व्याप्तलोकदर्शी च पैत्तिके ॥

श्लैष्मिकस्य लक्षणम्।

शुक्लफेनाङ्ग वक्त्राक्ष शीतो हृष्टाङ्गजो गुरु ।
पश्येच्छुक्लानि रूपाणि श्लैष्मिके मुच्यते चिरात् ॥

सान्निपातिकस्य लक्षण तस्यारिष्टत्व तथेतरेषामरिष्ट लक्षणञ्च।

समस्तैर्लक्षणैरेतैर्विज्ञातव्यस्त्रिदोषज ।
अपस्मार स चासाध्यो य क्षीणस्यानवश्च य ॥
प्रस्फुरन्त सुबहुश क्षीण प्रचलितभ्रुवम्।
नेत्राभ्याञ्च विकुर्व्वाणमपस्मारो विनाशयेत् ॥

अपस्मारस्य प्रकोपकाल ।

पञ्चाद् वा द्वादशाहाद् वा मासाद् वा कुपिता मला ।
अपस्माराय कुर्व्वन्ति वेग किञ्चिदथान्तरम् ॥
देवे वर्षत्यपि तथा भूमौ वीजानि कानिचित् ।
शरदि प्रतिरोहन्ति तथा व्याधिसमुच्छ्रया ॥

अपस्मारस्य चिकित्सा ।

तैलेन लशुन सेव्य पयसा च शतावरी ।
ब्राह्मी रसश्च मधुना सर्व्वापस्मारभेषजम् ॥
चूर्णै सिद्धार्थकादीना भक्षितैरथवापि तै ।
गोमूत्रपिष्टै सर्व्वाङ्गलिप्तै शाम्यत्यपस्मृति ॥
सिद्धार्थ शिग्रु कट्वङ्ग किणिहीभि प्रलेपनम् ।
चतुर्गुणे गवा मूत्रे तैलमभ्यञ्जने हितम् ॥
निर्गुण्डीभववन्दाक नावनस्य प्रयोगत ।
उपैति सहसा नाशमपस्मारो महागद ॥
मनोह्वा तार्क्ष्यशैलञ्च शकृत् पारावतस्य च ।
अञ्जनाद्धन्त्यपस्मारमुन्मादञ्च विशेषत ॥

मनोह्वा मन शिला । तार्क्ष्यशैल रसाञ्जनम ।

नकुलोलूक मार्जार गृध्रकीटाहि काकजे ।
तुण्डै पक्षै पुरीषैश्च धूपन कारयेद् भिषक् ॥
य खादेत् चीरभक्ताशी माक्षिकेण वचारज ।
अपस्मार महाघोर चिरोत्थ स जयेद् ध्रुवम् ॥
कुष्माण्डकफलोत्थेन रसेन परिपेषितम् ।
अपस्मारविनाशाय यष्ट्याह्व स पिबेत् त्र्यहम् ॥
मास्यास्तु नावनाद् धूमादशनाच्च महागद ।

अपस्मारश्चिरोत्थोऽपि सद्य एव विनश्यति ॥
पञ्चकोलं समरिचं त्रिफला विडसैन्धवम् ।
कृष्णाविडङ्गं पूतीकं यमानी धान्यजीरकम् ॥
पीतमुष्णाम्बुना चूर्णं वातश्लेष्मामयापहम् ।
अपस्मारे तथोन्मादेऽप्यर्शःसु ग्रहणीगदे ॥
आमवाते महाघोरे शोथे शूले च शस्यते ।
एतत् कल्याणकं चूर्णं नष्टस्याग्नेश्च दीपनम् ॥
पञ्चगव्यं महत् स्वल्पं महाचैतससञ्ज्ञकम् ।
कुष्माण्डाख्यं तथा सर्पी रसश्च चण्डभैरवः ॥
भूतभैरवनामा च तैलं नारायणाभिधम् ।
तथा पलङ्कषाद्यञ्च हितान्युक्तान्यपस्मृतौ ।

अत्र पथ्यापथ्य व्यवस्था ।

सर्पिः पुरातनं मुद्गा गोधूमा रक्तशालयः ।
कूर्म्मामिषं धन्वरसो दुग्धं ब्राह्मीदलं वचा ॥
पटोलं वृद्धकुष्माण्डं वास्तूकं स्वादु दाडिमम् ।
शोभाञ्जनं नारिकेलं परूषामलकं तथा ॥
एवं विधानि चान्यानि सुखदानि स्मृतिक्षये ॥
चिन्ता शोको भयं क्रोधः स्वशुचीन्यशनानि च ।
मद्यं मत्स्यो विरुद्धान्नं तीक्ष्णोष्णं गुरु भोजनम् ॥
आयासोऽतिव्यवायश्च पूज्यपूजाव्यतिक्रमः ।
बिम्बशाषाढफलं शाकं निद्राक्षुत्तृड्विनिग्रहः ॥
तोयावगाहनं शैलद्रुमाद्यारोहणं तथा ।
इत्यादीनि स्मृतिध्वंसे वर्ज्जनीयानि यत्नतः ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
अपस्माराधिकारः चतुःपञ्चाशत्तमोऽध्यायः ।

# योषापस्माराधिकारः ।



## योषापस्मारस्य निदानम् ।

शोणितस्य क्षयाद्वापि तथाधिक्यादजीर्णतः ।
कोष्ठरोधान्मनोभङ्गादत्युद्वेगाच्च शोकतः ॥
रजोऽभावाच्च योषाणां जरायुविकृतेस्तथा ।
अशक्तेरपि नैष्ठुर्य्यात् पत्युरस्नेहतस्तथा ।
वैधव्यजन्यादाधेश्च योषापस्मारसञ्ज्ञकः ।
गदः सञ्जायते कृच्छ्रो मनोदेहप्रतापनः ॥
योषितामेव बाहुल्यादयत एष भवेद् गदः ।
अपस्मारप्रकृतिकस्तेनाख्यैषाभिधा मता ॥
कालोऽस्य यौवनं व्याधेर्नार्व्वाग् द्वादशवर्षतः ।
परः पञ्चाशतो वापि व्याधिरेष प्रजायते ॥

## अस्य पूर्व्वरूपम् ।

हृद्रुजा जृम्भणं सादो वर्षणो मनसोऽपि च ।
भवेद्भविष्यति गदे योषापस्मारसञ्ज्ञके ॥

## अस्य लक्षणम् ।

वैचित्त्यं बुद्धिविभ्रान्तिर्हास्यं क्रन्दनमेव च ।
उच्चैः क्रोशः प्रलपनं ज्योतिर्द्वेषस्तथा भ्रमः ।
औद्धत्यं श्वासकृच्छ्रञ्च कण्ठामाशयवेदना ।
प्राबल्यं स्पर्शशक्तेश्च क्वचिदङ्गे सदा व्यथा ॥

अलीकवर्त्तुलोत्थानमाकण्ठमुदरादपि।
सदत्त्य बुद्धिमूर्च्छा च व्याधावस्मिन् प्रजायते॥

अस्य चिकित्सा।

यद् धातुपोषक पानमन्नमौषधमेव च।
कोष्ठशुद्धिकरञ्चापि तत्तदत्र प्रयोजयेत्॥
मूर्च्छाया शीततोयेन सेक शिरसि चक्षुषो।
शिरोविरेचन वापि प्रयोज्य तन्निवृत्तये॥
अत्र प्रयोजयेत् सर्व्व मूर्च्छापस्मारभेषजम॥
जरायुदोष निखिल प्रतिकुर्य्याद यथाविधि॥
योषापस्मरण सान्त्वै प्रियदानाच्च शाम्यति॥

बृहन् भूतभैरवरस।

द्विगुण स्वर्णसिन्दूर तत्सम हेमभस्मकम्।
मुक्ता प्रवाल कान्तायो राजपट्ट सम मतम॥
कन्यानीरेण समर्द्य भेकपर्ण्या रसेन च।
पत्रैरेरण्डजै र्वद्धा धान्यराशौ निधापयेत्॥
त्रिदिनान्ते समुद्धृत्य वल्लमात्रा वटी चरेत।
एकैका वटिका खादेत् त्रिफला शर्करा-युताम्॥
अथवा पयसा सार्द्ध भूतोन्माद विनाशिनोम्।
अपस्मार महाघोर योषापस्मारमेव च॥
हन्त्यवश्य मद मूर्च्छा विविधा वातवेदना॥

# पञ्चपञ्चाशत्तमोऽध्याय ।

---

### मदात्ययाधिकार ।

ये विषस्य गुणा प्रोक्तास्तेऽपि मद्ये प्रतिष्ठिता ।
तेन मिथ्योपचारेण भवत्युग्रो मदातय ॥
किन्तु मद्य स्वभावेन यथैवान्न तथा स्मतम् ।
अयुक्तियुक्त रोगाय युक्तियुक्त तथाम्तम् ॥
प्राणा प्राणभृतामन्न तदयुक्त्या हिनस्त्यसून् ।
विष प्राणहर तच्च युक्तियुक्त रसायनम् ॥
विधिना मात्रया काले हितैरन्नैर्यथाबलम् ।
प्रहृष्टो य पिबेन्मद्य तस्य स्यादमृतोपमम् ॥
स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम् ।
भवेदायु प्रकर्षाय बलायोपचयाय च ॥
कम्यता मनसस्तुष्टिस्तेजो विक्रम एव च ।
विधिवत् सेव्यमाने तु मद्ये सन्निहिता गुणा ॥

मद्यपानजाश्चतुर्विधा मदावस्था ।

बुद्धिस्मृति प्रीतिकर सुखश्च
पानान्न निद्रारतिवर्द्धनश्च ।
सपाठ गीतस्वर वर्द्धनश्च
प्रोक्तोऽतिरम्य प्रथमो मदो हि ॥

द्वितीयो मद ।

अव्यक्त बुद्धिस्मृतिवाग् विचेष्ट
सोन्मत्त लीलाकृतिरप्रशान्त ।

आलस्य निद्राभिहतो मुहुश्च
मद्येन मत्त पुरुषो मदेन ॥

तृतीयो मद ।

गच्छेदगम्या न गुरूश्च मन्येत्
खादेदभक्ष्याणि च नष्टसञ्ज्ञ ।
ब्रूयाच्च गुह्यानि हृदि स्थितानि
मदे तृतीये पुरुषोऽस्वतन्त्र ॥

चतुर्थो मद ।

चतुर्थे तु मदे मूढो भग्नदार्व्विव निष्क्रिय ।
कार्य्याकार्य्यविभागाज्ञो मृतादप्यपरो मृत ॥
को मद तादृश गच्छेदुन्मादमिव चापरम।
बहुदोषमिवामूढ कान्तार स्ववश कृती ॥

निर्भक्तमेकान्तत एव मद्य
निषेव्यमाण मनुजेन नित्यम्।
आपादयेत् कष्टतमान् विकारा
नापादयेच्चापि शरीरभेदम ॥
क्रुद्धेन भीतेन पिपासितेन
शोकाभितप्तेन बुभुक्षितेन।
व्यायाम भाराध्व परिक्षतेन
वेगावरोधाभिहतेन चापि ॥
अत्यम्बु भक्षावततोदरेण
साजीर्णभुक्तेन तथाबलेन।
उष्णाभितप्तेन च सेव्यमान
करोति मद्य विविधान् विकारान् ॥

पानात्यय परमद पानाजीर्णमथापि च ।
पानविभ्रममुग्रञ्च यन्मद्रोग करोति तत् ॥

तत अविधिपीत मद्यम् ।

वातिकस्य मदात्ययस्य लक्षणम् ।

हिक्काश्वासशिर कम्प पार्श्वशूलप्रजागरै ।
विद्याद् बहुप्रलापस्य वातप्राय मदात्ययम् ॥

पैत्तिकस्य तस्य लक्षणम ।

तृष्णादाह ज्वरस्वेद मोहातिसार विभ्रमै ।
विद्याद्धरित वर्णस्य पित्तप्राय मदात्ययम ॥

श्लैष्मिकस्य लक्षणम ।

छर्द्यरोचक हृल्लास तन्द्रास्तैमित्य गौरवै ।
विद्याच्छीतपरीतस्य कफप्राय मदात्ययम् ॥

सान्निपातिकस्य लक्षणम् ।

ज्ञेयस्त्रिदोषजश्चापि सर्व्वैर्लिङ्गैर्मदात्यय ॥

परमदस्य लक्षणम् ।

श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च ।
विण्मूत्र सन्निरथ तन्द्रिररोचकश्च ।
लिङ्ग परस्य तु मदस्य वदन्ति तज्ज्ञा
स्तृष्णा रुजा सिरसि सन्धिषु चापि भेद ॥

पानाजीर्णस्य लक्षणम् ।

आध्मानमुग्रमथचोद्गिरण विदाह
पानेऽजरा समुपगच्छति लक्षणानि ।

उद्गिरण वान्तिरुद्गारो वा । पीयत इति पान मद्यम् ।
अजरा अजीर्णत्वम् ।

पानविभ्रमस्य लक्षणम्।

हृद्गात्रतोद कफसस्रव कण्ठधूम-
मूर्च्छा वमि ज्वर शिरोरुजन प्रदाहा।
द्वेष सुरान्नविकृतिष्वपि तेषु तेषु
त पानविभ्रममुशन्त्यखिलेन धीरा॥
अखिलेनेति भावप्रधानो निर्देश अखिलतयेत्यर्थ।

मद्यपानज यकृद्रोग।

मद्याना सतताभ्यासात् तीव्रमद्यनिषेवणात्।
निरन्नादपि पानाच्च यकृद्रोगा भवन्ति हि॥
यकृद्रोगाधिकारे तान सलक्षणचिकित्सितान्।
पुरस्तिन्नकेभ्यो वो व्यासतोऽहमकीर्त्तयम्॥

मदात्ययादीनामुपद्रवा।

हिक्काज्वरौ वमथु वेपथु पार्श्वशूला
कासभ्रमावपि च पानहत भजन्ते॥

तेषामरिष्ट लक्षणानि।

हीनोत्तरौष्ठमतिशीतममन्ददाह
तैल प्रभास्यमपि पानहत त्यजेत्तु।
जिह्वौष्ठदन्त मसित त्वथवापि नील
पीते च यस्य नयने रुधिरप्रभे वा।

मदात्ययादीना चिकित्सा।

मद्योत्थानाञ्च रोगाणा मद्यमेव हि भेषजम्।
यथा दहनदग्धाना दहनस्वेदन हितम॥
मिथ्यातिहीन मद्येन यो व्याधिरुपजायते।
समेनैव निपीतेन मद्येन स हि शाम्यति॥

मद्य सौवर्च्चलव्योषयुक्त किञ्चिज्जलान्वितम् ।
जीर्णमद्याय दातव्य वातपानात्ययापहम् ॥
मुद्गयूष सितायुक्त स्वादुर्वा पैशितो रस ।
पित्तपानात्यये योज्या सर्व्वतश्च क्रिया हिमा ।
मद्य पुरातन तत्र शीतवीर्य्यमथापि वा ।
द्राक्षामलकतोयात्त सितया सह शस्यते ॥
पानात्यये कफोद्भूते लङ्घनञ्च यथाबलम ।
दीपनीयौषधोपेत पिबेन्मद्य समाहित ॥
सर्व्वजे सर्व्वमेवेद प्रयोक्तव्य चिकित्सितम् ।
आभि क्रियाभिर्मिश्राभि शान्ति याति मदात्यय ॥
मन्थ खर्ज्जूर मृद्वीका वृक्षाम्लाम्लक दाडिमै ।
परूषकै सामलकैर्युक्तो मद्यविकारनुत ॥
( जले चतुष्पले शीते क्षुस्र द्रव्यपल क्षिपेत ।
मृत्पात्रे मर्द्दयेत् सम्यक् तस्माच्च द्विपल पिबेत ॥ )

द्राक्षा कपित्थफल दाडिम पानक यत्
तत् पानविभ्रमहर मधुशर्कराब्यम ॥
पथ्याक्काथेन समिद्ध घृत धात्रीरसेन वा ।
सर्पि कल्याणक वापि मदमूर्च्छाहर पिबेत ॥

मद्य पीत्वा यदि ना तत्क्षणमवलेढि शर्करा सघृताम ।
जातु न मदयति मद्य मनागपि प्रथितवीर्य्यमपि ॥
प्रसङ्गात् कोद्रवादिमदचिकित्सा लिख्यते ।
सगुड कुष्माण्डरस शमयति मदमाशु कोद्रवजम ।
धत्तूरजञ्च दुग्ध सशर्करञ्चाशु पानेन ॥
सच्छर्द्दि मूर्च्छातिमार मद्य पूगफलोद्भवम् ।

सद्य प्रशमयेत् पीतमाकण्ठैर्वारि शीतलम् ॥
जातीफलमद शीघ्र हन्ति पथ्या निषेविता ।
शीततोयावगाहश्च शर्करा दधियोजिता ।
विभीतमद्य शान्त्यर्थमेतदेव चिकित्सितम ॥
हिता मदात्यये प्रत्ना शालि मुद्ग यवा सिता
पय पटोल खर्ज्जूर दाडिम नारिकेलकम ॥
द्राक्षा धात्री विचित्रान्न हृद्य मद्य परूषकम् ।
लावतित्तिरिदक्षैण शशाच्छागाविजो रस ॥
शिशिर पवनो धाराग्रह चन्द्रस्य रश्मय ।
चन्दनालेपन स्नान प्रियालिङ्गनमेव च ॥
ताम्बूल धूमपानञ्च लावण स्वेदनाञ्जने ।
वर्ज्यान्यखिलतीक्ष्णानि व्या ो मद्यसमुद्भवे ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
मदात्ययाविकार पञ्चपञ्चाशत्तमोऽध्याय ।

---

## षट्पञ्चाशत्तमोऽध्याय ।

---

### तत्त्वोन्मादाधिकार ।

#### तत्त्वोन्मादस्य स्वरूपम ।

अहो मम महद्भाग्य लब्धा यद ब्रह्मण कृपा ।
इत्येव भ्रमजो मोहस्तत्त्वोन्माद इतीरित ॥

तत्त्वोन्मादो हर्षमोक्ष ब्रह्ममोहश्च स स्मृत ।
वृथाधीप्रभवो व्याधिरय सद्भिर्निरूपित ॥
किंरूप कुत्र वा ब्रह्म नैतज्जानाति कोऽप्यहो ।
पुराणैर्दर्शनैर्वा न लब्ध यद् ब्रह्मदर्शनम ॥
एकेशकर्त्तृक विश्व वदन्त्यन्ये निरीश्वरम् ।
ब्रह्माण्ड ब्रह्मतर्केण व्याकुल बहुधा वृथा ॥
मान दुरूह सत्ताय मास्ता दूरे दयादिकम ।
अनिर्णीतमनिर्णेय तदेवमवधारय ॥
मदथ ब्रह्म कुर्व्वेतज्जल्पेन मम वैरिणम ।
धन देहि यशो देहि देहि राज्यमकण्टकम् ॥
विशालनेत्रा सुदती पीनोन्नतपयोधराम् ।
नितम्बिनी क्षीणमध्या स्मरकेलिकलाविदम ॥
नित्य नर्म्मप्रिया तन्वी रम्भोरु रसिकेश्वरीम ।
मद्व्रता नित्यसन्तुष्टा सुन्दरी देहि कामिनीम् ॥
इत्यमर्थनमात्रेण ब्रह्म भीत ससम्भ्रमम् ।
भ्रान्तबुद्धे न मन्यस्व प्रार्थित साधयिष्यति ॥
कदाचित् प्रार्थना कापि यदि ते सफला भवेत् ।
विद्धि तत काकतालीय तत्र ब्रह्म न कारणम् ॥
न स्तवैर्हृष्यति ब्रह्म नापि द्वेष्टि च निन्दया ।
अस्तिवादी प्रियो नास्य नास्तिवादी न चाप्रिय ॥
न मुर्खेऽनादरस्तस्य बहुमानो न पण्डिते ।
धनिनो वा भय नास्य न दरिद्रे च ताडनम ॥
श्वपाके यवने वापि ब्राह्मणे वेदपारगे ।
मद्यपे गणिकासक्ते मालातिलकधारिणि ॥

शुचौ वाप्यशुचौ साध्व्या वेश्याया बालवृद्धयो ।
सर्व्वत्रैव सम ब्रह्म विश्वरूप सनातनम् ॥
एवभूतस्य तस्येयमिति मत्प्रीतये कृति ।
तत्त्वोन्माद्यति यस्तस्य व्याधिरुन्माद एव हि ॥
( तत्त्वोन्माद इत्यत्र उन्मादशब्दो भावकृता निष्पन्न । )
प्रायशो बुद्धिहीनानामसता नीचचेतसाम ।
व्याधिरेषोऽभिजायेत कदाचिन्महतामपि ॥

तत्त्वोन्मादस्य निदानम ।

अतिप्रगाढाच्चित्तस्य धर्म्माद्यभिनिवेशनात ।
व्याधिस्तत्त्वोन्मदो नाम जायते वातकोपत ॥

तस्य लक्षणम ।

ब्रह्ममोहे प्रमूढत्व स्थिरास्पन्दा कनीनिका ।
चक्षुरुन्मीलित सुप्तिर्गतिरोधोऽथ वाग्मिता ॥
दम्भोग्रभावौ विक्षेपो हास्य क्लैव्यञ्च रोदनम्
एवम्भूतानि लिङ्गानि तत्त्वोन्मादे भवन्ति हि ॥

तस्य चिकित्सा ।

स्नायुस्थैर्य्यंकर यद्यत् तथा वातानुलोमनम् ।
भेषज पानमन्नञ्च तत्तदत्र प्रयोजयेत् ॥

श्रीखण्डादिचूर्णम् ।

श्रीखण्ड शारिवा श्यामा मुशली मधुक विडम् ।
फलत्रय निशाद्वन्द्वमुत्पल नागकेशरम ॥
मासीमिक्षुरक बालमुशीर गिरिमृत्तिकाम ।
बला नागबलाञ्चैव भिषगेकत्र चूर्णयेत् ॥

पयसा धारयोष्णेन शाणमस्य प्रपाययेत् ।
अनेन नाशमायान्ति तत्त्वोन्मादादयो गदा ॥

चैतन्योदयरस ।

हेमाभ्र मौक्तिक सूत गन्धक जतुकायसी ।
तुगाक्षीर शशाङ्कञ्च भावयित्वा वराम्भसा ॥
रक्तिमाना वटी कृत्वा च्छायाया परिशोषयेत् ।
शतावर्य्यम्भसा शान्त्यै तत्त्वोन्मादस्य पाययेत् ॥
शतधौतघृताभ्यङ्गोऽसमे च मधुसर्पिषी ।
आज्य सलिलमिश्रञ्च ब्रह्ममोहे परौषधम् ॥
कदाचित् ताडनाद्यैश्च ब्रह्ममोह प्रशाम्यति ।
गदे त्वप्रकृते तस्मिन् प्रहार एव भेषजम् ॥

अप्रकृते कृत्रिमे ।

अपस्मारहर यच्च वातव्याधिहर तथा ।
घृततैलादिक सर्व्व ब्रह्ममोहे प्रशस्यते ॥

अत्र पथ्यापथ्य व्यवस्था ।

धारोष्ण गोपय शस्त शालयश्च पुरातना ।
यवमुद्गतिलाश्चापि निखिल चानुलोमनम ॥
परिहास प्रिये सार्द्ध प्रियाभिश्च सहासनम् ।
इत्येतानि हितान्यत्र विपरीतान्यशर्म्मणे ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
तत्त्वोन्मादाधिकार षट्पञ्चाशत्तमोऽध्याय ।

# सप्तपञ्चाशत्तमोऽध्यायः।

— ० —

## अचलवाताधिकार ।

### अचलवातस्य स्वरूपम्।

यथैव सस्थया जन्तुर्मोहमाप्नोति चेत् तत ।
परतोऽपि तया तिष्ठेत् मापिचेत् क्लेशकृद् भृशम् ॥
स गदोऽचलवाताख्योऽचलमस्थानमेव च ।
तादवस्थ्यगदश्चापि तथैवापरिवर्त्तक ॥
वातागते समस्थानात् पूर्व्वभावस्थितिस्तथा ।
तथैवापरिवृत्तेश्च मत नाम चतुष्टयम ॥

### तस्य निदानम ।

चिन्तनात् क्षीणधातुत्वाद्भयात् सत्त्वस्य सत्त्वयात् ।
वोजदोषवशाच्चैव जायतेऽपरिवर्त्तक ॥

### तस्य लक्षणम् ।

स्पर्शहानिरचेष्टत्व पेशीना दृढता तथा ।
मूर्च्छनञ्च विनाक्षेप चिह्नान्यपरिवर्त्तके ॥
असामान्य गदस्यास्य लिङ्ग प्राक्सस्थया स्थिति ।
कदाचिच्छ्वासभूयस्त्व धमन्या क्षुद्रता तथा ॥
पूर्व्वरूप विना व्याधि सहसैव प्रकाशते ।
ग्रीवादार्ढ्य शिर पीडा कदाचिच्चलचित्तता ॥
पूर्व्वरूपलेन प्रक शते इति शेष ।

अचलवातस्य चिकित्सा ।

यथा गदवतश्चित्त प्रसन्नमवतिष्ठते ।
सर्व्वथा तद्विधातव्य तद्धि मुख्य चिकित्सितम् ॥
शीर्षि शीताम्बुसेकश्च चन्दनादिप्रलेपनम् ।
तथा मेषोपय पान विधेय मृदु रेचनम् ॥

हिङ्ग्वाद्य चूर्णम ।

हिङ्गुचन्दनशीताशु दारु दारुनिशा निशा ।
फलत्रयसुशीरञ्च मधूक मधुक मुराम् ॥
सञ्चुर्ण्यैकत्र पयसा पिबेच्छीताम्बुना तथा ।
अनेनाचलवाताख्यो याति नाश गदो ध्रुवम् ॥

---

सिन्दूर पयसा पीत्वा गदी स्वास्थ्यमवाप्नुयात् ॥
वातामयहर यच्च यद् यन्मूर्च्छाहर तथा ।
तत्तद् विविच्य योक्तव्य यथादोषानुपानकम् ॥

अत्र पथ्यापथ्यानि ।

अपस्मारे च मूर्च्छाया तथा वातामयेऽपि च ।
यत्पथ्य यदपथ्यञ्च तत्तदेवात्र सम्मतम् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
अचलवाताधिकार सप्तपञ्चाशत्तमोऽध्याय ।

---

# अष्टपञ्चाशत्तमोऽध्याय. ।



## खञ्जनिकाधिकार ।

### खञ्जनिकस्य निदानम् ।

खञ्जन्यदनसातत्यादनिलो विकृत गत ।
सक्थ्नि सञ्जनयेद्व्याधि घोर खञ्जनिकाभिधम् ॥

खञ्जनीति द्विदलभेद । तस्या निरन्तरभक्षणात् खञ्जनीरोग ।

खञ्जनी यामुने देशे बाहुल्येन प्रजायते ।
तस्या समश्नात् तत्र पीड्यन्ते व्याधिना जना ॥
वातामयाधिकारे या प्रोक्ता कलायखञ्जता ।
सैवायमिति केचिद्वा केचिद्वान्योऽभिमन्यते ॥

### अस्यानुपशय ।

शैत्येनार्द्रतया चापि व्याधिरेव विवर्द्धते ॥
स्त्रीभ्य पुसामय व्याधिर्बाहुल्येनाभिजायते ॥

### अस्य लक्षणम ।

सुप्तोत्थितस्योषसि जानुसन्धौ
रुजा च गुर्व्वी च दृढा च जङ्घा ।
ककुद्मती क्षीणबला ततो ना
सोऽङ्गुष्ठमाक्रम्य चलेत् सुकृच्छ्रम् ॥
वक्रत्व जानुसन्धेश्च जङ्घायाश्चापि शीर्णता ।
पादसस्थानवैरूप्यमरतिश्चात्र सभवेत ॥

अस्य चिकित्सा ।

आरोग्यमिच्छता त्याज्य खञ्जनीद्विदलाशनम् ।
निदानसेविनो यस्मान्न व्याधिर्विनिवर्त्तते ॥
वातघ्न पोषण यच्च पानमन्नञ्च भेषजम् ।
प्रयोज्यमिह तत्सर्व्वं विविच्य भिषजा सदा ॥
वला गन्धतृण माषा त्रिवृता कटुरोहिणीम् ।
क्वाथयित्वा पिबेत्तोय खञ्जन्यामयशान्तये ॥
वातामयहर सर्पिस्तैलञ्चात्र प्रयोजयेत् ॥

खञ्जनिकारि रस ।

कुपीलुरजतायासि सभाव्यार्ज्जुनवारिणा ।
मुद्गमात्रा वटी कृत्वा शोषयेत् सूर्य्यरश्मिना ॥
पक्षपात घोरतर गद खञ्जनिक तथा ।
रस खञ्जनिकार्य्याख्यो हरेदाशु न सशय ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
खञ्जनिकाधिकारोऽष्टपञ्चाशत्तमोऽध्याय ।

---

## ऊनषष्टितमोऽध्यायः ।

ताण्डवरोगाधिकार ।

हिमवच्छिखरे रम्ये सिद्धर्षिगणसेविते ।
सुगन्धिसुमन शोभिफलवद्बहुपादपे ॥
श्रुतद्विजकुले शान्ते श्वापदैर्बहुभिर्वृते ।

वटमूले समासीनमात्रेय ज्ञानसागरम ॥
आयुर्व्वेदमहाचार्य्यं तपोदीप्तकलेवरम।
उरम्भो भक्तिमानग्रे क्वताञ्जलिरभाषत ॥
कथ ताण्डवरोगस्य जन्म चिह्नानि कानि च।
कथञ्च स्यात् प्रतीकार सर्व्वं मे क्वपया वद ॥
श्रुत्वैता प्रार्थना धीर शिष्याय शिष्यवत्सल ।
वचनैर्व्वक्तुमारेभे व्यक्तार्थैस्तद्दषीश्वर ॥

ताण्डवरोगस्य निदानम्।

आत्रेय उवाच।

प्रीतोऽस्मि भक्तिमन् वत्स ब्रुवे यच्छ्रोतुमिच्छसि।
यद दक्षायावदत् पूर्व्वं ब्रह्मा लोकपितामह ॥
अत्यातङ्कादतिक्रोधादतिहर्षाद्बलक्षयात्।
कर्षणात् स्वप्नरोधाच्च विड्वन्धात् क्रिमिसञ्चयात् ॥
आशानाशादभिघातात् स्त्रीणामृतुविपर्य्ययात्।
कशेरुकामज्जनस्यात्युग्रभावात् प्रजायते ॥
व्याधिस्ताण्डवनामा स प्राणिना क्लेशक्वत् पर ।
अङ्गाना ताण्डवादस्य ताण्डवाख्या बुधै क्वता ॥
कैशोरे वयसि प्राय स्त्रीणाञ्चापि विशेषत ।
व्याधिरेषोऽभिजायेत वृद्धानाञ्च बलक्षयात् ॥

ताण्डवरोगस्य लक्षणम्।

वामबाहु समारभ्य प्राय आदौ ततोऽपरम्।
तत पादौ ततोऽङ्गानि चालयेत् ताण्डवामय ॥
मुष्टिना किमपि द्रव्य सम्यग्धारयितु क्षम ।
समर्पयितुमास्ये वाप्यदनीय न ताण्डवी ॥

नृत्यन्निव चलत्येष वीभत्सैर्मुखचेष्टितै ।
अधीर सतत निष्ठेन्निद्राया कम्पवर्ज्जित ॥
वीभत्सैर्मुखचेष्टितैरुपलचित ।

तण्डवरोगस्य चिकित्सा ।

वृंहण रेचनञ्चैव वक्केर्बल[illegible]वर्द्धनम् ।
औषध पानमन्नञ्च प्रयोज्य ताण्डवे गदे ॥
क्रिमिसञ्चयसम्भूते कार्य्य क्रिमिविनाशनम् ।
रजोरोधभवे व्याधौ रजसस्तु प्रवर्त्तनम् ॥
श्यामामनन्ता मधुक त्रिवृता चन्दनद्वयम् ।
एलाद्वय तथा धात्री क्वाथयित्वा जल पिबेत् ॥
अनेन प्रशम याति ताण्डवाख्यो गदो ध्रुवम् ॥

ताण्डवारि लौहम् ।

दारु रामठ कर्पूर यशदायो यथोत्तरम् ।
प्रगृह्य चतुरावृत्त्या विभाव्य विजयाम्बुना ॥
कुपीलुजकषायेण पार्थस्य स्वरसेन च ।
षड्गुञ्जिका वटी क्वत्वा युञ्ज्यात् ताण्डवशान्तये ॥

अत्र पथ्यादि ।

वृंहण पानमन्नञ्च स्नान स्रोतस्वतीजले ।
शयन क्लेशशून्य यत् कर्म्म तच्चेह शर्म्मणे ॥
कर्षणाद्यखिल प्रोक्तमशुभाय पुरातनै ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
ताण्डवाधिकार ऊनषष्टितमोऽध्याय ।

# षष्टितमोऽध्यायः ।

— o —

## स्नायुशूलाधिकार ।

### स्नायुशूलस्य स्वरूपम् ।

स्नायुष्वतीव या घोरा तच्छाखास्वपि वा पुन ।
वेदना स्नायुशूलाख्या सा भवेत् प्राणपीडनी ॥

### व्याधे स्थानम ।

वाह्वो शीर्षास्तथा सक्थ्नोरन्यस्याङ्गस्य वा पुन ।
त्वचो निम्नस्थितास्वेव वस्नसासु गदो भवेत् ॥

वस्नसासु स्नायुषु ।

शूलोऽय निखिलाङ्गेषु भवेत् तीव्ररुजाकर ।
विशिष्टाङ्गभवस्यास्य विशिष्टाख्या च वर्त्तते ॥
ऊर्द्धभेदार्द्धभेदौ चाप्यधोभेदस्तथैव च ।
मुण्डमुण्डार्द्धकस्फिग्जगदानामभिधा क्रमात् ॥

### तत्रोर्द्धभेदस्य निदानम् ।

बलरक्तक्षयाद्वापि वृक्कमस्तिष्कदोषत ।
अजीर्णाद् दशनव्याधेरूर्द्धभेदो गदो भवेत् ॥

### तस्य लक्षणम् ।

ललाटेऽक्षिपुटे निम्ने गण्डे नस्योष्ठ एव च ।
जिह्वापार्श्वेऽधरे दन्ते शूलवद् दाहवच्च या ॥
एकस्मिन् प्रायश पार्श्वे वेदना मुखमण्डले ।
ऊर्द्धभेदाख्यया सोक्तागदज्ञैरे क्रमैधिनी ॥

क्रमैधिनी क्रमशो वर्द्धिता ।

अस्यानुपशय ।

शीतानिलस्य सस्पर्शाद देहकम्पाञ्च वर्द्धते ।
स्नायुभेदस्य विकृतेरङ्गभेदे भवेद्ध गद ॥

अर्द्धभेदस्य निदानम् ।

आर्द्रस्थानस्थितेश्चापि शीतयोगाद् बलक्षयात् ।
अर्द्धभेद प्रजायेत दुष्टवाताम्बुसेवनात ॥

तस्य लक्षणम् ।

यार्द्ध व्याप्य भवेत्र तीव्रा वेदना मुखमण्डले ।
वामे च प्रायश पार्श्वे सार्द्धभेद प्रकीर्त्यते ॥
वाणेनेव शिरोविद्ध व्यथतेऽति सुदारुणम ।
कदाचित् क्रममालम्ब्य विरामश्चात्र वा महान् ॥
बाहुल्येन च नारोणा व्याधिरेष प्रजायते ।
प्रादुर्भावो वय स्तस्य यौवने ह्यधिको मत ॥

अधोभेदस्य निदानम् ।

विड् विरोधाच्छ्रमाच्छीताद् दौर्ब्बल्यादामवातत ।
आर्द्रस्थानस्थितेर्गर्भदोषात् स्यान्निम्नभेदक ॥

निम्नभेदक अधोभेद ।

तस्य लक्षणम् ।

स्फिच्यूरुजानुसन्ध्योश्च पश्चिमे च क्वचित् पदे ।
जङ्घाया वापि यच्छूलमधोभेद स उच्यते ॥
एकस्मिन् प्रायश सक्थ्नि शूलोऽय स्यान्निशावली ।
बाहुल्येनैव वयसि प्रौढ एव प्रजायते ॥

स्नायुशूलस्य चिकित्सा।

यदग्नेर्दीपन किञ्चिद् यद् वा स्याद् बलवर्द्धनम्।
वातानुलोमन यच्च स्नायुशूले तदौषधम्॥

स्नायुशूलहर चूर्णम।

एलाद्दयमुशीरञ्च चन्दन शारिवाद्दयम्।
मेदाद्दन्द्व निशाद्दन्द्व गुडूची विश्वभेषजम्॥
फलत्रय यमानीञ्च रौप्य सर्व्वसम तथा।
एकीकृत्य वल्लमान पाययेद् गव्यसर्पिषा॥
स्नायुशूलहर नाम चूर्णमेतद्धरेद्ध्रुवम्।
निखिल स्नायुशूलञ्च सर्व्वान् वातामयास्तथा॥

मिहिरोदयो रस।

माक्षिक रजत लौह सिन्दूर वह्निवारिणा।
भावयित्वा विमर्द्याथ कृत्वा रक्तिमिता वटी॥
एकैका खादयेदासा त्रिफलाह्विरहर्मुखे।
मिहिरोदयनामाय स्नायुशूल रसो हरेत्॥

---

प्रयोज्य दारु गरल मर्द्दभेद प्रशान्तये।
विरतौ तत् प्रयोक्तव्य न प्रकोपे कदाचन॥
मदिरामृतसाराख्य लौह चोद कुपीलुज।
सेव्यान्येतानि विधिना स्नायुशूलस्य शान्तये॥
स्वेदसेक प्रलेपाश्च स्नायुशूलेषु योजयेत्।
तीव्र विरेचनञ्चात्र विदध्यान्मलसञ्चये॥
घृत तैलादिक योज्यमनिलामय नाशनम्।
स्नायुशूलेषु सर्व्वेषु भेषजञ्च रसायनम्॥

अत्र पथ्यापथ्य विधि ।

यत् पथ्य यदपथ्यञ्च वातव्याधौ प्रकीर्त्तितम् ।
तथैव स्नायुशूलेषु निर्णीत विबुधैरिति ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
स्नायुशूलरोगाधिकार षष्टितमोऽध्याय ।

---

## एकषष्टितमोऽध्याय ।

— o —

क्लोमरोगाधिकार ।

प्लीहाक्षुद्रान्त्रयोर्मध्यमन्नपाकादिकर्म्मणि ।
सहायभूतमध्यास्ते क्लोम तच्च तिलाभिधम् ॥
गुर्व्वतिस्निग्ध भोज्यैश्चाप्यभिघातादिभिस्तथा ।
वृद्धिस्तस्य मृदुत्वञ्च तत्र शोणितसञ्चय ॥
विद्रधिर्वा भवेत्तत्र व्याधयोऽन्ये च दारुणा ।
एव विकृतिमापन्ने तिलके वह्निसञ्चय ॥
उत्क्लेशो वमन कार्श्य पाण्डुता सदन भ्रम ।
ऊर्द्ध्वोदरे तथा तीव्रा काठिन्यमपि चोष्णता ॥
शूलाध्मान प्रसेकाश्च विद्रधौ महती च रुट् ।
शिला चाप्यश्मरीतुल्या सुकष्टाप्यत्र जायते ॥

तस्य चिकित्सा ।

यद्वह्नेर्दीपन यच्च मारुतस्यानुलोमनम् ।
अन्नपानौषध सर्व्व तत्तत् क्लोम्नातुरे हितम् ॥

अभयादिक्वाथ ।

अभयामलकं दारु धन्याकं विश्वभेषजम् ।
द्राक्षा च शारिवेत्येषा क्वाथः क्लोमगदापहः ॥

---

यो यः समाश्रयेद्व्याधिः क्लोम्नि तं तमवेक्ष्य च ।
क्रियां संसाधयेद्वैद्यो यथादोषं यथाबलम् ॥
सुरेन्द्रमोदकश्चैव रसश्च ग्रग्निशेखरः ।
क्लोमरोगे प्रयोक्तव्यः विविच्य भिषजा सदा ।
सुरेन्द्राभ्रवटी चैव वातपित्तहरं च यत् ॥

तत्र पथ्यापथ्यानि ।

अनुग्राण्यन्नपानानि क्लोमामयनिपीडितः ।
सेवेतोग्राणि सर्व्वाणि यत्नतः परिवर्ज्जयेत् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
क्लोमरोगाधिकारः एकषष्टितमोऽध्यायः ।

---

## द्विषष्टितमोऽध्यायः ।

— o —

वृक्कामयाधिकारः ।

वृक्कामयस्य पूर्व्वरूपम् ।

त्वग्रुक्षोष्णा वेगवती धमनी कठिना तथा ।
निद्रानाशो वह्निमान्द्यं शोथोऽक्ष्णि च मुखे पदे ॥
वृक्कामयस्य पूर्व्वाणि रूपाण्याहुर्भिषग्वराः ॥

वृक्कामयस्य लक्षणम् ।

रक्ताल्पत्वान्मुखस्य स्यात् पाण्डुत्व कटिवेदना ।
त्वक् शुष्का स्वेदहीना च धमनी द्रुतगामिनी ॥
वह्निमान्द्यमजीर्णञ्च भक्तद्वेषो व्यथोदरे ।
अम्लोद्गारस्तथा च्छर्दिर्वृद्धेप श्वासकृच्छ्रता ॥
मूत्राल्पत्व सदा वेगो विशेषान्निशि जायते ।
मूत्रकाले च शिश्नाग्रे मनाग्दाहोऽनुभूयते ॥
वृक्कयोर्विकृतिश्चास्मिन् विशेषाज्जायते गदे ।
यद्वत्प्लीहहृदाञ्चापि सा सदैव प्रजायते ॥
कर्णनादो दृष्टिदोष शिरोग्रीवासवेदना ।
शाखासु गौरव मूर्च्छा वृक्करोगस्य लक्षणम ॥

वृक्कामयस्य निदानम् ।

रक्तस्य परिवृत्त्या हि जायते वृक्कवैकृतम ॥

अस्य चिकित्सा ।

यन्मूत्रल शोणित शोधनञ्च
यत् पोषण वह्निविवर्द्धनञ्च ।
वृक्कस्य रोगे परियोजयेत् तद्
व्याधेर्बल वीक्ष्य भिषग् विधिज्ञ ॥

रसो विवर्द्धयेद्व्याधिमतस्त नेह योजयेत ॥

सर्व्वतोभद्रा वटी ।

हेमरौप्याभ्रलौहानि जतु गन्धक माक्षिकम् ।
वटी रक्तिमिता कुर्य्याद्विमर्द्य वरुणाम्भसा ॥
वटीय सर्व्वतोभद्रा निखिलान् वृक्कजान् गदान् ।

हरेद्वस्तिभवांश्चापि शूल वीर्य्यञ्च वर्द्धयेत् ॥
रसायनाधिकारोक्तान्यौषधान्यत्र योजयेत् ॥
न चास्ति शमने किञ्चिन्निर्द्दिष्टमस्य भेषजम् ।
पथ्यैर्बल्यैः सुपाच्यैश्च भिषगेन प्रयापयेत् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
वृक्कामयाधिकारो द्विषष्टितमोऽध्याय ।

---

## त्रिषष्टितमोऽध्याय ।

— o —

### मूत्रकृच्छ्राधिकार ।

मूत्रकृच्छ्रस्य विप्रकृष्ट निदानम् ।

व्यायामतीक्ष्णौषध रूक्षमद्य-
प्रसङ्गनृत्यद्रुत पृष्ठयानात् ।
आनूपमत्स्याध्यशनानजीर्णात्
स्युर्मूत्रकृच्छ्राणि नृणा तथाष्टौ ॥

तीक्ष्णौषध राजिका शूरणादियुक्तम। रूक्षेति मद्य-विशेषणम्। प्रसङ्ग सन्तत सेवा। नृत्य नर्त्तनम। नित्येति द्वितीय पाठ । द्रुतपृष्ठयानात् अश्वादिना गमनात्। आनूप प्रचुरजलदेशस्तत्सम्भवो मत्स्य । अष्टौ वातिक पैत्तिक श्लैष्मिक सान्निपातिक शल्यज पुरीषज-शुक्रजाश्मरीजानि ।

मूत्रकृच्छ्रस्य सम्प्राप्तिर्लक्षणञ्च ।

पृथङ्मला स्वै कुपिता निदानै
सर्व्वेऽथवा कोपमुपेत्य वस्तौ ।
मूत्रस्य मार्गं परिपीडयन्ति
यदा तदा मूत्रयतीह कृच्छ्रात ॥

वातिकमूत्रकृच्छ्रस्य लक्षणम ।

तीव्रा च रुग् वङ्क्षणवस्तिमेढ्रे
स्वल्प मुहुर्मूत्रयतीह वातात् ॥

पैत्तिकस्य तस्य लक्षणम ।

पीत सरक्त सरुज सदाह
कृच्छ्र मुहुर्मूत्रयतीह पित्तात् ॥

कृच्छ्रमिति क्रियाविशेषणम ।

श्लैष्मिकस्य लक्षणम ।

वस्ते सलिङ्गस्य गुरुत्वशोथौ
मूत्र सपिच्छ कफमूत्रकृच्छ्रे ॥

सान्निपातिकस्य लक्षणम् ।

सर्व्वाणि रूपाणि तु सन्निपाताद
भवन्ति तत् कृच्छ्रतम हि कृच्छ्रम ॥

शल्यजस्य लक्षणम् ।

मूत्रवाहिषु शल्येन क्षतेष्वभिहतेषु च ।
मूत्रकृच्छ्र तदाघाताज्जायते भृशदारुणम् ॥
वातकृच्छ्रेण तुल्येन तस्य लिङ्गानि निर्द्दिशेत् ॥

मूत्रवाहिषु स्रोतःसु शल्येन कण्टकादिना क्षतेषु सत्क्षतीकृतेषु अथवा अभिहतेषु मुष्ट्यादिभिरभिहतेषु तदाघातात् मूत्रमार्गाघातात्।

पुरीषजस्य लक्षणम।

शकृतस्तु प्रतीघाताद्वायुर्विगुणता गत।
आध्मान वातशूलञ्च मूत्रसङ्ग करोति च॥

शुक्रजस्य लक्षणम्।

शुक्रे दोषैरुपहते मूत्रमार्गे विधाविते।
सशुक्र मूत्रयेत् कृच्छ्राद्वस्तिमेहनशूलवान्॥

उपहते दूषिते।

अश्मरीजस्य लक्षणम।

अश्मरीहेतु तत्पूर्व्व मूत्रकृच्छ्रमुदाहरेत॥

अश्मरी हेतुर्यस्य तत् अश्मरीहेतुकम। ततपूर्व्वं अश्मरी पूर्व्व अश्मरीकृच्छ्रमित्यर्थं। अश्मरीहेतुकञ्चापि मूत्रकृच्छ्रमुदाहृतम्। इतिभावप्रकाश।

अश्मरी शर्करा चैव तुल्यसम्भवलक्षणे।
विशेषेण शर्कराया शृणु कीर्त्तयतो मम॥
पच्यमानाश्मरी पित्ताच्छोष्यमाणा च वायुना।
विमुक्तकफसन्धाना क्षरन्ती शर्करा मता॥

सुश्रुते शर्कराजमपि मूत्रकृच्छ्रमुक्त अत्र तु तस्य नवमसङ्ख्या निरासार्थमाह अश्मरी शर्करा चैवेत्यादि। सम्भव कारण तुल्ये सम्भव लक्षणे ययोस्ते। पित्तेन पच्यमाना मूत्रशुक्रश्लेष्मसहित। प्रथम पित्तेन इन्धनकर्म्मणा पच्यमाना पश्चाद्वातेन शोषिता कफेनाश्लिष्टा अश्मरी सैव विमुक्तकफसन्धाना

त्यक्तकफाश्लेषा सती शर्कराकृपा मूत्रमार्गात् चरन्ती शर्करा मता। एवावता किञ्चिदेव भेद ।

शर्कराया उपद्रवा ।

हृत्पीडा वेपथु शूल कुक्षावग्निश्च दुर्ब्बल ।
तया भवति मूर्च्छा च मूत्रकृच्छ्रञ्च दारुणम् ॥

तया शर्करया ।

मूत्रकृच्छ्रस्य चिकित्सा ।

अभ्यञ्जनस्नेहनिरूहवस्ति
स्वेदोपनाहोत्तरवस्तिसेकान् ।
स्थिरादिभिर्वातहरैश्च सिद्धाम्
दद्याद्रसांश्चानिलमूत्रकृच्छ्रे ॥

अमृता नागर धात्री वाजिगन्धाश्च गोक्षुरम् ।
क्वाथयित्वा पिबेद्वातमूत्रकृच्छ्री समाक्षिकम् ॥

सेकावगाहा शिशिरा प्रदेहा-
ग्रैष्मो विधिर्वस्तिपयो विरेका ।
द्राक्षा विदारीक्षुरसो घृतञ्च
शस्तानि पित्तप्रभवे च कृच्छ्रे ॥

तृणपञ्चकनिर्य्यूहस्तेन सिद्ध पयोऽथवा ।
पित्तकोपसमुद्भूत मूत्रकृच्छ्र विनाशयेत् ॥
शतावरीरस पीत ससित पित्तकृच्छ्रनुत् ॥

क्षारोष्ण तीक्ष्णौषधमन्नपान
स्वेदो यवान्न वमन निरूह ।
तक्रञ्च तिक्तौषधसिद्धतैल
मभ्यङ्गपान कफमूत्रकृच्छ्रे ॥

तक्रेण युक्त सितिवारकस्य
बीज पिबेन्मूत्रविघातहेतो ।
पिबेत् तथा तण्डुलधावनेन
प्रवालचूर्णं कफमूत्रकृच्छ्रे ॥
त्रिदोषघ्नो विधि कार्य्यो मूत्रकृच्छ्रे त्रिकात्मिके ॥
मूत्रकृच्छ्रेऽभिघातोत्थे वातकृच्छ्रक्रिया हिता ॥
वस्ति स्वेदस्तथाभ्यङ्गो मूत्रकृच्छ्रे पुरीषजे ॥
लेह्य शुक्रविबन्धोत्थे शिलाजतु समाक्षिकम् ॥
त्रिकण्टकारग्वधदर्भकाश
दुरालभा पर्व्वतभेद पथ्या ।
निघ्नन्ति पीता मधुनाश्मरोज
सम्प्राप्तमृत्योरपि मूत्रकृच्छ्रम ॥
दूर्व्वारुत्रपुषीवीजकल्कस्तु सितया सह ।
स्थलपद्मरसो वापि सेवितो मूत्रकृच्छ्रनुत् ॥
घृत त्रिकण्टकाद्यञ्च मूत्रकृच्छ्रान्तको रस ।
भेषजान्येवमादीनि शर्म्मणे मूत्रकृच्छ्रिणाम् ॥

अत्र पथ्यापथ्यानि ।

अन्नपानमनुग्र यन्मूत्रस्यानुलोमनम् ।
हितमत्र विजानीयाद्विपरीत सुखाय न ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
मूत्रकृच्छ्राधिकारस्त्रिषष्टितमोऽध्याय ।

---

# चतु षष्टितमोऽध्याय ।

—— ० ——

## मूत्राघाताधिकार ।

### मूत्राघातस्य निदानम् ।

जायन्ते कुपितैर्दोषैर्मूत्राघातास्त्रयोदश ।
प्रायो मूत्रविघाताद्यैर्वातकुण्डलिकादय ॥

मूत्रकृच्छ्रमूत्राघातादयोरय भेद । मूत्रकृच्छ्रे कृच्छ्रत्वमतिशयित ईषद्विबन्ध, मूत्राघाते तु विबन्धो बलवान् कृच्छ्रत्वमल्पम्। मूत्रविघाताद्यैर्मूत्रवेगधारणादिभि । आद्यशब्देन पुरीषशुक्रवेगविघातादीना रूक्षाशनादीनाञ्च ग्रहणम्। वात कुण्डलिकादयस्त्रयोदशविकारा मूत्राघातसामान्याख्यया उच्यन्ते ।

### वातकुण्डलिका ।

रौक्ष्याद्वेगविघाताद वा वायुर्बस्तौ सवेदन ।
मूत्रमाविश्य चरति विगुण कुण्डलीकृत ॥
मूत्रमल्पाल्पमथवा सरुज सम्प्रवर्त्तते ।
वातकुण्डलिका तान्तु व्याधि विद्यात् सुदारुणम् ॥

रौक्ष्यात् कायस्य । वेगविघातात् मूत्रादिवेगनिरोधात् । आविश्य आवृत्य मूत्रमिति रौक्ष्यादिभिर्वेगविघातादिभिश्च विगुणो दुष्ट कुण्डलीकृत आवर्त्तवद्वस्ताविव भ्रमस्तिष्ठति ।

### अष्ठीला ।

आध्मापयन् वस्तिगुद रुद्ध्वा वायुश्चलोन्नताम् ।
कुर्य्यात् तीव्रार्त्तिमष्ठीला मूत्रविण्मार्गरोधिनीम ।

वायु वस्तिगुद रुद्ध्वा तदन्तर्गत मूत्र मलञ्च निरुध्य वस्ति गुदञ्च आध्मापयन् आध्मात कुर्व्वन् अष्ठीला अष्ठीलातुल्य ग्रन्थि कुर्य्यात् । चलोन्नता चलामुन्नताञ्च ।

वातवस्ति ।

वेग विधारयेद् यस्तु मूत्रस्याकुशलो नर ।
निरुणद्धि मुख तस्य वस्तेर्वास्तगतोऽनिल ॥
मूत्रसङ्गो भवेत्तेन वस्तिकुक्षिनिपीडित ।
वातवस्ति स विज्ञेयो व्याधि कृच्छ्रप्रसाधन ॥

अकुशलो मूर्ख । तस्य पुरुषस्य वस्तेर्मुख निरुणद्धि । वस्तिकुक्षिनिपीडित वस्तौ कुक्षौ च निपीडित सपिण्डितो वायुरिति सम्बन्ध ।

मूत्रातीत ।

चिर धारयतो मूत्र त्वरया न प्रवर्त्तते ।
मेहमानस्य मन्द वा मूत्रातीत स उच्यते ॥

मूत्रजठर ।

मूत्रस्य वेगेऽभिहते तदुदावर्त्तहेतुकम् ।
अपान कुपितो वायुरुदर पूरयेद् भृशम् ॥
नाभेरधस्तादाध्मान जनयेत् तीव्रवेदनाम् ।
तन्मूत्रजठर विद्याद्धोवस्तिनिरोधजम ॥

तदुदावर्त्तहेतुकमिति तदुदावर्त्तो मूत्रवेगवारणजनितोदावर्त्त स एव हेतुर्यस्य आध्मानस्य तदाध्मान कुर्य्यात् । तदुदावर्त्तहेतुक इति पाठे हेतुरेव हेतुक स्वार्थे कन् तत्र तदुदावर्त्तस्य हेतुक कारणम् । अपानो वायु आध्मानादिक कुर्य्यादित्यर्थ । अथवा तदुदावर्त्तो हेतुर्यस्य कुपितस्य अपानस्य

अपानकोपस्येति यावत्। कुपितोऽपान अपानकोपश्चेति द्वयोस्तुल्यार्थत्वमेव। अधोवर्स्तिनिरोधज वस्तेरधोदेशे विवन्ध-कारकम्।

मूत्रोत्सङ्ग ।

वस्तौ वाप्यथवा नाले मणौ वा यस्य देहिन ।
मूत्र प्रवृत्त सज्जेत सरक्त वा प्रवाहत ॥
स्रवेच्छनैरल्पमल्प सरुज वाथ नीरुजम्।
विगुणानिलजो व्याधि स मूत्रोत्सङ्गसञ्ज्ञित ॥

नाले मेढ्रे। मणौ मेहनग्रन्थौ। सज्जेत निरुद्ध स्यात्। सरक्त प्रवाहत कण्ठहृद्गलेन सशब्द मूत्रपुरीषवातानामध प्रेरण प्रवाहण तेन कुपितेन वायुना वस्त्यादिभेदात् सरक्त मूत्र स्रवेदित्यर्थ ।

मूत्रक्षय ।

रूक्षस्य क्लान्तदेहस्य वस्तिस्थौ पित्तमारुतौ।
मूत्रक्षय सरुग्दाह जनयेता तदाह्वयम ॥
तदाह्वय मूत्रक्षयसञ्ज्ञितम्।

मूत्रग्रन्थि ।

अन्तर्वस्तिमुखे वृत्त स्थिरोऽल्प सहसा भवेत्।
अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थि स उच्यते ॥

अन्तर्वस्तिमुखे वस्तिमुखस्याभ्यन्तरे अल्प क्षुद्रामलक-प्रमाण । ननु स्थानवेदनाकारणानामभिन्नत्वेऽपि अश्मर्या सह अस्य को भेद ? उच्यते। अश्मरी क्रमश सञ्चयेन स्यात् अयन्तु सहसा भवेदिति भेद । अपरो भेद । अश्मर्यां पित्तादिक कुप्यति अत्र तु रक्तमेव। यत उक्त तन्त्रान्तरे "रक्त

वातकफाददुष्ट वस्तिद्वारे सुदारुणम । ग्रन्थि कुर्य्यात सकृच्छ्रेण सृजेन्मूत्र तदावृतम” ॥ इति ।

मूत्रशुक्र ।

मूत्रितस्य स्त्रिय यातो वायुना शुक्रमुद्धतम् ।
स्थानाच्च्युत मूत्रयत प्राक् पश्चाद्वा प्रवर्त्तते ॥
भस्मोदकप्रतीकाश मूत्रशुक्र तदुच्यते ॥

मूत्रितस्य मूत्रवेगयुक्तस्य शुक्र स्थानात् स्वस्थानाच्च्युत पश्चाद्वायुना उद्धत ऊर्द्ध्व नीत सत् भस्मोदकप्रतीकाश भस्म-सहितजलसदृश प्रवर्त्तते । तत् मूत्रशुक्र उच्यते ।

उष्णवात ।

व्यायामाध्वातपै पित्त वस्ति प्राप्यानिलान्वितम् ।
वस्ति मेढ्र गुदञ्चैव प्रदहत् स्रावयेदध ॥
मूत्र हारिद्रमथवा सरक्त रक्तमेव वा ।
कृच्छ्रात् पुन पुनर्जन्तोरुष्णवात वदन्ति तम् ॥

सरक्तमीषल्लोहितम ।

मूत्रसाद ।

पित्त कफो द्वावपि वा सहन्येतेऽनिलेन चेत् ।
कृच्छ्रान्मूत्र तदा पीत श्वेत रक्त घन सृजेत् ॥
सदाह रोचनाशङ्खचूर्णवर्ण भवेच्च तत् ।
शुष्क समस्तवर्ण वा मूत्रसाद वदन्ति तम ॥

सहन्येते घनीक्रियेते । शुष्कमल्पम । समस्तवर्ण उक्त-सकलवर्णयुक्तम ।

विड्विघातः ।

रूक्षदुर्ब्बलयोर्वातेनोदावृत्तं शकृद् यथा ।
मूत्रस्रोतोऽनुपद्येत विट्संसृष्टं तदा नरः ॥
विड्गन्धं मूत्रयेत्कृच्छ्राद्विड्विघातं विनिर्द्दिशेत् ॥

उदावर्त्तं ऊर्द्धं नीतम् । विड्गन्धमित्यत्र वाशब्दो योजनीयः ।

वस्तिकुण्डलम् ।

द्रुताध्वलङ्घनायासैरभिघातात् प्रपीडनात् ।
स्वस्थानाद्वस्तिरुद्वृत्तः स्थूलस्तिष्ठति गर्भवत् ॥
शूलस्पन्दनदाहार्त्तो विन्दुं विन्दुं स्रवत्यपि ।
पीडितस्तु सृजेद्धारां सस्तम्भोद्वेष्टनार्त्तिमान् ॥
वस्तिकुण्डलमाहुस्तं घोरं शस्त्रविषोपमम् ।
पवनप्रबलः प्रायो दुर्निवारमबुद्धिभिः ॥
तस्मिन् पित्तान्विते दाहः शूलं मूत्रविवर्णता ।
श्लेष्मणा गौरवं शोथः स्निग्धं मूत्रं घनं सितम् ॥

द्रुताध्वलङ्घनं शीघ्रं मार्गचलनम् । उद्वृत्तः उत्थितः स्पन्दनं किञ्चिच्चलनम । घोरं मारकम् ।

श्लेष्मरुद्धविलो वस्तिः पित्तोदीर्णो न सिध्यति ।
अविभ्रान्तविलः साध्यो न च यः कुण्डलीकृतः ॥
स्याद्वस्तौ कुण्डलीभूते तृण्मोहः श्वास एव च ॥

विलं वस्तिमुखरन्ध्रम् । पित्तोदीर्णः उपचितपित्तः । अविभ्रान्तविलः कफेन अनावृतविलः न च कुण्डलीकृतः सः साध्यः । एतेन कुण्डलीभूतोऽसाध्यः । कुण्डलीभूतस्य अयमर्थः कफेन विलावरोधात् तत्र वातः कुण्डलाकारेण तिष्ठतीत्यर्थः ।

## मूत्राघातस्य चिकित्सा ।

मूत्राघातान् यथादोषं मूत्रकृच्छ्रहरैर्जयेत् ।
वस्तिमुत्तरवस्तिञ्च दद्यात् स्निग्धं विरेचनम् ॥
कल्कमिर्व्वारुवीजानामक्षमात्रं ससैन्धवम् ।
धान्याम्लयुक्तं पीत्वैव मूत्राघाताद्विमुच्यते ॥
यवक्षारं गुडोन्मिश्रं पिबेत् पुष्पफलोद्भवम ।
रसं मूत्रविबन्धघ्नं शर्कराश्मरिनाशनम् ॥
सप्तपत्रफलमूलस्य क्वाथं गोक्षुरकस्य च ।
पिबेन्मधुसितायुक्तं मूत्राघातादिरोगनुत् ॥
शृतशीतपयोऽन्नाशी चन्दनं तण्डुलाम्बुना ।
पिबेत् सशर्करं श्रेष्ठमुष्णवातविनाशनम ॥
धान्यगोक्षुरकक्वाथकल्कयुक्तं घृतं हितम् ।
मूत्राघाते मूत्रदोषे शुक्रदोषे च दारुणे ॥
उशीराद्यभिधं तैलं मूत्रघातप्रशान्तिकृत् ॥
मूत्रकृच्छ्रेऽश्मरीरोगे भेषजं यत् प्रयुज्यते ।
मूत्राघातेषु सर्व्वेषु तद् युञ्ज्याद्देशकालवित् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
मूत्राघाताधिकारस्तु षष्टितमोऽध्यायः ।

— —

# पञ्चषष्टितमोऽध्याय ।

—— ——

## अश्मर्य्यधिकार ।

### अश्मर्य्या निदानम् ।

वातपित्तकफैस्तिस्रश्चतुर्थी शुक्रजापरा ।
प्राय श्लेष्माश्रया सर्व्वा अश्मर्य्य स्युर्यमोपमा ॥

श्लेष्माश्रया श्लेष्मसमवायिकारणा शुक्रजा विना। शुक्रजायास्तु शुक्रस्यैव समवायिकारणत्वात्। अन्ये तु शुक्राश्मर्य्यामपि कफकारणत्वमिच्छन्ति। प्राय शब्दस्तात्र विशेषार्थ । यमोपमा चिकित्सा विना।

### अश्मर्य्या सम्प्राप्ति ।

विशोषयेद्वस्तिगत सशुक्र
मूत्र सपित्त पवन कफ वा।
यदा तदाश्मर्य्युपजायते तु
क्रमेण पित्तेष्विव रोचना गो ॥

पवनो वस्तिगत सशुक्र मूत्र सपित्त कफ वा शोषमुपनयेत् यदा तदाश्मरो भवति। क्रमेण क्रमशो वर्द्धमाना गो पित्तेषु रोचनेवेत्यन्वय ।

### अश्मरीणा पूर्व्वलक्षणम् ।

नैकदोषाश्रया सर्व्वा अथासा पूर्व्वलक्षणम् ।
वस्त्याध्मान तदासन्नदेशेषु परितोऽतिरुक् ॥
मूत्रे वस्तसगन्धत्व मूत्रकृच्छ्र ज्वरोऽरुचि ॥

नैकदोषाश्रयास्त्रिदोषजा । वस्तश्छगलक

तासां सामान्य लक्षणम्।

सामान्यलिङ्ग रुड्नाभि सेवनोवस्तिमूर्द्धसु।
विशीर्णधार मूत्र स्यात् तया मार्गनिरोधने॥
तद्व्यपायात् सुख मेहेदच्छ गोमेदकोपमम्।
तत्सक्षोभात्क्षते सास्रमायासाच्चातिरुग्भवेत्॥

वस्तिमूर्द्धा नाभेरधोदेश। विशीर्णधार सविच्छेदधारम्। तया अश्मर्य्या। मार्ग मूत्रवाहिस्रोत। तद्व्यपायात् कदाचित् वायुना अश्मर्य्या मूत्रमार्गादन्यत्र गमनात्। मेहेत् मूत्रयेत्। गोमेदकोपम गोमेदको मणि किञ्चिल्लोहितस्तद्वर्णम्। तत्सक्षोभात् तस्या अश्मर्य्या सञ्चारात् घर्षणेन मूत्रवहे स्रोतसि क्षते जाते सास्र सरक्त मेहेत्। आयासात प्रवाहनादिजनितात्।

वातोल्वणाया अश्मर्य्या लक्षणम्।

तत्र वाताद्भृश चार्त्तो दन्तान् खादति वेपते।
गृह्णाति मेहन नाभि पीडयत्यनिश क्वणन्॥
सानिल मुञ्चति शक्रन्मुहुर्मेहति विन्दुश।
श्यावारुणाश्मरी चास्य स्याच्चिता कण्टकैरिव॥

क्वणन् आर्त्तनाद कुर्व्वन्। सानिल सशब्द मूत्रप्रवृत्त्यर्थं कृतातिकुन्थनात।

पित्तोल्वणाया लक्षणम।

पित्तेन दह्यते वस्ति पच्यमान इवोष्मणा।
भल्लातकास्थिसस्थाना रक्ता पीतासिताश्मरी॥

कफोल्वणाया लक्षणम।

वस्तिर्निस्तुद्यत इव स्लेष्मणा शीतलो गुरु।
अश्मरी महती श्लक्ष्णा मधुवर्णाथवा सिता॥

शुक्राश्मर्य्या निदानम ।

शुक्राश्मरी तु महता जायते शुक्रधारणात् ॥

अव्ययानामनेकार्थत्वात् तुशब्दोऽत्रावधारणार्थं । तेन महतामेव न तु बालाना वक्ष्यमाणसम्प्राप्तेरसम्भवात् । न च शुक्राभावो वाच्य । तर्हि षड्वातुत्व स्यात् ।

शुक्राश्मर्य्या सम्प्राप्ति ।

स्थानाच्चुप्रतमसुक्त हि मुष्कयोरन्तरेऽनिल ।
शोषयत्युपसगृह्य शुक्र तच्छुक्रमश्मरी ॥

अनिलो मैथुनवेगेन स्थानच्युत शुक्र मैथुनवेगनिवारणेन धृत तत् मुष्कयो मेढ्रसहितयो मेढ्रवृषणयोरन्तर इति । मेढ्रवृषणमध्यगतवस्तिमुखे उपसगृह्य एकीकृत्य शोषयति तत शुक्राश्मरी तथाभूत शुक्रमेव अश्मरी ।

शुक्राश्मर्य्या लक्षणम ।

वस्तिरुङ्मूत्रकृच्छ्रत्वमुष्कश्वयथुकारिणी ।
तस्यामुत्पन्नमात्रायां शुक्रमेति विलीयते ॥
पीडिते त्ववकाशेऽस्मिन्नश्मर्य्येव च शर्करा ।
सा भिन्नमूर्त्तिर्वातेन शर्करेत्यभिधीयते ॥

तस्या शुक्राश्मर्य्यामुत्पन्नमात्रायां शुक्रमेति मूत्रमार्गात् प्रवर्त्तते यदि सा कथमपि विलीयते विलय याति । सा कथ विलय याति तदाह । पीडिते त्ववकाशेऽस्मिन्नित्यादि । तु शब्दोऽत्र अवधारणे । तेन अस्मिन्नेव अवकाशे स्थाने मेढ्रवृषणयोरन्तरे पीडिते सति सा विलीयते अन्तर्लीना भवति । अवस्थाभेदादश्मरी शर्करा सिकता च भवतीत्याह । अश्मर्य्येव च शर्करेति चकारात् सिकता च भवतीत्यर्थ । शर्करासिकतयोश्च

भेदो महत्त्वाल्पत्वाभ्यां बोद्धव्यः। कथमश्मरी शर्करा भवतीत्याह सा भिन्नमूर्त्तिरित्यादि। सा अश्मरी।

शर्कराया पातनमवरोधश्च।

अणुशो वायुना भिन्ना सा तस्मिन्ननुलोमगे।
निरेति सह मूत्रेण प्रतिलोमे निरुध्यते॥
मूत्रस्रोतःप्रवृत्ता सा सक्ता कुर्य्यादुपद्रवान्॥
दौर्ब्बल्यं सदनं कार्श्यं कुक्षिशूलमथारुचिम्।
पाण्डुत्वमुष्णवातञ्च तृष्णां हृत्पीडनं वमिम्॥

कुर्य्यादिति पूर्व्वेण सम्बन्धः। उष्णवातो मूत्राघातविशेषः।

अश्मरी शर्करा सिकतानामरिष्टमाह।

प्रसूननाभिवृषणं बद्धमूत्रं रुजातुरम्।
अश्मरी क्षपयत्याशु शर्करासिकतान्विता॥

रुजातुरं शूलपीडितम्। शर्करा सिकता चेति नामद्वयमन्वर्थम्।

अश्मर्य्याश्चिकित्सा।

अश्मरी दारुणो व्याधिरन्तकप्रतिमो मतः।
औषधैस्तरुणः साध्यः प्रवृद्धश्छेदमर्हति॥
तस्य पूर्व्वेषु रूपेषु स्नेहादिक्रम इष्यते।
तेनास्यापचयं यान्ति व्याधिर्मूलान्यशेषतः॥
वारुणं वल्कलं शुण्ठी बीजं गोक्षुरसम्भवम्।
तालमूली कुलत्थश्च कुशादिपञ्चमूलकम्॥
शर्कराक्षारसंयुक्तं क्वाथयित्वा जलं पिबेत्।
अश्मरीमूत्रकृच्छ्रघ्नं वस्तिमेहनशूलनुत्॥
त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतम्।

अजाक्षीरेण पातव्यमश्मरोगा प्रशान्तये ॥
प्रपिबेत् तालमूल्या वा कल्कं व्युषितवारिणा ।
तेनैवाथ गवाक्ष्या वाप्यश्मरीगदशान्तये ॥
यो नारिकेलकुसुम सक्षार वारिणा पिष्ट्वा ।
पिबति च तस्य दिनैकान्निपतति घोराश्मरी नूनम् ।
आनन्दयोग पाषाणभिन्न सर्पिश्च वारुणम ।
कुलत्थाद्य तथैवान्यद्भेषजञ्चाश्मरीप्रणुत् ॥
घृते क्षारे कषायैश्च क्षीरै सोत्तरवस्तिभि ।
यदि नोपशम गच्छेच्छेदस्तत्रोत्तरो विधि ॥
अक्रियाया ध्रुवो मृत्यु क्रियाया सशयो भवेत् ।
अत शस्त्र प्रयोक्तव्यमिति मन्यामहे वयम ॥
आतुर स्वगणश्चास्य समापृच्छ्य भिषग्वर ।
स्मृत्वेश्वर प्रयुञ्जीत शस्त्र शस्त्रक्रियापटु ॥

प्रयोच्ये शस्त्रे स्निग्धस्विन्नस्यातुरस्य मूलाधारे सव्ये दक्षिणे वा पार्श्वे सेवनी यवमात्रेण मुक्त्वावचारयेच्छस्त्रमश्मरी प्रमाणम् । यथा च न भिद्यते चूर्ण्यते वा तथा प्रयतेत चूर्णमल्प-मप्यवस्थित हि पुन परिवृद्धिमेति तस्मात् समस्तामग्रवक्रेणा-ददीत । स्त्रीणान्तु वस्तिपार्श्वगतो गर्भाशय सन्निकृष्ट । तस्मा-त्तासामुत्सङ्गवत् शस्त्र पातयेदतोऽन्यथा मूत्रस्रावी व्रणो भवेत् ।

एषण्यान्विष्य वै शल्य तत शस्त्र प्रयोजयेत् ।
व्रणक्रिया हृते शल्ये पथ्येनैनाञ्च वर्त्तयेत् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
अश्मर्य्यधिकार पञ्चषष्टितमोऽध्याय ।

---

# षट्षष्टितमोऽध्यायः ।

—— -c ——

## प्रमेहाधिकार ।

### प्रमेहस्य निदानम् ।

आस्यासुख स्वप्नसुख दधीनि
ग्राम्यौदकानूपरस पयांसि ।
नवान्नपान गुडवैकृतञ्च
प्रमेहहेतु कफकृच्च सर्व्वम् ॥

### मेहाना सम्प्राप्ति ।

मेदश्च मासञ्च शरीरजञ्च
क्लेद कफो वस्तिगत प्रदूष्य ।
करोति मेहान् समुदीर्णमुष्णै-
स्तानेव पित्त परिदूष्य चापि ॥
क्षीणेषु दोषेष्ववकृष्य धातून्
सन्दूष्य मेहान् कुरुतेऽनिलश्च ॥
साध्या कफोत्था दश पित्तजा षट्
याप्या न साध्या पवनाच्चतुष्क ।
समक्रियत्वाद्विषमक्रियत्वा-
न्महात्ययत्वाच्च यथाक्रम ते ॥

कफोत्था दश साध्या समक्रियत्वात । कफजेषु मेहेषु कफो दोषो, मेदप्रभृतयो दूष्या । कफ कटुतिक्तादिक्रियाभि शाम्यति मेदप्रभृतयोऽपि ताभिरेव क्षय यान्ति । अतएव एकक्रिययैव

दोषस्य दूष्यस्य च शान्तौ तेषा सुखसाध्यता। पित्तजा षट् याप्या विषमक्रियत्वात्। पित्तजेषु पित्त दोष, मेद प्रभृतयो दूष्या । मधुरादि पित्तहर किन्तु मेदोवर्द्धकम्। तथा कटुकादि मेदोहर किन्तु पित्तवर्द्धकम्। अतएव पत्तिकेषु मेहेषु एवम्भूता कापि क्रिया नास्ति यया दोषस्य दूष्यस्य च द्वयोरेव शान्ति स्यात्। उभयो प्रशमनी क्रिया परस्पर विरुद्धा। तेनैव तेषा याप्यता। वातजाश्चत्वारो महात्ययत्वात् (गम्भीरधातुव कर्षकत्वादाशुकारित्वाद्वा) असाध्या । अथवा व्याधिमहिम्नैव ते तादृशा इति।

कफ सपित्त पवनश्च दोषा
मेदोऽस्रशुक्राम्बुवसालसीका ।
मज्जा रसौज पिशितञ्च दूष्या
प्रमेहिणा विंशतिरेव मेहा ॥

मेहाना पूर्व्वरूपम्।

दन्तादीना मलाढ्यत्व प्राग्रूप पाणिपादयो ।
दाहश्चिक्कणता देहे तृट् स्वाद्वास्यञ्च जायते ॥

तेषा साधारण लक्षणम्।

सामान्य लक्षण तेषा प्रभूताविलमूत्रता ॥
दोषदूष्याविशेषेऽपि तत्सयोगविशेषत ।
मूत्रवर्णादिभेदेन भेदो मेहेषु कल्पते ॥

उदकमेहस्य लक्षणम्। १

अच्छ बहु सित शीत निर्गन्धमुदकोपमम्।
मेहत्युदकमेहेन किञ्चिदाविलपिच्छिलम् ॥

इक्षुमेहस्य लक्षणम्। २

इक्षोरसमिवात्यर्थं मधुरञ्चेक्षुमेहत ॥

सान्द्रमेहस्य लक्षणम्। ३

सान्द्रीभवेत् पर्य्युषित सान्द्रमेहेन मेहति ॥

सान्द्रमेहेन यन्मेहति मूत्रयति तत् पर्य्युषित सत्
सान्द्रीभवेत् असान्द्र सान्द्र भवेत् सान्द्रीभवेत् घनीभवेदित्यर्थं ।

सुरामेहस्य लक्षणम्। ४

सुरामेही सुरातुल्यमुपर्य्यच्छमधो घनम् ॥

पिष्टमेहस्य लक्षणम्। ५

सहृष्टरोमा पिष्टेन पिष्टवद्बहुल सितम ॥

पिष्टेन पिष्टमेहेन। सहृष्टरोमा सन् मेहति।

शुक्रमेहस्य लक्षणम्। ६

शुक्राभ शुक्रमिश्र वा शुक्रमेही प्रमेहति ॥

सिकतामेहस्य लक्षणम। ७

मूत्राणान् सिकतामेही सिकतारूपिणो मलान् ।

मलोऽत्र प्रकरणात् कफ ।

शीतमेहस्य लक्षणम्। ८

शीतमेही सुबहुशो मधुर भृशशीतलम् ॥

शनैर्मेहस्य लक्षणम्। ९

शनै शनै शनैर्मेही मन्द मन्द प्रमेहति ॥

लालामेहस्य लक्षणम। १०

लालातन्तुयुत मूत्र लालामेहेन पिच्छिलम ॥

एते दश कफजा।

क्षारमेहस्य लक्षणम् ।   १

गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ॥

क्षारेण क्षारमेहेन ।

नीलमेहकालमेहयोर्लक्षणम ।   २।३

नीलमेहेन नोलाभ कालमेही मसीनिभम् ॥

हारिद्रमेहस्य लक्षणम् ।   ४

हारिद्रमेही कटुक हरिद्रासन्निभ दहत् ॥

माञ्जिष्ठमेहस्य लक्षणम् ।   ५

विस्र माञ्जिष्ठमेहेन मञ्जिष्ठासलिलोपमम् ॥

रक्तमेहस्य लक्षणम् ।   ६

पिस्रमुष्ण सलवण रक्ताभ रक्तमेहत ॥

एते षट् पित्तजा ।

वसामेहस्य लक्षणम् ।   १

वसामेही वसामिश्र वसाभ मूत्रयेन्मुहु ॥

मज्जमेहस्य लक्षणम् ।   २

मज्जाभ मज्जमिश्र वा मज्जमेही मुहुमुहु ॥

क्षौद्रमेहस्य लक्षणम् ।   ३

कषाय मधुर रुक्ष क्षौद्रमेह वदेद्बुध ॥

हस्तिमेहस्य लक्षणम् ।   ४

हस्ती मत्त इवाजस्र मुत्र वेगविवर्जितम् ।

सलसीक विवद्धञ्च हस्तिमेही प्रमेहति ॥

एते चत्वारो वातजा ।

कफजमेहानामुपद्रवा ।

अविपाकोऽरुचिश्छर्द्दिर्निद्रा कास सपीनस ।
उपद्रवा प्रजायन्ते मेहाना कफजन्मनाम् ॥

पित्तजानामुपद्रवा ।

वस्तिमेहनयोस्तोदो मुष्कावदरण ज्वर ।
दाहस्तृष्णाम्लिका मूर्च्छा विड्भेद पित्तजन्मनाम् ॥

वातजानामुपद्रवा ।

वातजानामुदावर्त्त कम्प ग्रह लोलता ।
शूलमुन्निद्रता शोष कास श्वासश्च जायते ॥

मेहानामरिष्टलक्षणम् ।

यथोक्तोपद्रवारिष्टमतिप्रस्तुतमेव च ।
पिडकापीडित गाढ प्रमेहो हन्ति मानवम् ॥

जात प्रमेही मधुमेहिनो वा
न साध्यरोग स हि बीजदोषात् ।
ये चापि केचित् कुलजा विकारा-
भवन्ति तांश्च प्रवदन्त्यसाध्यान् ॥

मधुमेहिनो जात प्रमेही न साध्यरोग साध्यो रोगो यस्येति तादृशो न भवति। अत्र मधुमेहशब्देन मेहमात्र बोध्यम्। अत्र प्रसङ्गात कुलजानामन्येषामपि रोगाणामसाध्यत्व माह ये चापि केचिदित्यादिना। कुलजा पितृपितामह-मातृमातामहादिजाता ।

सर्व्वं एव प्रमेहास्तु कालेनाप्रतिकारिण ।
मधुमेहत्वमाय न्ति तदासाध्या भवन्ति हि ॥
मधुमेहे मधुसम जायते स किल द्विधा ।

क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथेऽथवा ॥
आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयन् ।
क्षणात्क्षीणः क्षणात् पूर्णो भजते कृच्छ्रसाध्यताम् ॥

मधुसमं मूत्रमिति शेषः । स मधुमेहो द्विधा जायते । यथा धातुक्षयाद्वा दोषावृतपथे सति वा वायौ क्रुद्धे स जायते । धातुक्षयात् तथा पित्तादिना दोषेण मार्गावरणादिति द्विधा वायोः कोपेन मधुमेहो जायत इत्यर्थः । आवृतो दोषलिङ्गानीति आवृत आवृतवातकृत । येन पित्तादिना आवृतो वातस्तस्य पित्तादेर्वातस्य च लिङ्गानि दर्शयन् । अनिमित्तं अकस्मात् । क्षणात्क्षीणः क्षणात् आवरणेन पुनः पूर्णो भवन् कृच्छ्रसाध्यो भवति ।

मधुरं यच्च मेहेषु प्रायो मध्विव मेहति ।
सर्व्वेऽपि मधुमेहाख्या माधुर्य्याच्च तनोरतः ॥

मेहनिवृत्तेर्लक्षणम् ।

प्रमेहिणो यदा मूत्रमनाविलमपिच्छिलम् ।
विशदं तिक्तकटुकं तदारोग्यं प्रचक्षते ॥

प्रमेहपिडकानां नामानि सङ्ख्या च ।

शराविका कच्छपिका जालिनी विनतालजी ।
मसूरिका सर्षपिका पुत्रिणी च विदारिका ॥
विद्रधिश्चेति पिडकाः प्रमेहोपेक्षया दश ॥

तत्र शराविकाया लक्षणम् ।

सन्धिमर्म्मसु जायन्ते मांसलेषु च धामसु ।
अन्तोन्नता च तद्रूपा निम्नमध्या शराविका ॥

तद्रूपा शरावरूपा ।

कच्छपिकाया लक्षणम् ।

सदाहा कूर्म्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥

जालिन्या लक्षणम ।

जालिनी तीव्रदाहा तु मांसजालसमावृता ॥

विनताया लक्षणम् ।

अवगाढरुजाक्लेदा पृष्ठे वाप्युदरेऽपि वा ।
महती पिडका नीला विनता नाम सा स्मृता ॥
अवगाढौ रुजाक्लेदौ यस्या सा ।

अलज्या लक्षणम् ।

रक्तासिता स्फोटचिता दारुणा त्वलजी भवेत् ॥

मसूरिकाया लक्षणम ।

मसूरफलसंस्थाना विज्ञेया सा मसूरिका ॥

सर्षप्या लक्षणम् ।

गौरसर्षपसंस्थाना तत्प्रमाणा च सर्षपी ॥

पुत्रिण्या लक्षणम् ।

महत्यल्पचिता ज्ञेया पिडका चापि पुत्रिणी ॥

विदारिकाया लक्षणम् ।

विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥

विद्रधिकाया लक्षणम ।

विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा ।
ये यन्मया स्मृता मेहास्तेषामेतास्तु तन्मयाः ।
विना प्रमेहमप्येता जायन्ते दुष्टमेदसः ॥
तावच्चैता न लक्ष्यन्ते यावद्वास्तुपरिग्रहाः ॥

पीडकानामुपद्रवा ।

तृट्कासमांससङ्कोथमोहहिक्कामदज्वरा ।
विसर्पा मर्म्मसरोध पिडकानामुपद्रवा ॥
मर्म्मसरोध हृदयावरोध ।

पिडकानामरिष्ट लक्षणम ।

गुदे हृदि शिरस्यंसे पृष्ठे मर्म्मसु चोत्थिता ।
सोपद्रवा दुर्व्वलाग्ने पिडका परिवर्ज्जयेत् ॥

प्रमेहस्य चिकित्सा ।

स्थूल प्रमेही बलवानिहैक
कृशस्तथान्य परिदुर्व्वलश्च ।
सबृंहण तत्र कृशस्य कार्य्यं
सशोधन दोषबलाधिकस्य ॥
ऊर्द्ध्व तथाधश्च मलेऽपनीते
मेहेषु सन्तर्पणमेव कार्य्यम् ।
सशोधन नार्हति य प्रमेही
तस्य क्रिया सशमनी विधेया ।

रूक्षमुद्वर्त्तन गाढ व्यायामो निशिजागर ।
यच्चान्यच्छ्लेष्मपित्तघ्न वहिरन्तश्च तद्धितम ॥
सर्व्वमेहहरो धात्र्या रस क्षौद्रनिशायुत ।
कषायस्त्रिफलादारुमुस्तकैरथवा कृत ॥
त्रिफलादारुदार्व्यब्दक्वाथ क्षौद्रेण मेहहा ॥
पीतो रसो गुडूच्या वा मधुना मेहनाशन ॥
शतावर्य्या रस नीत्वा क्षीरेण सह य पिबेत् ।
प्रमेहा विंशतिस्तस्य क्षय यान्ति न सशय ॥

आमदुग्ध समजल य पिबेत् प्रातरुत्थित ।
नि सशय शुक्रमेह पुराणस्तस्य नश्यति ॥
शुक्रमेहहरस्तद्वच्छाल्मल्या मूलजो रस ॥
प्रयोगो फणिफेनस्य मूत्रभूयस्त्वनाशन ॥
व्यायामजातमखिल भजन् मेहान् व्यपोहति ।
पादतश्छत्त्ररहितो भिक्षाशी मुनिवद् यत ॥
योजनाना शत गच्छेदधिक वा निरन्तरम् ।
मेहान् जेत् वने वापि नीवारामलकाशन ॥
वङ्गेश्वररसश्चैव रसश्च तारकेश्वर ।
पञ्चाननरसो मेहकुलान्तकरसस्तथा ॥
सोमेश्वररस सोमनाथश्चेन्द्रवटी तथा ।
चन्द्रप्रभावटी चैव वसन्तकुसुमाकर ।
तथा विडङ्गादिर्लौहो वटिका शुक्रमातृका ।
दाडिमाद्य घृत चैव कदल्यादिघृत तथा ।
प्रमेहमिहिर तैलमरिष्टो देवदारुज ।
भेषजान्येवमादीनि प्रशस्तानि च मेहिनाम ॥

अत्र पथ्यापथ्यानि ।

श्यामाककोद्रवोद्दालगोधूमचनकाढकी ।
कुलत्थाश्च हिता भोज्ये पुराणा मेहिना सदा ॥
जाङ्गल तिक्तशाकञ्च यवान्नञ्च श्रमो मधु ।
एतदन्यच्छर्कराद्य श्लेष्मलञ्च न शर्मणे ॥

इत्यायुर्वेदविज्ञाने निदानचिकित्सितस्थाने
प्रमेहाधिकार षट्षष्टितमोऽध्याय ।

# सप्तषष्टितमोऽध्याय ।

—— ० ——

## बहुमूत्र मधुमेहाधिकार ।

### बहुमूत्रस्य निदानम् ।

स्त्रीणामतिप्रसङ्गाद्वा शोकाच्छ्रमविवर्ज्जनात् ।
आभिचारिकदोषाच्च गरदोषात्तथैव च ॥
आप सर्व्वशरीरेभ्य क्षुभ्यन्ति प्रस्रवन्ति च ।
तस्मात्ता प्रच्युता स्थानान्मूत्रमार्गं व्रजन्ति च ॥
प्रसन्ना विमला शीता ससिता नीरुज सिता ।
स्रवन्ति चातिमात्रन्तु दौर्ब्बल्य गतिहीनता ॥
नीरस शिथिलत्वन्तु मुखतालु विशोषणम् ।
सोमरोग इति ज्ञेयो देहे सोमक्षयान्नृणाम् ॥
सोऽतिक्रान्त क्रमेणैव स्रवेन्मूत्रमभीक्ष्णश ।
मूत्रातिसारमप्येव तमाहुर्बलनाशनम् ।
तेन तृष्णाभिभूतोऽसौ पल पिबति चाधिकम् ॥
कदलीना फल पक्क धात्रीफलरस मधु ।
शर्करापयसा पीतमपा धारणमुत्तमम् ।
कदलीना फल पक्क विदारीञ्च शतावरीम् ।
क्षीरेण पाययेत् प्रातरपा धारणमुत्तमम् ॥
धात्रीफलस्य रसक मधुना च पिबेत् सदा ।
बहुमूत्र क्षय कुर्य्यात् क्षारेण वासकस्य च ॥
तालकन्दञ्च तरुण खर्ज्जूर कदलीफलम् ।

पयसा पाययेत् प्रातर्मूत्रातीसार नाशनम् ॥
माषचूर्णं समधुक विदारी शर्करा मधु।
पयसा पाययेत् प्रात सोमरोगविनाशनम् ॥
अहिफेन प्रयोगेण मूत्ररोधो भवेद्ध्रुवम् ॥

बहुमूत्रान्तक लौह ।

रस गन्धमयोऽभ्रञ्च वङ्ग सर्व्वं सम समम्।
रसस्य पादिक हेम रम्भापुष्परसेन च ॥
मर्द्दयित्वा वटी कार्य्या चणकाभानुपानत ।
रसो गुडूच्या दानव्यो बहुमूत्रान्तकाभिध ॥
लौहो हन्ति सोमरोग प्रमेहांश्चैव विंशतिम्।
मधुमेह बहुमूत्र मूत्रातिसारमेव च ॥
कदल्यादिघृत धात्रीघृतञ्च तारकेश्वर ।
सोमनाथ हेमनाथ बहुमूत्रान्तका रसा ॥
प्रमेहमिहिर तैल मालतीकुसुमाकर ।
रसो वसन्तकुसुमाकरश्च बहुमूत्रके।
भेषजान्येवमादीनि प्रयोज्यानि भिषग्वरै ॥

बहुमूत्ररोगे पथ्यापथ्यानि।

यव गोधूम मांसानि क्षीरमुद्गतसारकम्।
व्यायामो भ्रमणञ्चापि हिताय सोमरोगिणाम् ॥
ऐक्षवञ्चाम्बुपानञ्च फलमाम सुखाशनम।
अहिताय विनिर्द्दिष्ट भिषग्भि शास्त्रकोविदै ॥

---

# सोमरोगमूत्रातिसाराधिकार. ।

—— ० ——

## तयोर्निदान लक्षणञ्च ।

अव्यायामो विलासित्व गुर्व्वभिष्यन्दि भोजनम् ।
प्रध्यान मैथुन मद्य दुष्टाम्बु गुडवैकृतम् ॥
आभिचारिक दोषश्च भयशोकौ गरस्तथा ।
मर्म्माघातो यकृद्दुष्टि स्नायुमण्डल वैकृतम् ॥
दिवानिद्रातिनिद्रा वा शुश्रूषा रोगिणा सदा ।
चिरञ्चैकविधे कार्य्ये मानसे मनस स्थिति ॥
उष्णाभितप्तदेहस्य तत्क्षण शीतसेवनम् ।
नियत नगरे वासस्तथा वेगविनिग्रह ।
एतैरेवम्विधै रन्यै कारणैरतिसेवितै ॥
आप सर्व्वशरीरेभ्य क्षुभ्यन्ति प्रस्रवन्ति च ॥
तस्मात्ता प्रच्युता स्थानान्मूत्रमार्गं व्रजन्ति च ।
प्रसन्ना ससिता शीता निर्गन्धा नीरुज सिता ॥
दुर्गन्धा मन्ददाहा वा चातिमात्र स्रवन्ति च ।
अहोरात्रे मूत्रमान यावत् प्रस्थचतुष्टयम् ॥
रात्रिपर्य्युषित मूत्रमुपर्य्यच्छमधोघनम् ।
सकण्डू पिडका दुष्टक्षतो वा चर्म्मसञ्चय ॥
जायते मूत्रमार्गे च रोगी सीदति चाधिकम् ।
गात्रदाहोऽधिका तृष्णा जिह्वा शुष्का सकण्टका ।
तीक्ष्णाग्निरग्निमान्द्य वा कृशता गाढविट्कता ॥
त्वग् रुक्षा म्लाननेत्रत्व पेशी शिथिलकोमला ।
शिरोघूर्णन मालस्य सङ्कोचो हृदयस्य च ।

अशक्तिर्मैथुने वापि स्त्रीष्वहर्षो बलक्षय ॥
उद्वेगो मुखमालिन्य मरति सर्व्वकर्म्मसु।
मेद क्षयोऽतिमात्रन्तु मुखतालु विशोषणम् ॥
सोमरोग इति ज्ञेयो देहे सोमक्षयान्नृणाम्।
सोऽतिक्रान्त क्रमेणैव स्रवेन्मूत्र मभीक्ष्णश ॥
मूत्रातिसारमप्येव तस्माद्दुर्बलनाशनम्।
तेन तृष्णाभिभूतोऽसौ जल पिबति चाधिकम् ॥
मूर्च्छा प्रलापवीसर्प दुष्टव्रण क्षतक्षयै ।
आविशेन्मरण रोगी चाभिन्यासाद्युपद्रवै ॥
निदाघे जायते रोगी निदाघे च प्रकुप्यति।
कदाचिच्छीतकाले वा जायते दारुणो हि स ॥
निदाने बहुमूत्रोक्तो मधुमेहोऽपि जायते ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
बहुमूत्रसोमरोगाधिकार सप्तषष्टितमोऽध्याय ।

---

## अष्टषष्टितमोऽध्यायः।



### शुक्रमेहाधिकार ।

### शुक्रमेहस्य निदानम।

योऽनात्मवानविधिना कुरुते रेतसो व्ययम्।
शुक्रमेहाभिधस्तस्य गदो भवति दारुण ॥

अविधिना अतिसङ्गमेन करकर्म्मणा वा।

## शुक्रमेहस्य लक्षणम् ।

मलमूत्रातिवेगेन तथा कामस्य वेगत ।
स्त्रीस्पृष्टिदृष्टिस्मरणादपि रेत पतेत्तथा ॥
निद्राया रमणीसङ्गानुभावात् सपतेदपि ।
रोगेऽति प्रबले शिश्ने शिथिलेऽपि च तत्पतेत् ॥
तन्द्राविशेऽथ शयने तत्पतेदत एव च ।
न शक्नुयाद्गदी नारी सन्तोषयितुमण्वपि ॥
ततो यायाद्भाग्यहीनो ध्वजभङ्गाख्यमामयम् ।
वृथा जीवति स क्लीवो मरण तस्य जीवनम् ॥
अग्निमान्द्य कोष्ठरोध शिरस परिघूर्णनम ।
अजीर्णमतिसारश्च दृष्टेर्दुर्बलता तथा ॥
नेत्रान्ते नीलिमा शुक्रमेहस्योपद्रवा इमे ॥

## शुक्रमेहस्य चिकित्सा ।

शुक्रस्य रक्षण कार्य्य शुक्रमेहेऽतियत्नत ।
अन्नपानौषध सर्व्व विधेय धातुपोषकम् ॥
कुष्ठ कशेरुका दारु त्रिफला रजनीद्वयम् ।
पार्थ चन्दन शैवाल दूर्व्वागुरु वलास्तथा ॥
शुक्रमेहहरो ज्ञेय क्वाथ एषा सशर्कर ॥
शुक्रमेह हरेदाशु मधुनामलकीरस ॥
शाल्मलीरसयोगेन जतु सिन्दूरसेवनम् ।
सेवन माक्षिकस्यापि शुक्रमेहहर मतम् ॥
स्वरसेनामृतायाश्च शुक्रमेह हरेच्छुभा ॥
शुभा वंशलोचना ।

स्वप्ने शुक्रच्युतिर्न स्याद् यदि चाद्यात् सुरप्रियम् ॥
सुरप्रिय कावावचिनीति भाषा ।
सकर्पूराहिफेनस्य सेवनञ्च तदर्थकृत् ॥

माक्षिकादि चूर्णम् ।

माक्षिक पारद गन्ध खर्पर गिरिमृत्तिकाम् ।
शिलाजत्वभ्रलौहानि शाल्मल्या कुसुम त्वचम् ॥
विदारी गोक्षुर वीज चैकत्र परिमर्द्दयेत् ।
माषमात्र प्रयुञ्जीत शुक्रमेह निवृत्तये ॥

कामचूडामणि रस ।

मौक्तिक माक्षिकञ्चैव स्वर्णभस्म पृथक् पृथक् ।
कर्पूर जातिकोषञ्च जातीफल लवङ्गकम् ॥
वङ्गभस्म तथा ग्राह्य रूप्यञ्चापि तदर्द्धकम् ।
चातुर्जातञ्च सग्राह्य सर्व्वमेकत्र चूर्णितम् ॥
शतमूलीरसेनैव भावयेत् सप्तवारकम् ।
ततो गुञ्जाप्रमाणेन वटिका भिषजा कृता ॥
अनुपान विशेषेण रोगाकर विनाशिनी ।
शीत पयोऽनुपानञ्च कामिनी कामयेच्छतम् ॥
वीर्य्यहीनो भवेत् यस्तु यो वा स्यात् पतितध्वज ।
सोऽशीतिवार्षिको वापि युवेव रमतेऽङ्गना ॥
भेषजैर्विविधै कि स्यात् अन्यैश्च शतसख्यकै ।
फल न किञ्चित्तत्रास्ति केवल गौरव मुहु ॥
नात परतर किञ्चिदस्ति पुष्टिकरञ्च भुवि ।
अत सर्व्वप्रयत्नेन सेव्य भूमिभुजा सदा ॥
विशेषाद्ध्वजभङ्गाख्य सप्ताहेन विनाशयेत् ।

प्रमेह मूत्ररोगञ्च मन्दाग्नि श्वयथु तथा ॥
रक्तदोषञ्च नारीणा पानाद्दोष विनश्यति ॥
कामधेनुरसश्चैव शिलाजतु वटी तथा ।
चन्दनाद्यासवश्चैव प्रशस्त शाल्मलीघृतम् ॥
चन्द्रप्रभा नाम वटी वटिका शुक्रमातृका ।
प्रमेहमिहिर तैल तैल पल्लवसारकम् ।
भेषजान्येवमादीनि शुक्रमेहहराणि हि ॥

शुक्रमेहे पथ्यापथ्यानि ।

अभिष्यन्द्यतितीक्ष्णञ्च पानान्न वह्निसूर्य्ययो ।
सन्ताप स्त्रीप्रसक्तिञ्च वेगरोध प्रजागरम् ॥
क्रोध शोक दिवानिद्रा लङ्घनञ्चातिचिन्तनम् ।
अत्यालस्यमसत्सङ्ग शुक्रमेही विवर्ज्जयेत् ॥
अनुग्र पोषण शुक्रवर्द्धक यद्भवेदिह ।
अन्न पान शुभ ज्ञेय विपरीत न शर्म्मणे ॥

---

## औपसर्गिकमेहाधिकार: ।

बहुसङ्कर सम्भोग प्रक्लिन्नेन्द्रियया पुमान् ।
स्त्रिया सङ्गस्य सम्मूढो गदमाप्नोति दारुणम् ॥
मूत्रनाड्यन्तरस्थाना त्वगस्य श्लेष्मवाहिणी ।
व्रणितावाहरेत् क्लेद व्रणमेह स उच्यते ॥
औपसर्गिक मेहश्च तस्य नामान्तर मतम् ।

मेह आगन्तुकश्चापि स कैश्चित् परिभाष्यते ॥
आरभ्य सङ्गमनिशा संख्यया या च सप्तमी ।
एतद्व्यवहिते काले प्रायशो जायते गद ॥
कण्डू शिश्नाग्रतस्तस्य समुत्थान मुहुर्मुहु ।
तीव्रवेदनया चापि मुहुर्मूत्र प्रवर्त्तनम् ॥
स्फीतिर्लिङ्गस्य लौहित्य कोषे व्रणे च वेदना ।
कदाचित् क्लेदसरुद्धमार्गत्वादतिरुक् स्रवेत् ॥
मूत्र दाहेन घोरेण द्विधार वा प्रवर्त्तते ।
न्सरेद्वा क्षतज मेढ्रान्मूत्रकाले कदाचन ॥
सन्तत तनुरास्राव स्रवेदादौ ततोऽतनु ।
स तावत् पुनराशुष्यन् पीतिमान प्रयाति च ॥
कालो लघौ व्यथा कुर्य्याद्व्याधिश्च दुष्प्रतिक्रियम् ।
आमवाताक्षिरोगाद्या ज्ञेयास्त्वस्य ह्युपद्रवा ॥

औपसर्गिक मेहस्य चिकित्सा ।

व्रणमेही त्यजेद् यत्नाद्व्यवाय सोऽहितो यत ।
स्त्रियाश्च परिभुक्ताया आमय जनयेच्च तम ॥
भेषज पानमन्नञ्च निषेवेतानुलोमनम् ।
व्रणघ्न मूत्रजनन क्रियामुग्रा विवर्ज्जयेत् ॥
कोष्णे जात्या वराया वा क्वाथे शिश्न निमज्जयेत् ।
वेदनोपशमस्तेन व्याधेश्च बलसत्त्वय ॥
आभानिर्य्यासतोयञ्च यवक्षारयुत पिबेत् ।
सजल क्षीरमाम वा व्रणमेह निवृत्तये ॥
पिबेद्वा शारिवाक्वाथ सक्षार नरसारकम् ॥
श्यामामनन्ता कट्वीञ्च वीज गोक्षुर सम्भवम् ।

गन्धाञ्जनरसाराभ्यां क्वाथयित्वा जलं पिबेत् ॥
एकं सुरप्रियफलं मेहमागन्तुकं हरेत् ॥
वराभापिप्पलीनाञ्च व्रणमेहनिवृत्तये ।
कुर्य्यादुत्तरवस्तिञ्च कषायेण प्रयत्नतः ॥

महाभ्रवटिका ।

त्रिसप्तकृत्वः सम्भाव्य भृङ्गराजाम्भसाभ्रकम् ।
तेन गन्धं रसं लौहं हेम चाभ्रार्द्धसम्मितम् ॥
वराक्वाथेन समर्द्य वटिकां रक्तिकोन्मिताम् ।
औपसर्गिकमेहस्य नाशाय दापयेद्भिषक् ॥

कन्दर्परसः ।

रसो गन्धः प्रवालञ्च काञ्चनं गिरिसृत्तिका ।
वैक्रान्तं रजतं शङ्खं मौक्तिकञ्च समं समम् ॥
न्यग्रोधस्य कषायेण भावयित्वा च सप्तधा ।
वल्लोन्मानां वटीं कृत्वा त्रिफलाक्वाथवारिणा ॥
सुरप्रियस्यार्ज्जुनस्य क्वाथेनाथाम्भसापि वा ।
औपसर्गिकमेहस्य शान्त्यर्थं विनियोजयेत् ॥

---

## ओजोमेहाधिकारः ।

—o—

अभिघाताग्निमान्द्यामवातजीर्णविसूचिका ।
विषमज्वरशोथाद्यैर्यक्ष्मकासादिभिस्तथा ॥
वृक्कयोः शोणितस्रोतोविकृतेरसदोषतः ।

लसिकाशुक्र पूयास्रैर्युक्ते मूत्रे तथा नृणाम् ॥
स्त्रीणां गर्भागमे चैव कटुकक्षारवर्जिते ।
मधुरीजस्करद्रव्यभक्षणे रतिमात्रत ॥
गुरुपथ्युपितानाञ्च भोजनादतिभोजनात् ।
नवधान्यादिगोधूम इक्षडिम्बातिसेवनात् ॥
दूषिते शीतले तोये स्नानपानावगाहनात् ।
एभिर्निदानैरन्यैश्च दूषितादोजसो भवेत् ॥
ओजोमेह स विज्ञेय आयुर्बलनिकृन्तन ।
शारीरिकश्रमवशात् तथान्येनैव हेतुना ॥
द्रुत शोणितसञ्चारात् प्रकृतेश्च विपर्य्ययात् ।
ओजो विकृतिमापन्न इक्षाण्डश्वेतभागवत् ॥
पिष्टतण्डुलवद्वाथ सह मूत्रेण सस्रवेत् ।
मेद क्षयो भवेत्तत्र ज्वरारोचकयोस्तथा ॥
शोथेऽग्निमान्द्ये सञ्जाते गदोऽसाध्यो न संशय ।
अन्यथा कृच्छ्रसाध्योऽसौ यत्नात् जीवति मानव ॥

अथ चिकित्सा ।

विचार्य्य दोषपूयादीन् निदान परिवर्ज्जयेत् ।
चिकित्सेत गदाक्रान्त दोषदूष्यानुसारत ॥
अथ प्रधानमगद हितमत्र विशेषत ।
वर्ज्जनीय रसोद्भूतमौषध शिवमिच्छता ॥
ओजोह्रासजदौर्ब्बल्य दूरीकुर्य्यात् प्रयत्नत ॥

चन्दनादि ।

चन्दने नलद द्राक्षा गुडूची मधुक स्फटी ।
धात्री च क्वाथ एतेषा ओजोमेहोपशान्तिकृत् ॥

तथा हारिद्र माञ्जिष्ठ मेहादीना परौषधम् ।
सोपद्रवाणा कथित कृपार्द्रेणैव शम्भुना ॥

### अजमोदादि चूर्णम् ।

अजमोदामृता शुण्ठी गुडूची त्रिफला त्रिवृत् ।
वीज गोक्षुरज दारुनिशा श्यामा नृसारकम् ॥
चूर्णमेषा माषमित सेवित यत्नतो हरेत् ।
ओजपिष्टादिजान् मेहान् द्रुत भास्वान् यथा तम ।
दाडिमाद्य घृत चन्द्रप्रभा नाम वटी तथा ॥
मुक्तावङ्गेश्वरश्चैव वसन्तकुसुमाकर ।
चन्दनाद्यासवोऽरिष्टो देवदारुसमुद्भव ।
प्रमेहमिहिर तैल तथा मेहाधिकारिकम् ॥
अगद चात्र युञ्जीत नित्य कुशलमिच्छता ॥

### चन्दनासव ।

चन्दने सरल देवदारु दारुनिशा निशा ।
त्रिवृत् चित्रकमूलञ्चागुरु धात्री सुरप्रियम् ॥
शतमूल्याश्मभिद वासात्वचश्च सारिवाद्वयम् ।
लक्ष्मणायास्तथा मूल वात्ररोवरुणत्वचौ ॥
प्रत्येक पलिक ज्ञेय द्राक्षाया पलविंशकम् ।
धातकी षोडशपला तुलामाना सिता तथा ॥
माक्षिकार्द्धपल सर्व्व जलद्रोणद्वये क्षिपेत् ।
माससिक भाण्डमध्ये सपिधाने निधापयेत् ॥
चन्दनासव इत्येष रोगानीकनिकृन्तन ।
शुक्रदोष रजोदोष मूत्रदोष सुदारुणम् ॥
निहन्ति विविधान् मेहान् कृच्छ्रमष्टविध तथा ।

चतस्रश्चाश्मरीस्तद्वन्मूत्राघातास्त्रयोदश ॥
अन्त्रवृद्धि पाण्डुरोग कामलाञ्च हलीमकम् ।
कास श्वास तथा कुष्ठमग्निमान्द्यमरोचकम् ॥
औपसर्गिकमेहाश्च नाशयेदविकल्पत ।
भाषित श्रीमहेशेन लोकाना हितकारिणा ॥

पथ्यापथ्यव्यवस्था ।

लघु वल्य पुराणञ्च धान्यमुद्गयवादिकम् ।
वार्त्ताकुञ्च पटोलञ्च काकोडुम्बरक तथा ॥
कारवेल्लादिक शस्त वर्ज्जयेन्मधुर गुरु ।
मास मत्स्यान् तथाध्वानमातपाग्निनिषेवणम् ॥
दूषितातिशीततोय स्नानपानावगाहनम् ॥

---

## लसिकामेहाधिकार: ।



अस्य निदान लक्षणञ्च ।

मधुराणा फलानाञ्च मूलानाञ्च गुडोद्भवाम ।
द्रव्याणाञ्चातियोगाच्च तथैवातिपरिश्रमात् ॥
मानसश्रमशीलाना वर्ज्जयित्वा तु कायिकम् ।
गुरु पर्य्युषित क्लिन्नाभिष्यन्दिद्रव्यभोजनात् ॥
आनूप मत्स्य मासादि भोजनादतिभोजनात् ।
एभिर्निदानै सदुष्टो यकृत् पक्वाशयस्तथा ॥

वृक्कयोर्मत्रकोषे च जनयित्वा चत ततम ।
मूत्रमार्गेण तरल पूयरक्तादिसन्निभम ॥
समेदस्क सलसिक नराणा स्रावयेन्मुहु ।
सालक्तकपयस्तुल्य मूत्र सम्यक् प्रवर्त्तयेत ॥
कदाचिज्जायते मूत्र पूयरक्तादिभिर्घनम ।
स्थूल सूत्रनिभ तस्मादधिका जायते व्यथा
दोषदूष्यादिभेदेन मूत्रस्य क्रामवर्द्धने ।
तथा वर्णविभेदश्च जायते मेहिन सदा ॥

अस्य वातिकस्य लक्षणम ।

वातजे लसिकामेहे चाम्लगन्धि सशोणितम ।
आमिक्षाजलवन्मूत्र मुहुर्मुञ्चयते नरम ॥
विश्लिष्टा सन्धयस्तस्मिन मल सम्यङ् न नि सरेत् ॥

अस्य पैत्तिकस्य लक्षणम ।

घन सपूय मूत्रञ्च पैत्तिकेऽधिकपूतिमत ।
जायते चास्यवैरस्य सन्ताप करपादयो ॥

अथ श्लैष्मिकस्य लक्षणम ।

श्लैष्मिके लसिकामेहे मूत्र शुक्ल तथाविलम ।
तथा पर्य्युषिते तस्मिन्नुपर्य्यच्छमधोघनम ॥
क्षुन्नाशो वङ्क्षणकटिव्यथा सम्यक् प्रजायते ॥

अस्य द्वित्रिदोषस्य लक्षणम ।

द्वित्रिदोषभवे मेहे मिश्र लक्षणमीच्यते ॥

अस्य साध्यासाध्यादिकम् ।

सुसाध्योऽसौ भवेद्यूनामल्पकालभवो गद ।
नोचेदसाध्यो दु साध्यो भवेदेव न सशय ॥

(द, ३६)

कदाचित् प्रबलीभूय प्रशाम्येत् पथ्यसेवनात् ।
तत पुनर्वर्द्धमान कालात् कालवश नयेत् ॥

अस्य चिकित्सा ।

तिन्दुकादि ।

तिन्दु विल्व विडङ्गञ्च व्याघ्रो धात्री च जाम्बवी ।
वव्बूल लोहितञ्चैव खदिर रक्तचन्दनम् ॥
एषा क्वाथो हरेन्मेहान् लसिकाख्य सुदारुणम् ।
तथा माञ्जिष्ठमेहादि नानोपद्रवसयुतम् ॥

चन्दनादिचूर्णम् ।

रक्ताङ्ग वव्बूलरस प्रियङ्गु
जम्बाम्रवीजेन्द्रयव यमानो ।
वन्या च सा मोचरसो गुडूची
लौहस्य भस्म सममेव सर्व्वम् ॥
मात्रैकमासप्रमिता विधेया
प्रोक्त महेशेन च चन्दनादि ।
चूर्ण प्रमेहान् सकलाश्च तूर्ण
सपूयरक्त लसिकाख्यमेहम ॥
सोपद्रव हन्ति तथाग्निमान्द्य
तृष्णाज्वरारोचकरोगसघान् ॥
सोमनाथरसो हेमनाथो वङ्गेश्वरस्तथा ।
चन्द्रप्रभाख्या गुडिका तथैव चन्दनासव ॥
तैल पल्लवसाराख्य श्रीगोपालाभिध तथा ।
युञ्ज्यात् युक्त्यनुसारेण व्याधौ चास्मिन् प्रयत्नत ॥

अथ पथ्यापथ्यम्।

रक्तशाल्योदनं मुद्गं यवा वास्तूकमेव च।
पालक्या चैव वेत्राग्रं कर्कोटो कदली तथा॥
हिमालयप्रदेशे च वासो वा सुखचित्तता।
हितानेतान् निषेवेत गुर्व्वभिष्यन्दि भोजनम्।
मत्स्यं मांसं तथा रौद्रसेवाध्वानं परिश्रमम्।
वर्ज्जयेत् यत्नतो धीमानायुरारोग्यवृद्धये॥

त्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने शुक्रमेहौपसर्गिकमेह लसिकामेहाधिकारोऽष्टषष्टितमोऽध्यायः।

---

# ऊनसप्ततितमोऽध्यायः।

---

ध्वजभङ्गाधिकारः।

क्लैव्यस्य लक्षणं संख्या निदानञ्च।

क्लीवः स्यात् सुरताशक्तस्तद्भावः क्लैव्यमुच्यते।
तच्च सप्तविधं प्रोक्तं निदानं तस्य कथ्यते॥
तैस्तैर्भावैरहृद्यैस्तु रिरंसोर्मनसि क्षते।
ध्वजः पतत्यधो नृणां क्लैव्यं समुपजायते॥
द्वेष्यस्त्रीसम्प्रयोगाच्च क्लैव्यं तन्मानसं स्मृतम्॥
कटुकाम्लोष्णलवणैरतिमात्रोपसेवितैः।
पित्ताच्छुक्रक्षयो दृष्टः क्लैव्यं तस्मात् प्रजायते॥

अतिव्यवायशीलो यो न च वाजीक्रियारत ।
ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुकम् ॥
महता मेढ्ररोगेण चतुर्थी क्लीवता भवेत् ॥
वीर्य्यहानिशिराच्छेदान्मेहनानुन्नतिर्भवेत् ॥
बलिन क्षुब्धमनसो निरोधाद् ब्रह्मचर्य्यत ।
षष्ठ क्लैव्य स्मृत तत्तु शुक्रस्तम्भनिमित्तजम् ॥

बलिन पुष्टस्य, क्षुब्धमनस कामात् सचलितमनम, ब्रह्मचर्य्यममैथुन तस्मात् निरोधात् शुक्रस्य क्लैव्य भवति ।

जन्मप्रभृति यत् क्लैव्य सहज तद्धि सप्तमम् ॥
असाध्य सहज क्लैव्य मर्म्मच्छेदाच्च यद्भवेत् ।

मर्म्मच्छेदात् वीर्य्यवाहिशिराच्छेदात् ।

स्त्रीणामपि भवेत् क्लैव्य रेतक्षरण रोधकम् ।'
क्लीवास्तृप्ति न गच्छन्ति नार्य्य पसङ्गमेन च ॥

अथ क्लैव्यचिकित्सा ।

क्लैव्यानामिह साध्याना कार्य्यो हेतुविपर्य्यय ।
मुख्य चिकित्सित यस्मान्निदानपरिवर्ज्जनम् ॥

पुष्पधन्वा ।

हरज भुजग लौह चाभ्रक वङ्गचूर्ण
कनक विजय यष्टी शाल्मली नागवल्ली ।
घृत मधु सित दुग्ध पुष्पधन्वा रसेन्द्रो
रमयति शतरामा दीर्घमायुर्बलञ्च ॥

कनकादि क्वाथेन भावयित्वा घृतादिभिर्योजयेत् ॥

अश्वगन्धाघृत चैवामृतप्राशघृत बृहत्-
चन्द्रोदय सिद्धसूतो मकरध्वज एवच ॥

स्वल्पचन्द्रोदयश्चैव बृहच्चन्द्रोदयस्तथा ।
पूर्णचन्द्ररसस्तथा त्रैलोक्यचिन्तामणिक ॥
तथा कामाग्निदर्पघ्न कामदीपक एव च ।
तथा शाल्मलीकल्पाख्य कामाग्निदीपनस्तथा ॥
तथा चन्दनादितैल श्रीगोपालाख्यमेव च ।
ध्वजभङ्गे प्रदेय श्रीमदनानन्द मोदक ॥
वाजीकरणवृष्योक्त रसायनकर तथा ।
भेषज भिषजा योज्य क्लैब्यरोगप्रशान्तये ॥

अत्र पथ्यम् ।

शालो षष्टिक गोधूम मसूर चनकादय ।
हैयङ्गवीन दुग्ध च नवनीत सुरा सिधु ॥
चटको वर्त्तकश्चैव तित्तिरो चरणायुध ।
शश हरिण छागाना मासानि कोमलानि च ॥
द्राक्षा दाडिम खर्ज्जूर जाम्बवाम्र फलानि च ।
पथ्यान्येतानि वस्तूनि ध्वजभङ्ग हराणि हि ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
ध्वजभङ्गाधिकार ऊनसप्ततितमोऽध्याय ।

# सप्ततितमोऽध्यायः।

— o —

## मेदोरोगाधिकार ।

### तस्य विप्रकृष्ट निदानम्।

अव्यायामदिवास्वप्नश्लेष्मलाहारसेविन ।
मधुरोऽन्नरस प्राय स्नेहान्मेदो विवर्द्धयेत् ॥

अन्नरस आमद्रव । स मधुर सन् स्नेहात् मेदो विवर्द्धयेत् ।

मेदसावृतमार्गत्वात् पुष्यन्त्यन्ये न धातव ।
मेदस्तु चीयते तस्मादशक्त सर्व्वकर्म्मसु ॥

क्षुद्रश्वासतृषामोहस्वप्नक्रथनसादनै ।
युक्त क्षुत् स्वेददौर्गन्धैरल्पप्राणोऽल्पमैथुनै ॥

मेदस्तु सर्व्वभूतानामुदरेष्वस्थिषु स्थितम् ।
अतएवोदरे वृद्धि प्रायो मेदस्विनो भवेत् ॥

मेदसावृतमार्गत्वाद्वायु कोष्ठे विशेषत ।
चरन् सन्धुक्षयत्यग्निमाहार शोषयत्यपि ॥

तस्मात् स शीघ्र जरयत्याहारञ्चाभिकाङ्क्षति ।
विकारांश्चाप्नुते घोरान् कांश्चित कालव्यतिक्रमात् ॥

स मेदस्वी आहार शीघ्र जरयति पुनर्भोक्तुञ्च काङ्क्षति । स दीप्ताग्नि कालव्यतिक्रमात् भोजनकालातिक्रमात् ।

एतावुपद्रवकरौ विशेषादग्निमारुतौ ।
एतौ हि दहत स्थूल वनदावो यथा वनम ॥

एतौ अग्निमारुतौ विशेषादुपद्रवकरौ भवत । एतौ हि वनदाव वनमिव स्थूल मेदस्विन दहतो नाशयत । वनदावो

यथा वनमित्यत्र वन दावानलो यथा इति पाठान्तरम्। दाव शब्दस्यैव वनाग्नौ शक्तौ पुनर्वनशब्दप्रयोग स्पष्टार्थ कारकाङ्गण-न्यायेन वा।

मेदस्यतीव सवृद्धे सहसैवानिलादय ।
विकारान् दारुणान् कृत्वा नाशयत्याशु जीवितम् ॥

अतिस्थूलस्य लक्षणम् ।

मेदमासातिवृद्धत्वाच्चलस्फिगुदरस्तन ।
अयथोपचयोत्साहो नरोऽतिस्थूल उच्यते ॥

अयथोपचयोत्साहो न यथा उपचयो मासोपचय उत्-साहश्च यस्य स ।

मेदोरोगस्य चिकित्सा ।

श्रमचिन्ताव्यवायाध्वक्षौद्रजागरणप्रिय ।
हन्त्यवश्यमतिस्थौल्य यवश्यामाकभोजन ॥
अस्वप्नश्च व्यवायश्च व्यायाम चिन्तनानि च ।
स्थौल्यमिच्छन् परित्यक्तु क्रमेणातिप्रवर्द्धयेत् ॥
क्षार वातारिपत्रस्य हिङ्गुयुक्त पिबेन्नर ।
सहित भक्तमण्डेन मेदोवृद्धिनिवृत्तये ॥
प्रातर्मधुयुत वारि सेवित स्थौल्यनाशनम् ॥
उष्णमन्नस्य मण्ड वा पिबन् कृशतनुर्भवेत् ॥
क्षौद्रेण त्रिफलाक्काथ पीतो मेदोहर स्मृत ॥
व्योषाग्निनिफलामुस्तविडङ्गैर्गुग्गुलु समम् ।
खादन् सर्व्वान् जयेद्रोगान् मेद श्लेष्मामवातजान् ॥
पिप्पली मधुना सेव्या मेद कफविनाशिनी ॥

धत्तूरपत्रस्वरसेन गाढ-
मुद्वर्त्तनं स्वौल्यहरं प्रदिष्टम् ॥
सचव्यजीरकव्योषहिङ्गुसौवर्च्चलानला ।
मस्तुना शक्तव पीता मेदोघ्ना वह्निदीपना ॥
समभागेन समुदितचूर्णात् षोडशगुणा शक्तव ।
हरीतकीन्तु सर्पिश्च देहमुद्वर्त्तनं नरः ।
पश्चात् स्नानं प्रकुर्व्वीत स्वेददौर्गन्ध्यशान्तये ॥
शिरीषलामज्जकहेमलोध्रै-
स्त्वग्दोषसस्वेदहरः प्रघर्षः ।
शरीरदौर्गन्ध्यहरः प्रदेहः
पत्राम्बुलोध्राभयचन्दनानाम् ॥
नवकगुग्गुलुश्चैवामृताद्या गुग्गुलुस्तथा ।
लौहरसायनादीनि मेदोरोगहराणि हि ॥

पथ्यापथ्यानि ।

कफघ्नं कर्षणं यद्यदन्नपानक्रियादिकम् ।
मेदोरोगे निषेव्य तद्विपरीतं सुखाय न ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
मेदोरोगाधिकारः सप्ततितमोऽध्यायः ।

# एकसप्ततितमोऽध्याय ।

—— ——

## अथ मुखरोगाधिकार ।

### तत्रादावोष्ठरोगानाह ।

आनूपपिशित क्षीर दधि मत्स्यातिसेवनात् ।
मुखमध्ये गदान् कुर्य्यु क्रुद्धा दोषा कफोत्तरा ॥

ओष्ठरोगाणा निदान सख्या च ।

पृथग् दोषै समस्तैश्च रक्तजो मासजस्तथा ।
मेदोजश्चाभिघातोत्थ एवमष्टौष्ठजा गदा ॥

तत्र वातिकस्यौष्ठरोगस्य लक्षणम ।

कर्कशौ परुषौ स्तब्धौ सप्रासानिलवेदनौ ।
दाल्येते परिपाल्येते चौष्ठौ मारुतकोपत ॥

परुषौ रूक्षौ । दाल्येते विदार्य्येते । परिपाल्येते किञ्चिद् विदीर्णत्वचौ क्रियेते ।

पैत्तिकस्य लक्षणम् ।

चीयेते पिडकाभिस्तु सरुजाभि समन्तत ।
सदाहपाकपिडकौ पीताभासौ च पित्तत ॥

सरुजाभि पैत्तिकरुगन्विताभि ।

श्लैष्मिकस्य लक्षणम् ।

सवर्णाभिस्तु चीयेते पिडकाभिरवेदनौ ।
कण्डूमन्तौ कफादोष्ठौ पिच्छिलौ शीतलौ गुरू ॥

सान्निपातिकस्य लक्षणम् ।

सकृत् कृष्णौ सकृत् पीतौ सकृच्छ्वेतौ तथैव च ।
सन्निपातेन विज्ञेयावनेकपिडकान्वितौ ॥

रक्तजस्य लक्षणम् ।

खर्ज्जूरफलवर्णाभि पिडकाभिर्निपीडितौ ।
रक्तोपसृष्टौ रुधिर स्रवत शोणितप्रभौ ॥

मासजस्य लक्षणम् ।

मासदुष्टौ गुरू स्थूलौ मासपिण्डवदुद्गतौ ।
जन्तवश्चात्र मूर्च्छन्ति नरस्योभयतो मुखात् ॥

जन्तव क्रिमय मूर्च्छन्ति वर्द्धन्ते मुखादुभयत सृक्कण्यो ।

मेदोजस्य लक्षणम् ।

सर्पिर्मण्डप्रकोकाशौ मेदसा कण्डूरौ गुरू ।
अच्छ स्फटिकसङ्काशमास्राव स्रवतो भृशम ॥
तयोर्व्रणो न सरोहेन्मृदुत्वञ्च न गच्छति ॥

सर्पिर्मण्डो घृतस्योपरितन स्वच्छभाग । तयोरिति तादृशयो ।

अभिघातजस्य लक्षणम् ।

क्षतजाभो विदीर्य्येते पोड्येते चाभिघातत ।
मथितौ च समाख्याताावोष्ठौ कण्डूसमन्वितौ ॥

मथितौ मृदिताविव अतएव क्षतजाभौ रुधिराभाविति सङ्गतम् ।

ओष्ठरोगाणा चिकित्सा ।

गलदन्तमूलदशनच्छदेषु रोगा कफास्रभूयिष्ठा ।
तस्मादेतेष्वसकृद् रुधिर विस्रावयेद् दुष्टम् ॥

चतुर्व्विधेन स्नेहेन मधूच्छिष्टयुतेन च ।

चतुर्व्विधेन स्नेहेन तैलघृतवसामज्जरूपेण ।

वेध शिराणा वमन विरेक

तिक्तस्य पान रसभोजनञ्च ।

शीतान् प्रदेहान् परिषेचनञ्च ॥

पित्तोपसृष्टेष्वधरेषु कुर्य्यात् ॥

शिरोविरेचन धूम स्वेद कवल एव च ।

हृते रक्ते प्रयोक्तव्यमोष्ठकोपे कफात्मके ॥

मेदोजे शोधिते भिन्ने स्वेदिते कवलो हित ।

प्रियङ्गु त्रिफला लोध्र सक्षौद्र प्रतिसारणम् ॥

दन्तजिह्वा मुखाना यच्चूर्णं कल्कावलेहकै ।

शनैर्घर्षणमङ्गुल्या तदुक्त प्रतिसारणम् ॥

ओष्ठरोगेष्वशेषेषु दृष्ट्वा दोषमुपाचरेत् ।

तेषु व्रणत्व जातेषु व्रणवत् समुपाचरेत् ॥

दन्तवेष्ट रोगाणा नामानि सङ्ख्या च ।

शीतादो गदित पूर्व्वं दन्तपुप्पुटकस्तथा ।

दन्तवेष्ट शौषिरश्च महाशौषिर एव च ॥

तत परिदर प्रोक्तस्ततस्तूपकुश स्मृत ।

वैदर्भश्च तत प्रोक्त खलीवर्द्धन एव च ॥

अधिमासकनामा च दन्तनाड्यश्च पञ्च च ।

दन्तविद्रधिरप्यत्र दन्तवेष्टेषु षोडश ॥

तत्र शीतादस्य लक्षणम ।

शोणित दन्तवेष्टेभ्यो यस्याकस्मात् प्रवर्त्तते ।

दुर्गन्धीनि सकृष्णानि प्रक्लेदीनि मृदूनि च ॥

दन्तमांसानि शीर्य्यन्ते पचन्ति च परस्परम्।
शीतादो नाम स व्याधि कफशोणितसम्भव॥

दन्तपुप्पुटस्य लक्षणम्।

दन्तयोस्त्रिषु वा यस्य श्वयथुर्जायते महान्।
दन्तपुप्पुटको नाम स व्याधि कफरक्तज॥

दन्तवेष्टस्य लक्षणम।

स्रवन्ति पूय रुधिर चला दन्ता भवन्ति च।
दन्तवेष्ट स विज्ञेयो दुष्टशोणितसम्भव॥

शौषिरस्य लक्षणम्।

श्वयथुर्दन्तमूलेषु रुजावान् कफरक्तज।
लालास्रावी कण्डूरश्च स ज्ञेय शौषिरो गद॥

महाशौषिरस्य लक्षणम्।

दन्ताश्चलन्ति वेष्टेभ्यस्तालु चाप्यवदीर्य्यते।
दन्तमांसानि पच्यन्ते मुखञ्च परिवाप्यते॥
यस्मिन् स सर्व्वजो व्याधिर्महाशौषिरसञ्ज्ञक॥

तालु चाप्यवदीर्य्यते चकारात् दन्तवेष्टश्चाप्यवदीर्य्यते। सप्तरात्रान्मारकश्चाय यत आह भोज।

महाशौषिर इत्येष सप्तरात्रान्निहन्त्यसून् इति।

परिदरस्य लक्षणम।

दन्तमांसानि शीर्य्यन्ते यस्मिन् ष्ठीवति चाप्यसृक्।
पित्तासृक् कफजो व्याधिर्ज्ञेय परिदरो हि स॥

उपकुशस्य लक्षणम्।

वेष्टेषु दाह पाकश्च ताभ्या दन्ताश्चलन्ति च।
अघट्टिता प्रस्रवन्ति शोणित मन्दवेदनम्॥

आध्मायतेऽस्रुते रक्तं मुखं पूति च जायते ।
यस्मिन्नुपकुश स स्यात् पित्तरक्तसमुद्भव ॥

आघाट्टता घृष्टा ।

वैदर्भस्य लक्षणम् ।

घृष्टेषु दन्तमूलेषु संरम्भो जायते महान् ।
चलन्ति च यदा यस्मिन् स वैदर्भोऽभिघातज ॥

संरम्भ शोथ । चलन्ति चेति चकाराद् वेदनादाहपाका ।

खलीवर्द्धनस्य लक्षणम ।

मारुतेनाधिको दन्तो जायते तीव्रवेदन ।
खलीवर्द्धनसञ्ज्ञोऽसौ सञ्जाते रुक् प्रशाम्यति ॥

सञ्जाते दन्ते ।

अधिमासस्य लक्षणम ।

हानव्ये पश्चिमे दन्ते महाशोथो महारुज ।
लालास्रावी कफकृतो विज्ञेय सोऽधिमासक ॥

हानव्ये हनुभवे पश्चिमे अन्त्ये दन्ते । आक्केलदन्तेति यस्य भाषा ।

दन्तनाडीना लक्षणम ।

दन्तमूलगता नाड्य पञ्च ज्ञेया यथेरिता ॥

यथेरिता, यथा नाडीव्रणे वातपित्त कफ सन्निपातागन्तु निमित्ता दन्तनाड्य कथितास्तथात्रापीत्यर्थ ।

दन्तविद्रधेर्लक्षणम ।

दन्तमांसमलै साम्रैर्बाह्यान्त श्वयथुर्महान् ।
सदाहरुक् स्रवेद् भिन्न पूयास्र दन्तविद्रधि ॥

दन्तमांसमलै दन्तवेष्टगतदोषै सास्रै सरक्तै र्हेतुभि ।

दन्तवेष्टरोगाणा चिकित्सा।

शीतादे हृतरक्ते तु तोये नागर सर्षपान्।
नि क्वाथ्य त्रिफलाञ्चापि कुर्य्याद् गण्डूषधारणम् ॥
तैल घृत वा वातघ्न शीतादे सम्प्रशस्यते ॥

कुष्ठ दार्व्वीं लोध्रमब्द समङ्गा
तत पाठा तेजनी पीतिका च।
चूर्णं शस्त घर्षण तद द्विजाना
रक्तस्राव हन्ति कण्डू रुजाश्च ॥

कासीस लोध्र कृष्णा मन शिला प्रियङ्गुतेजोह्वा।
एषा चूर्ण मधुयुक् शीतादे प्रतिसारणम् ॥
दन्तपुष्पटके कार्य्य तरुणे रक्तमोक्षणम।
सपञ्चलवण क्षार सक्षौद्र प्रतिसारणम ॥
शिरोविरेकश्च हितो नस्य स्निग्धश्च भोजनम्।
विस्राविते दन्तवेष्टे व्रणन्तु प्रतिसारयेत्।
लोध्र पत्तङ्ग मधुक लाक्षाचूर्णैर्मधुप्लुतै ॥
चलदन्तस्थिरकर कार्य्यं वकुल चर्व्वणम ॥
भद्रमुस्ताभया व्योषविडङ्गारिष्टपल्लवै।
गोमूत्रपिष्टैर्गुटिका छायाशुष्का प्रकल्पयेत् ॥
ता निधाय मुखे सुप्याच्चलदन्तातुरो नर।
नात परतर किञ्चिच्चलदन्तस्य भेषजम ॥
शौषिरे हृतरक्ते तु लोध्रमुस्ता रसाञ्जनै।
सक्षौद्रै शस्यते लेपो गण्डूषे क्षीरिणो हिता ॥
क्रिया परिदरे कुर्य्याच्छीतादोक्ता विचक्षण ॥
सशोध्योभयत काय शिरश्चोपकुशे तथा।

काष्ठोदुम्बरिका पत्रैर्व्रण विस्रावयेद् भिषक् ॥
लवणै चौद्रयुक्तैश्च सव्योषै प्रतिसारयेत् ॥
शस्त्रेणोद्धृत्य वैदर्भ दन्तमूलानि शोधयेत् ।
तत चार प्रयुञ्जीत क्रिया सर्व्वाश्च शीतला ॥
उद्धृत्याधिकदन्तन्तु ततोऽग्निमवचारयेत् ।
क्रिमिदन्तकवच्चात्र विधि कार्य्यौ विजानता ॥
छित्त्वाधिमास सच्चौद्रै रेतैश्चूर्णै रुपाचरेत् ।
वचातिजस्विनी पाठा स्वर्ज्जिका यावशूकजै ॥
चौद्र द्वितीया पिप्पल्य कवले चात्र कीर्त्तिता ।
पटोल निम्ब त्रिफला कषायश्चात्र धारणे ॥
नाडीव्रणहर कर्म्म दन्तनाडीषु कारयेत् ।
य दन्तमधिजायेत नाडी त दन्तमुद्धरेत् ॥
छित्त्वा मासानि शस्त्रेण यदि नोपरिजो भवेत् ।
उद्धृत्य च दहेच्चापि चारेण ज्वलनेन वा ॥
गतिर्हिनस्ति हन्वस्थि दशने समुपेक्षिते ।
तस्मात समूल दशन निर्हरेद् भग्नमस्थि च ॥
उद्धृते तूत्तरे दन्ते शोणित प्रस्रवेदति ।
रक्ताभिषेकात् पूर्व्वोक्ता घोरा रोगा भवन्ति हि ॥
काण सञ्जायते जन्तुरर्दित तस्य जायते ।
चलमप्युत्तर दन्तमतो नैवोद्धरेद् भिषक् ॥
कषायैर्जाति मदन कटुक स्वादुकण्टकै ।
लोध्रखदिर मञ्जिष्ठा यष्ट्याह्वैश्च कृतैस्तथा ॥
तैल घृत वा सपक्व हन्याद् दन्तगता गतिम् ॥

विद्रध्युक्त विधि युक्त विदध्याद् दन्तविद्रधौ।
शस्त्रकर्म्म नरस्तत्र कुशलेनैव कारयेत्॥

---

## दन्तरोगाधिकार:।

— ० —

### दन्तरोगाणा नामानि सख्या च।

दालन कथित पूर्व्वं क्रमिदन्तक एव च।
प्रोक्तो भञ्जनको दन्तहर्षो वै दन्तशर्करा।
कपालिकात्र कथिता श्यावदन्तक एव च।
करालसञ्ज्ञ इत्यष्टौ दन्तरोगा प्रकीर्त्तिता॥

### तत्र दालनस्य लक्षणम्।

दीर्य्यमाणेष्विव रुजा यत्र दन्तेषु जायते।
दालनो नाम स व्याधि सदागतिनिमित्तज॥

सदागतिनिमित्तज वायुजनित इत्यर्थ।

### क्रमिदन्तस्य लक्षणम्।

कृष्णच्छिद्रश्चल स्रावी ससरम्भो महारुज।
अनिमित्तरुजो वातात् स ज्ञेय क्रमिदन्तक॥

ससरम्भो दन्तमूलशोथयुक्त। तत्रैव स्रावो वोद्धव्य। अनिमित्तरुज अवघट्टनादिनिमित्त विनैव महारुजावान्।

### भञ्जनकस्य लक्षणम्।

वक्त्र वक्र भवेद् यत्र दन्तभङ्गश्च जायते।
कफवातकृतो व्याधि स भञ्जनक सञ्ज्ञक॥

दन्तहर्षस्य लक्षणम् ।

शीतरूक्ष प्रवाताम्लस्पर्शानामसहा द्विजा ।
यत्र स्युर्वातपित्ताभ्या दन्तहर्ष स कीर्त्तित ॥
अन्यच्च । शीतमुष्णञ्च दशना सहन्ते स्पर्शन न च ।
यस्य त दन्तहर्षन्तु व्याधि विद्यात् समीरणात् ॥

दन्तशर्कराया लक्षणम ।

मलो दन्तगतो यस्तु कफश्चानिलशोषित ।
शर्करेव खरस्पर्शा सा ज्ञेया दन्तशर्करा ॥

कपालिकाया लक्षणम् ।

कपालेष्विव दीर्य्यन्तु दन्तेषु समलेषु च ।
कपालिकेति विज्ञेया दन्तच्छिद् दन्तशर्करा ॥

श्यावदन्तकस्य लक्षणम ।

योऽसृडमिश्रेण पित्तेन दग्धो दन्तस्त्वशेषत ।
श्यावता नीलता वापि गत स श्यावदन्तक ॥
दग्ध दग्धइव कृष्णवर्ण ।

करालस्य लक्षणम ।

शनै शनै प्रकुरुते यत्र दन्ताश्रितोऽनिल ।
करालान् विकटान् दन्तान् न करालो स सिध्यति ॥

दन्तरोगाणा चिकित्सा ।

दन्तरोगेषु सर्व्वेषु क्लेदहृद् दोषसङ्गनुत् ।
भेषज योजयेद् विद्वान् दृष्ट्वा दोषबल भिषक् ॥
फलान्यम्लानि शीताम्बु रूक्षान्न दन्तधावनम् ।
तथातिकठिन भक्ष्य दन्तरोगी विवर्ज्जयेत् ॥

लाक्षाद्य तैलम् ।

तैल लाक्षारस क्षीर पृथक् प्रस्थमित पचेत् ।
द्रव्यै पलमितैरेतै क्वाथैश्चापि चतुर्गुणै ॥
लोध्र कट्फल मञ्जिष्ठा पद्मकेशर पद्मकै ।
चन्दनोत्पल यष्ट्याह्वैस्तत् तैल वदने धृतम् ॥
दालन दन्तचालञ्च दन्तमोक्ष कपालिकाम् ।
हन्यादाशु गदानेतान् कुर्य्याद दन्तानपि स्थिरान् ।
लाक्षादिकमिद तैल दन्तरोगेषु पूजितम ॥

---

जयेद विस्रावणै स्विन्नमचल क्रिमिदन्तकम् ।
तथावपीडैर्वातघ्नै स्नेहगण्डूषधारणै ।
भद्रदार्व्वादि वर्षाभूलेपै स्निग्धैश्च भोजनै ।
हिङ्गु सोष्णञ्च मतिमान् क्रिमिदन्ते प्रयोजयेत् ॥
बृहती भूमिकदम्ब पञ्चाङ्गुल कण्टकारिका क्वाथ ।
गण्डूषस्तैलयुत क्रिमिदन्तकवेदनाशमन ॥
स्नेहाना कवला कोष्णा सर्पिषस्त्रैवृतस्य च ।
निर्य्यूहाश्चानिलघ्नाना दन्तहर्षे प्रमर्द्दन ॥
अस्मिन् दन्तमूलानि शर्करामुद्धरेद् भिषक् ।
लाक्षाचूर्णैर्मधुयुतैस्ततस्ता प्रतिसारयेत ॥
दन्तहर्षे क्रियाश्चात्र कुर्य्यान्निरवशेषत ।
कपालिका कृच्छ्रतमा तत्राप्येषा क्रिया हिता ॥

---

## जिह्वारोगाधिकारः।

जिह्वारोगाणा निदान नामानि सख्या च।

वातज पित्तजश्चापि कफजोऽलाससञ्ज्ञक।
उपजिह्विका च गदा जिह्वाया पञ्च कोर्त्तिता॥

तत्र वातजस्य जिह्वारोगस्य लक्षणम्।

जिह्वानिलेन स्फुटिता प्रसुप्ता
भवेच्च शाकच्छदनप्रकाशा॥

---

पित्तजस्य लक्षणम्।

पित्तात् सदाहैरुपचीयते च
दीर्घैं सरक्तैरपि कण्टकैश्च॥

---

कफजस्य लक्षणम्।

कफेन गुर्व्वी बहला सिता च
मासोच्छ्रयै शाल्मलिकण्टकाभे॥

अलासस्य लक्षणम्।

जिह्वातले य श्वयथु प्रगाढ
सोऽलालसञ्ज्ञ कफरक्तमूर्त्तिं।
जिह्वा स तु स्तम्भयति प्रवृद्धो
मूले च जिह्वा भृशमेति पाकम॥

प्रगाढ' प्रकर्षेण गाढो दारुण । कफरक्तमूर्त्तिं कफरक्ताभ्या मूर्त्तिर्यस्य स कफरक्तज इत्यर्थ । जिह्वास्तम्भेन वायुरप्यत्र वोद्धव्य, भ्रग्रपाकेन पित्तञ्च। अतस्त्रिदोषजोऽयमसाध्यत्वञ्चास्य ।

उपजिह्विकाया लक्षणम् ।

जिह्वाग्ररूप श्वयथुर्हि जिह्वा
मुन्नम्य जात कफरक्तयोनि ।
प्रसेककण्डूपरिदाहयुक्त
प्रकथ्यतेऽसावुपजिह्विकेति ॥
जिह्वाग्ररूपो जिह्वाग्राकृति ।

जिह्वारोगाणा चिकित्सा ।

जिह्वागतविकाराणा शस्त शोणितमोक्षणम् ।
गुडूचोपिप्पलीनिम्बकवल कटुभि सुख ॥
ओष्ठकोपे त्वनिलजे यदुक्त प्राक चिकित्सितम्
कण्टकेष्वनिलोत्थेषु तत्कार्य्य भिषजा खलु ॥
पित्तजेषु निघृष्टेषु नि सृते दुष्टशोणिते ।
प्रतिसारणगण्डूषनस्यानि मधुर हितम् ॥
कण्टकेषु कफोत्थेषु लिखितेष्वसृज क्षये ।
पिप्पल्यादिर्मधुयुत कार्य्यस्तु प्रतिसारणे ॥
उपजिह्वान्तु सलिख्य क्षारेण प्रतिसारयेत् ।
शिरोविरेकगण्डूषधूमैश्चैनामुपाचरेत् ॥
व्योषक्षाराभयावह्निचूर्णैमितव्यघर्षणम ।
उपजिह्वाप्रशान्त्यर्थमेभिस्तैलञ्च पाचयेत् ॥

## तालुरोगाधिकारः।



### तालुरोगाणां नामानि सङ्ख्या च।

गलशुण्डी तुण्डिकेर्य्यध्रुषः कच्छप एव च।
तालव्वर्बुदश्च कथितो मांससंघात एव च॥
तालुपुप्पुटनामा च तालुशोषस्तथैव च।
तालुपाकश्च कथितस्तालुरोगा अमी नव॥

### तत्र गलशुण्ड्या लक्षणम्।

श्लेष्मासृग्भ्यां तालुमूलात् प्रवृद्धो
दीर्घः शोथो ध्मातवस्तिप्रकाशः।
तृष्णाकासश्वासकृत्तं वदन्ति
वैद्या व्याधिं गलशुण्डीति नाम्ना॥

### तुण्डिकेर्य्या लक्षणम्।

शोथः स्थूलस्तोददाहप्रपाकी
प्रागुक्ताभ्यां तुण्डिकेरी मता तु।

तुण्डिकेरी वनकार्पासीफलं, तत्तुल्या।

### अध्रुषस्य लक्षणम्।

मन्दः शोथो लोहितः शोणितोत्थो
ज्ञेयोऽध्रुषः सज्वरस्तीव्ररुक् च॥

### कच्छपस्य लक्षणम्।

कूर्म्मोन्नतोऽवेदनोऽशीघ्रजन्मा
रोगो ज्ञेयः कच्छपः श्लेष्मणा तु॥

तात्वर्व्वुदस्य लक्षणम् ।

पद्माकारं तालुमध्ये तु शोथं
विद्याद्रक्तादर्व्वुदं प्रोक्तलिङ्गम् ॥

पद्माकारं पद्मकर्णिकाकेशरैरिव पार्श्वतो दीर्घैर्मांसाङ्कुरै-र्वेष्टितम् । प्रोक्तलिङ्गं पूर्व्वोक्तरक्तार्व्वुदलिङ्गम् ।

मांससंघातस्य लक्षणम् ।

दुष्टं मांसं श्लेष्मणा नीरुजञ्च
तात्वन्तःस्थं मांससंघातमाहुः ॥

तालुपुप्पुटस्य लक्षणम ।

नीरुक् स्थायी कोलमात्रः कफात्मा
मेदोयुक्तः पुप्पुटस्तालुदेशे ॥

तालुशोषस्य लक्षणम् ।

शोषोऽत्यर्थं दीर्य्यते चापि तालु
श्वासो वातात् तालुशोषोऽयमुक्तः ॥

तालुपाकस्य लक्षणम् ।

पित्तं कुर्य्यात् पाकमत्यर्थघोरं
तालुन्येनं तालुपाकं वदन्ति ॥

तालुरोगाणां चिकित्सा ।

कुष्ठोषण वचा सिन्धु कणा पाठाप्लवैरपि ।
मक्षौद्रैर्भिषजा कार्य्यं गलशुण्डीप्रघर्षणम् ॥
अङ्गुष्ठाङ्गुलिसन्दंशेनाक्रष्य गलशुण्डिकाम् ।
छेदयेन्मण्डलाग्रेण जिह्वोपरि तु संस्थिताम् ॥
अतिच्छेदात स्रवेद्रक्तं ततो छेतोम्रियेत च ।
हीनच्छेदाद्भवेच्छोथो लालास्रावो भ्रमस्तथा ॥

तस्माद् वैद्य प्रयत्नेन दृष्टकर्म्मा विशारद ।
गलशुण्डीन्तु सञ्छिद्य कुर्य्यात् प्राप्तामिमा क्रियाम् ॥
पिप्पल्यतिविषा कुष्ठ वचा मरिच नागरै ।
क्षौद्रयुक्तै सलवणैस्ततस्ता प्रतिसारयेत् ॥
वचामतिविषापाठारास्नाकटुकरोहिणी ।
निष्क्वाथ्य पिचुमर्द्दञ्च कवल तत्र कारयेत् ॥
तुण्डिकेर्य्यध्रुवे कूर्म्मे सघाते तालुपुप्पटे ।
एष एव विधि कार्य्यो विशेषाच्छस्त्रकर्म्म च ॥
तालुपाके तु कर्त्तव्य विधान पित्तनाशनम ।
स्नेहस्वेदौ तालुशोषे विधिश्चानिलनाशन ॥

---

## गलरोगाधिकार ।

—— o ——

### गलरोगाणा नामानि सख्या च ।

रोहिणी पञ्चधा प्रोक्ता कण्ठशालूक एव च ।
अधिजिह्वश्च वलयोऽलासनामैकवृन्दक ॥
ततो वृन्द शतघ्नी च गिलायु कण्ठविद्रधि ।
गलौघश्च स्वरघ्नश्च मासतानस्तथैव च ॥

पञ्चाना रोहिणीना सामान्या सम्प्राप्ति ।

गलेऽनिल पित्तकफौ च मूर्च्छितौ
प्रदूष्य मासञ्च तथैव शोणितम् ।

गलोपसरोधकरैस्तथाङ्कुरै-
निर्हन्त्यसून् व्याधिरियं हि रोहिणी ॥

अनिलो मूर्च्छित प्रवृद्ध। पित्तकफौ च मूर्च्छितौ पित्त वा मूर्च्छित कफो वा मूर्च्छित। सर्व्वा एव रोहिण्य सन्निपातजा, उत्कर्षाद् वातजादिव्यपदेश।

तत्र वातजाया रोहिण्या लक्षणम्।

जिह्वा समन्ताद् भृशवेदनास्तु
मांसाङ्कुरा कण्ठनिरोधना स्यु।
सा रोहिणी वातकृता प्रदिष्टा
वातात्मकोपद्रवगाढयुक्ता ॥

जिह्वासमन्तात जिह्वाया सर्व्वत। वातात्मकोपद्रवगाढयुक्ता स्तम्भादिभिरतिशयव्यथाभियुक्ता।

पित्तजाया लक्षणम्।

क्षिप्रोद्गमा क्षिप्रविदाहपाका
तीव्रज्वरा पित्तनिमित्तजाता ॥

कफजाया लक्षणम्।

स्रोतोनिरोधिन्यपि मन्दपाका
गुर्व्वी स्थिरा सा कफसम्भवा तु ॥

त्रिदोषजाया लक्षणम।

गम्भीरपाकिन्यनिवार्य्यवीर्य्या
त्रिदोषलिङ्गा त्रिभवा भवेत् सा ॥

रक्तजाया लक्षणम।

स्फोटैश्चिता पित्तसमानलिङ्गा
साध्या प्रदिष्टा रुधिरात्मिका तु ॥

रक्तजितरासा सङ्घारकल्पावधि ।

सद्यस्त्रिदोषजा हन्ति त्र्यहात् कफसमुद्भवा ।
पञ्चाहात् पित्तसम्भूता सप्ताहात् पवनोत्थिता ॥
यद्यप्येतास्ततस्रो हि प्रोक्ता सामान्यतोऽशुभा ।
तथा सद्येव सहन्तीं भव तिस्र क्रिया विना ॥

कण्ठशालूकस्य लक्षणम् ।

कोलास्थिमात्र कफसम्भवो यो
ग्रन्थिर्गले कण्टकशूकभूत ।
खर स्थिर शस्त्रनिपातसाध्य-
स्त कण्ठशालूकमिति ब्रुवन्ति ॥

कण्टकशूकभूत कण्टकवच्छूकवच्च वेदनाजनक ।

अधिजिह्वस्य लक्षणम् ।

जिह्वाग्ररूप श्वयथु कफात्तु
जिह्वोपरिष्टादसृजैव मिश्रात् ।
ज्ञेयोऽधिजिह्व खलु रोग एष
विवर्ज्जयेदागतपाकमेनम् ॥

जिह्वोपरिष्टादित्यनेन जिह्वातलजामुपजिह्वा व्यावर्त्तयति ।

वलयस्य लक्षणम् ।

वलास एवायतमुन्नतश्च
शोथ करोत्यन्नगति निवार्य्य
त सर्व्वथैवाप्रतिवार्य्यवीर्य्य
विवर्ज्जनीय वलय वदन्ति ॥

अलासस्य लक्षणम्।

गले तु शोथं कुरुतः प्रवृद्धौ
श्लेष्मानिलौ श्वासरुजोपपन्नम्।
मर्म्मच्छिदं दुस्तरमेतदाहु
रलाससंज्ञं भिषजो विकारम्॥

मर्म्मच्छिदं हृदयमर्म्मणि च्छेदेनेव वेदनाजनकम्। अस्य वलाश इत्यपि संज्ञा।

एकवृन्दस्य लक्षणम्।

वृत्तोन्नतोऽन्तः श्वयथुः सदाहः
सकण्डूकोऽपाक्यमृदुर्गुरुश्च।
नाम्नैकवृन्दः परिकीर्त्यतेऽसौ
व्याधिर्वलासक्षतजप्रसूतः॥

अन्तः गलमध्ये। अपाकी ईषत्पाकी। अमृदुः ईषन्मृदुः।

वृन्दस्य लक्षणम्।

समुन्नतं वृत्तममन्ददाहं
तीव्रज्वरं वृन्दमुदाहरन्ति।
तच्चापि पित्तक्षतजप्रकोपाद्
विद्यात् सतोदं पवनात्मकन्तु॥

शतघ्न्या लक्षणम्।

वर्त्तिर्घना कण्ठनिरोधिनी तु
चित्रातिमात्रं पिशितप्ररोहैः।
अनेकरुक् प्राणहरी त्रिदोषा
ज्ञेया शतघ्नीसदृशी शतघ्नी॥

घना कठिना। अनेकरुक् वातपित्तकफजतोददाह-कण्ड्वादियुक्ता। शतघ्नीसदृशी लौहकण्टकसङ्कुला शतघ्नी महती शिला तत्तुल्या यत प्राणविनाशिनी।

गिलायोर्लक्षणम्।

ग्रन्थिर्गले त्वामलकास्थिमात्र
स्थिरोऽल्परुक् स्यात् कफरक्तमूर्त्ति ।
सलच्यते सक्तमिवाशनञ्च
स असस्त्रसाध्यस्तु गिलायुसञ्ज्ञ ॥

गलविद्रधेर्लक्षणम।

सर्व्वं गल व्याप्य समुत्थितो य
शोथो रुज सन्ति च यत्र सर्व्वा ।
स सर्व्वदोषैर्गलविद्रधिस्तु
तस्यैव तुल्य खलु सर्व्वजस्य ॥

गलौघस्य लक्षणम्।

शोथो महानन्नजलावरोधी
तीव्रज्वरो वायुगतेर्निहन्ता।
कफेन जातो रुधिरान्वितेन
गले गलौघ परिकीर्त्त्यतेऽसौ ॥

स्वरघ्नस्य लक्षणम्।

यस्ताम्यमान श्वसिति प्रसक्त
भिन्नस्वर शुष्कविमुक्तकण्ठ ।
कफोपदिग्धेष्वनिलायनेषु
ज्ञेय स रोग श्वसनात् स्वरघ्न ॥

ताम्यमानस्तम पश्यन्। शुष्कविमुक्तकण्ठ शुष्को विमुक्तोऽस्वाधीन कण्ठो यस्य स। अस्वाधीनता किमपि गिलितुमशक्यत्वात्। अनिलायनेषु वायुवर्त्मसु। श्वसनात् वानात्।

मासतानस्य लक्षणम्।

प्रतानवान् य श्वयथु सुकष्टो
गलोपरोध कुरुते क्रमेण।
स मासतानेति विभक्ति सञ्ज्ञा
प्राणप्रणुत् सर्व्वकृतो विकार॥

प्रतानवान विस्तारवान्। सुकष्ट अतिशयित कष्ट यत्र स।

विदार्य्या लक्षणम।

सदाहतोद श्वयथु सुताम्र
अन्तर्गले पूतिविशीर्ण मासम्।
पित्तेन विद्याद्व वमने विदारी
पार्श्वे विशेषात् स तु येन शेते॥

स पुरुषो येन पार्श्वेन विशेषाद वाहुल्येन शेते तस्मिन् पार्श्वे सा विदारी भवति।

गलरोगाणा चिकित्सा।

रोहिणीनान्तु साध्याना हित शोणितमोक्षणम।
वमन धूमपानञ्च गण्डूषो नस्यकर्म्म च॥
वातजान्तु क्षते रक्ते लवणै प्रतिसारयेत्।
सुखोष्णान् स्नेहगण्डूषान् धारयेच्चाप्यभीक्ष्णश॥
विस्राव्य पित्तसम्भूता सिताक्षौद्र प्रियङ्गुभि।

घर्षयेत् कवलो द्राक्षापरूषै क्वथितैर्हित ॥
अगारधूम कटुकै कफजा प्रतिसारयेत् ॥
श्वेता विडङ्गदन्तीषु सिद्ध तैल ससैन्धवम् ।
कवले च तथा नस्ये योजयेत् तस्य शान्तये ॥
पित्तवत् साधयेद् वैद्यो रोहिणी रक्तसम्भवाम् ॥
विस्राव्य कण्ठशालूक साधयेत् तुण्डिकेरीवत् ।
एककाल यवान्नञ्च भुञ्जीत स्निग्धमल्पश ॥
उपजिह्विकवच्चापि साधयेदधिजिह्विकम् ॥
एकवृन्दन्तु विस्राव्य विधि शोधनमाचरेत् ।
एकवृन्दमिव प्रायो वृन्दञ्च समुपाचरेत् ॥
शिलायुश्चापि यो व्याधिस्तञ्च शस्त्रेण साधयेत् ।
अमर्म्मस्थ सुसम्पक्क छेदयेद् गलविद्रधिम् ॥

सर्व्वकण्ठरोगाणा सामान्यचिकित्सा ।

कण्ठरोगेष्वसृङ्मोक्षैस्तीक्ष्णैर्नस्यादि कर्म्मभि ।
चिकित्सकश्चिकित्सान्तु कुशलोऽत्र समाचरेत् ॥
क्वाथ दद्याच्च दार्व्वीत्वङ् निम्बद्राक्षाकलिङ्गजम् ।
हरीतकी कषाय वा माक्षिकेण समन्वितम् ॥
कटुकातिविषा दारु पाठा मुस्त कलिङ्गका ।
गोमूत्रक्वथिता पेया कण्ठरोगविनाशना ॥

जवाग्रज तेजवतीञ्च पाठा
रसाञ्जन दारुनिशा सकृष्णाम् ।
क्षौद्रेण कुर्य्याद् गुटिका मुखेन
ता धारयेत् सर्व्वगलामयेषु ॥

समस्तमुखरोगाणां निदानं संख्या च ।

पृथग्दोषैस्त्रयो रोगा समस्तमुखजा स्मृता ॥

स्फोटैः सतोदैर्वदनं समन्तात्
यत्राचितं सर्व्वसरः स वातात् ॥

पैत्तिकस्य लक्षणम् ।

रक्तैः सदाहैस्तनुभिः सुपीतैः
यैत्राचितं चापि स पित्तकोपात् ॥

अवेदनैः कण्डूयुतैः सवर्णैः
यैत्राचितं चाभिसवैः कफेन ॥

समस्तमुखरोगाणां चिकित्सा ।

वातात् सर्व्वसरं चूर्णैर्लवणैः प्रतिसारयेत् ।
तैलं वातहरैः सिद्धं हितं कवलनस्ययोः ॥
पित्तात्मके सर्व्वसरे शुद्धकायस्य देहिनः ।
सर्व्वं पित्तहरः कार्य्यो विधिर्मधुरशीतलः ॥
प्रतिसारणं गण्डूषमधुसंशोधनानि च ।
कफात्मके सर्व्वसरे क्रमं कुर्य्यात् कफापहम् ॥
जातीपत्रामृताद्राक्षावासादार्व्वीफलत्रिकैः ।
क्वाथः क्षौद्रयुतः शीतो गण्डूषो मुखपाकनुत् ॥
कृष्णजीरककुष्ठेन्द्रयवचर्व्वणतस्त्र्यहात् ।
मुखपाकव्रणक्लेददौर्गन्ध्यमुपशाम्यति ॥
कार्य्यञ्च बहुधा नित्यं जातीपत्रस्य चर्व्वणम् ।
पटोलनिम्बजम्ब्वाम्रमालतीनवपल्लवैः ।
पञ्चपल्लवजः श्रेष्ठः कषायो मुखधावने ॥
हरिद्रा निम्बपत्राणि मधुकं नीलमुत्पलम् ।

तैलमेभिर्विपक्वञ्च मुखपाकहरं परम् ॥
सहाचराभिधं तैलमरिमेदादिकं तथा ।
लाक्षाद्यं वकुलाद्यञ्च वटिका खदिरादिका ॥
दन्तसंस्कारकं चूर्णं मुखरोगहरो रसः ।
भेषजान्येवमादीनि निघ्नन्ति मुखजान् गदान् ॥

मुखरोगे पथ्यापथ्यानि ।

अन्नपानादिकं यच्च सुजरं वह्निदीपनम् ।
व्रणदोषहरं तत्तन्मुखरोगे हितं मतम् ॥
दन्तकाष्ठं स्नानमम्लं मत्स्यमानूपमामिषम् ।
दधि क्षीरं गुडं माषं रूक्षान्नं कठिनाशनम् ॥
अधोमुखेन शयनं गुर्व्वभिष्यन्दकारि च ।
मुखरोगेषु सर्व्वेषु दिवानिद्राञ्च वर्ज्जयेत् ॥

समस्तमुखरोगाणामेकत्र गणना ।

स्युरष्टावोष्ठयोर्दन्तमूले तु दशषट् तथा ।
दन्तेष्वष्टौ रसज्ञाया पञ्च स्युर्नव तालुनि ॥
कण्ठे त्वष्टादश प्रोक्तास्त्रयः सर्व्वसरा स्मृताः ।
एवं मुखामयाः सर्व्वे सप्तषष्टिर्मता बुधैः ॥

असाध्यमुखरोगः ।

ओष्ठप्रकोपे वर्ज्याः स्युर्मांसरक्तत्रिदोषजाः ।
दन्तवेष्टेषु वर्ज्यौ तु त्रिलिङ्गगतिशौषिरौ ॥
दन्तेषु च न सिध्यन्ति श्यावदालनभञ्जनाः
जिह्वारोगेष्वलासस्तु तालुजेष्वर्ब्बुदं तथा ॥
स्वरघ्नो वलयो वृन्दो वलासश्च विदारिका ।
गलौघो मांसतानश्च शतघ्नी रोहिणी गले ॥

असाध्या कीर्त्तिता ह्येते रोगा दश नवोत्तरा।
तेषु चापि क्रिया वैद्य ममाख्याय समाचरेत्॥

मुखस्य स्वरूपम्।

ओष्ठौ च दन्तमूलानि दन्ता जिह्वा च तालु च।
गलो गलादिसकल सप्ताङ्ग मुखमुच्यते॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
मुखरोगाधिकार एकसप्ततितमोऽध्याय।

---

## द्विसप्ततितमोऽध्याय·।

— o —

### नासारोगाधिकार।

नासारोगाणा नामानि सख्या च।

आदौ च पीनस प्रोक्त पूतिनस्यस्तत परम्।
नासापाकोऽत्र गणित पूयशोणितमेव च॥
क्षवथुर्भ्रंशथुर्दीप्त प्रतीनाह परिस्रव।
नासाशोष प्रतीश्याया पञ्च सप्ताव्र्वुदानि च॥
चत्वार्य्यर्शांसि चत्वार शोथाश्चत्वारि तानि च।
रक्तपित्तानि नासाया चतुस्त्रिंशद्द गदा स्मृता॥

तेषु पीनसस्य लक्षणम्।

आनह्यते शुष्यति यस्य नासा
प्रक्लेदमायाति च धूप्यते च।

न वेत्ति यो गन्धरसांश्च जन्तु
र्जुष्ट व्यवस्येत् तमपीनसेन ॥

आनह्यते श्वासश्शोषित कफेनावध्यते अवरुध्यत इति यावत् । प्रक्लेदमार्द्रता गच्छति । धूप्यते सन्ताप्यते । गन्धरसान गन्धान् सुरभीन् असुरभींश्च न वेत्ति नासाया अनङ्गल तत्र हेतु । तथा रसान् मधुरादींश्च न वेत्ति, नासारोगारम्भक-दोषेण रसनाया अपि दुष्टे । व्यवस्येत् जानीयात् । आपीनस-पीनसौ द्वावपि शब्दौ स्त ।

अनुक्तमग्रहार्थमाह ।

तञ्चानिलश्लेष्मभव विकार
ब्रूयात् प्रतीश्यायसमानलिङ्गम ॥

त विकार पीनसप्रतीश्यायसमानलिङ्ग वातश्लैष्मिक प्रतीश्यायतुल्यलक्षण ब्रूयात् ।

पूतिनस्यस्य लक्षणम् ।

दोषैर्विदग्धैर्गलतालुमूलात्
सन्दूषितो यस्य समीरणस्तु ।
निरेति पूतिर्मुखनासिकाभ्या
त पूतिनस्य प्रवदन्ति रोगान् ॥

दोषै पित्तकफरक्तै । अत्र रक्तस्यापि दोषत्व दोषसाह-चर्य्यात् । विदग्धैर्दुष्टै । सन्दूषित पूतिभाव नीत । पूतिनस्य नासाया भवो नस्यो वायु , पूतिर्नस्यो यत्र स पूतिनस्यस्तम् ।

नासापाकस्य लक्षणम् ।

घ्राणाश्रित पित्तमरूषि कुर्य्याद्
यस्मिन् विकारे बलवांश्च पाक ।

त नासिकापाक इति व्यवस्येद्
विक्लेदकोथावथवापि यत्र ॥
विक्लेद आर्द्रता। कोथ पूतिभाव ।

पूयरक्तस्य लक्षणम्।

दोषैर्विदग्धैरथवापि जन्तो
र्ललाटदेशेऽभिहतस्य तैस्तै ।
नासा स्रवेत् पूयमसृग्विमिश्र
त पूयरक्त प्रवदन्ति रोगम् ॥

क्षवथोर्लक्षणम ।

घ्राणाश्रिते मर्म्मणि सम्प्रदुष्टो
यस्यानिलो नासिकया निरेति।
कफानुयातो बहुशोऽतिशब्द
स्त रोगमाहु क्षवथ गदज्ञा ॥
घ्राणाश्रिते मर्म्मणि शृङ्गाटके।

आगन्तुजक्षवथु ।

तीक्ष्णोपयोगादभिजिघ्रता वा
भा वान् कटूनर्कनिरीक्षणाद् वा।
सूत्रादिभिर्वा तरुणास्थिमर्म्म
न्युद्घर्षितेऽन्य क्षवथुर्निरेति ॥

तीक्ष्णपयोगात राजिकादिभक्षणात्। अर्कनिरीक्षणात् सूर्य्यदर्शनात्। तरुणास्थिमर्म्मणि तरुणास्थि नामावशास्थि, तच्च मर्म्म च तरुणास्थिमर्म्म, तस्मिन्। द्वन्द्वेनैकत्वम्। अन्य आगन्तुज ।

भ्रंशथोर्लक्षणम् ।

प्रभ्रंशते नासिकया तु यस्य
सान्द्रो विदग्धो लवण कफस्तु ।
प्राक्सञ्चितो मूर्द्धनि पित्ततप्त-
स्त भ्रंशथु व्याधिमुदाहरन्ति ॥

दीप्तस्य लक्षणम् ।

घ्राणे भृश दाहसमन्विते तु
विनि सरेद् धूम इवेह वायु ।
नासा प्रदीप्तेव च यस्य जन्तो
र्व्याधिन्तु त दीप्तमुदीरयन्ति ॥

प्रदीप्तेव प्रज्वलितेव ।

प्रतीनाहस्य लक्षणम ।

उच्छ्वासमार्गन्तु कफ सवातो
रुन्ध्यात् प्रतीनाहमुदाहरेत् तम् ॥

स्रावस्य लक्षणम् ।

घ्राणाद घन पीतसितस्तनुवा
दोष स्रवेत्स्रावमुदाहरेत् तम ॥

दोषोऽत्र कफ ।

नासाशोषस्य लक्षणम ।

घ्राणाश्रिते श्लेष्मणि मारुतेन
पित्तेन गाढ परिशोषितेन ।
कृच्छ्राच्छ्वसित्यर्द्धमधश्च जन्तु
र्यस्मिन् स नासापरिशोष उक्त ॥

प्रतीश्यायस्य सद्योजनकनिदानपूर्व्विका सम्प्राप्ति ।

सन्धारणाजीर्ण रजोऽतिभाष्य-
क्रोधर्त्तुवैषम्यशिरोऽभितापै ।
सजागरातिस्वपनाम्बुशीता
वश्यायकैर्मैथुनवाष्पसेकै ॥
सस्त्यानदोषे शिरसि प्रवृद्धो
वायु प्रतिश्यायमुदीरयेत् तु ॥

वाष्पसेको रोदनम।

तस्य चयादिक्रमजनकनिदानपूर्व्विका सम्प्राप्ति ।

चय गता मूर्द्धान मारुतादय
पृथक् समस्ताश्च तथैव शोणितम् ।
प्रकोप्यमाणा विविधै प्रकोपणै
स्रात प्रतीश्यायकरा भवन्ति हि ॥

प्रतीश्यायस्य पूर्व्वरूपम।

चवप्रवृत्ति शिरसोऽभिपूर्णता
स्तम्भोऽङ्गमर्द्द परिहृष्टरोमता।
उपद्रवाश्चाप्यपरे पृथग्विधा-
नृणा प्रतिश्याय पुर सरा स्मृता ॥

शिरसोऽभिपूर्णता शिरसो भारेणेव व्याप्ति । अपरे पृथग्विधा घ्राणधूमायन तालुविदारण नासामुखस्रावादयो विदेहोक्ता बोद्धव्या ।

वातिकस्य प्रतीश्यायस्य लक्षणम।

आनद्धा पिहिता नासा तनुस्रावप्रसेकिनी।
गलताल्वोष्ठशोषश्च निस्तोद शङ्खयोस्तथा ॥

स्रवप्रवृत्तिरत्यर्थं वक्त्रवैरस्यमेव च ।
भवेत् स्वरोपघातश्च प्रतिश्यायेऽनिलात्मके ॥

आनद्धा स्तब्धा । अपिहिता न पिहिता अतएव तनु स्रावप्रसेकिनी । पिहितेति पाठे सापिधानेव ।

पैत्तिकस्य तस्य लक्षणम ।

उष्ण सपीतक स्रावो घ्राणात् स्रवति पैत्तिके ।
कृशोऽतिपाण्डु सन्तप्तो भवेदुष्णाभपीडित ॥
नासया तु सधूमाग्नि वमतीव स मानव ॥

सपीतक ईषत्पीतवर्ण ।

श्लैष्मिकस्य लक्षणम् ।

घ्राणात् कफकृते श्वेत काफ शीत स्रवेद् बहु ।
शुक्लावभास शूनाक्षो भवेद् गुरुशिरा नर ॥
गलताल्वोष्ठशिरसा कण्डूभिरतिपीडित ॥

सान्निपातिकस्य लक्षणम् ।

भूत्वा भूत्वा प्रतिश्यायो योऽकस्मात् सन्निवर्त्तते ।
सपक्वो वाप्यपक्वो वा स सर्व्वप्रभव स्मृत ॥

अत्र यद्यपि दोषत्रयलिङ्गानि नोक्तानि तथापि तानि ज्ञेयानि त्रिदोषजत्वात् ।

दुष्टप्रतिश्यायस्य लक्षणम् ।

प्रक्लिद्यति मुहुर्नासा पुनश्च परिशुष्यति ।
पुनरानह्यते वापि पुनर्विव्रियते तथा ॥
नि श्वासो वाति दुर्गन्धो नरो गन्धान् न वेत्ति च ।
एव दुष्ट प्रतिश्याय जानीयात् कृच्छ्रसाधनम् ॥

आनह्यते विवद्धा भवति। विव्रियते अविवद्धा स्यात्। क्लेदशोषविवन्धा नैककाल भवन्ति, किन्तु यदा यदा यद् यद् दोषाधिक्य भवति तदा तदा तत्तद्दोषकृत स स बोद्धव्य इति न विरोध। कृच्छ्रसाधन असाध्य कष्टसाध्यञ्च। अयञ्च पञ्चानामेव अवस्थान्तरतया अनन्यत्वान्न षष्ठ।

नृणा दुष्ट प्रतिश्याय सर्व्वजश्च न सिध्यति॥

रक्तजस्य लक्षणम्।

रक्तजे तु प्रतिश्याये रक्तस्राव प्रवर्त्तते।
पित्तप्रतिश्याय कृतैर्लिङ्गैश्चापि समन्वित॥
ताम्राक्षश्च भवेज्जन्तुरुरोघात प्रपीडित।
दुर्गन्धोच्छ्वासवक्त्रश्च गन्धानपि न वेत्ति म॥
सर्व्व एव प्रतिश्याया नरस्याप्रतिकारिण।
दुष्टता यान्ति कालेन तदासाध्या भवन्ति हि॥
मूर्च्छन्ति क्रिमयश्चात्र श्वेता स्निग्धास्तथाणव।
क्रिमितोय शिरोरोगस्तुल्य तेनास्य लक्षणम॥
अत्र एषु प्रतिश्यायेषु कफजा एव क्रिमयो भवन्तीति।
वाधिर्य्यमान्ध्यमघ्रत्व घोरांश्च नयनामयान्।
शोथाग्निसाद कासांश्च वृद्धा कुर्व्वन्ति पीनसम्॥

चतुस्त्रिंशत्सङ्ख्यापूरणमाह।

अर्व्वुद सप्तधा शोथाश्चत्वारोऽर्शश्चतुर्व्विधम्।
चतुर्विध रक्तपित्तमुक्त घ्राणेऽपि तद् विदु॥

अर्व्वुदानि सप्त वातपित्तकफसन्निपातरक्तमास मेदोजानि। शोथाश्चत्वारो वातपित्तश्लेष्मसन्निपाता। अर्शांसि

चत्वारि वातपित्तश्लेष्मसन्निपातजानि। रक्तपित्तानि चत्वारि वातपित्तश्लेष्मसन्निपातजानि। एतानि यथोक्तलिङ्गानि घ्राणेऽपि सम्भवन्ति।

चिकित्साभेदार्थं पीनसस्यामपक्वलक्षण माह।

शिरोगुरुत्वमरुचि नासास्रावस्तनु स्वर।
क्षाम ष्ठीवति चाभोक्ष्णमामपीनसलक्षणम्॥
आमलिङ्गान्वित श्लेष्मा घन खेषु निमज्जति।
स्वरवर्णविशुद्धिश्च पक्वपीनस लक्षणम्॥

आमलिङ्गान्वित श्लेष्मा आमलिङ्गै शिरोगुरुत्वादिभिर्युक्त पश्चात् घन निविड अथच खेषु नासारन्ध्रेषु निमज्जति सक्तो भवति।

नासारोगाणा चिकित्सा।

सर्व्वेषु पीनसेष्वादौ निर्वातागारगो भवेत्।
स्नेहस्वेद प्रधमन धूमगण्डूषधारणम्॥
वासो गुरूष्ण सुघन शिरस परिवेष्टनम्।
लघूष्ण लवण स्निग्धमुष्ण भोजनमद्रवम्॥
कट्फल पौष्कर शृङ्गी व्योष यासश्च कारवी।
एषा चूर्णं कषाय वा दद्यादार्द्रकजे रसै॥
पीनसे स्वरभेदे च नासास्रावे हलीमके।
सन्निपाते कफे वाते कासे श्वासे च शस्यते॥
व्योषचित्रक तालीश तिन्तिडिकाम्लवेतसम।
सचव्याजाजितुल्याशमेलात्वक् पत्र पादिकम॥
व्योषादिकमिद चूर्णं पुराणगुडमिश्रितम।
पीनसश्वास कासघ्न रुचिस्वरकर परम्॥

व्याघ्रीतैलम।

व्याघ्री दन्ती वचा शिग्रु सुरसा व्योषसिन्धुजैः।
सिद्धं तैलं नसि क्षिप्तं पूतिनस्य गदापहम्॥

---

कलिङ्ग हिङ्गुमरिच लाक्षास्वरसकट्फले।
व्योषोग्राशिग्रुजन्तुघ्नैरवपीडं प्रशस्यते॥
तैरेव मूत्रसंयुक्तैः कटुतैलं विपाचयेत।
अपीनसे पूतिनस्ये शमनं परिकीर्त्तितम्॥
घृतगुग्गुलु मिश्रस्य सिक्थकस्य प्रयत्नत।
धूमं क्षवथु रोगघ्नं भ्रशथुघ्नञ्च निर्द्दिशेत्॥
शुण्ठीकुष्ठकणाविल्वद्राक्षा कल्ककषायवत्।
तैलं पक्वमथाज्यं वा नस्यात् क्षवथुनाशनम्॥

नस्यं हितं निम्बरसाञ्जनाभ्यां
दीप्ते शिरःखेदनमल्पशस्तु
नस्यं कृते क्षीरजलावसेकान्
शंसन्ति भुञ्जीत च मुद्गयूषे॥
नासास्रावे घ्राणयोर्वंद्यमुख्यै
र्नीक्ष्णा देया येऽवपीडाश्च पथ्या।
तीक्ष्णा धूमा देवदार्व्वग्निकाभ्या
मांसं त्वाजं पथ्यमत्रोपदिष्टम्॥
नासापाके पित्तहृद् विधानं
कार्य्यं सर्व्वं वाह्यमाभ्यन्तरञ्च।
हृत्वा रक्तं क्षीरिवृक्षत्वचश्च
योज्या सेके सर्पिमश्च प्रदेहा॥

प्रतिश्यायेषु सर्व्वेषु गृह वातविवर्ज्जितम् ।
वस्त्रेण गुरुणोष्णेन शिरसो वेष्टन हितम् ॥
विडङ्ग सैन्धव हिङ्गु गुग्गुलुश्च मन शिला ।
वचैतच्चूर्णमाघ्रात प्रतिश्याय विनाशयेत् ॥
घृततैलसमायुक्त शक्तुधूम पिबेन्नर ।
स धूम स्यात् प्रतिश्यायकासहिक्काहर पर ॥
चातुर्ज्जातकचूर्ण वा घ्रेय वा कृष्णजीरकम् ॥
पुटपक्व जयापत्र तिलसैन्धवसयुतम ।
प्रतिश्यायेषु सर्व्वेषु शीतल परमौषधम ॥

जयापत्र विजया भङ्गेति यावत् ।

पिप्पल्य शिग्रुवीजानि विडङ्गमरिचानि च ।
अवपीड प्रशस्तोऽय प्रतिश्यायनिवारणे ॥
शिरसोऽभ्यञ्जनै स्वेदैर्नस्यैर्मन्दोष्णभोजनै ।
वमनैर्धूमपानैश्च तान् यथास्वमुपाचरेत् ॥
क्रिमिघ्ना ये क्रमा प्रोक्तास्तान् वै क्रिमिषु योजयेत् ।
लावणानि क्रिमिघ्नानि भेषजानि च बुद्धिमान् ॥
रक्तपित्तानि शोथाश्च तथार्शांस्यर्व्वुदानि च ।
नासिकाया स्युरेतेषा स्वस्व कुर्य्याच्चिकित्सितम् ॥
गृहधूमकणादारुक्षारनक्ताह्वसैन्धवै ।
सिद्ध शिखरिवीजैश्च तैल नासार्शसे हितम ॥
नासारोगेषु मतिमान् भिषग् दोषबलाबलम ।

बुद्धा चित्राभयादीनि भेषजानि प्रयोजयेत् ॥

चित्राभया चित्रकहरीतकी ।

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने

नासारोगाधिकारो द्विसप्ततितमोऽध्याय ।

---

## त्रिसप्ततितमोऽध्यायः ।

—— ० ——

### नेत्ररोगाधिकार ।

नेत्रस्य परिमाणम ।

विद्याद् द्व्यङ्गुल बाहुल्य स्वाङ्गुष्ठोदरसम्मितम् ।

द्व्यङ्गुल सर्व्वत सार्द्ध भिषङ् नयनमण्डलम् ॥

द्व्यङ्गुलप्रमाण स्थौल्य यस्य तत् । अङ्गुलीना स्थौल्यस्य वैषम्यात् । पुनराह स्वाङ्गुष्ठोदरसम्मितम । द्व्यङ्गुल सर्व्वत सार्द्धमिति आयामविस्ताराभ्या बोद्धव्यमिति ।

नेत्रायामत्रिभागन्तु कृष्णमण्डलमुच्यते ।

कृष्णात् सप्तममिच्छन्ति दृष्टि दृष्टिविशारदा ॥

मण्डलानि च सन्धिश्च पटलानि च लोचने ।

यथाक्रम विजानीयात पञ्च षट् च षडेव च ॥

पक्ष्मवर्त्मश्वेतकृष्णदृष्टीना मण्डलानि तु ।

अनुपूर्व्वन्तु ते मध्याश्चत्वारोऽन्त्या यथोत्तरम ॥

पक्ष्मवर्त्मगत सन्धिर्वर्त्मशुक्लगतोऽपर ।

शुक्लकृष्णागतस्त्वन्य कृष्णाद्दृष्टिगतोऽपर ॥
तत कनीनकगत षष्ठश्चापाङ्ग स्मृत ॥
द्वे वर्त्मपटले विद्याच्चत्वार्य्यन्यानि चाक्षिणि ।
जायते तिमिर येषु व्याधि परमदारुण ॥
तेजोजलाश्रित वाह्य तेष्वन्यत पिशिताश्रयम् ।
मेदस्तृतीय पटलमाश्रित त्वस्थि चापरम ॥
पञ्चमाशसम दृष्टस्तेषा बाहुल्यमिष्यते ॥

तत्र तेजो रक्त जल रस तेन रसरक्ताधारमित्यर्थ । स्वाङ्गुष्ठोदरस्थूलस्य नेत्रस्य पञ्चमाशसम तेषा चतुर्णा पटलाना मिलिताना बाहुल्य स्थौल्यमिष्यते ।

दृष्टेर्लक्षणम ।

मसूरदलमात्रान्तु पञ्चभूतप्रसादजाम ।
खद्योतविस्फुलिङ्गाभा सिद्धा तेजोभिरव्ययै ।
आवृता पटलेनाक्ष्णो र्वाह्येन विवराकृतिम् ।
शीतासात्म्या नृणा दृष्टिमाहुर्नयनचिन्तका ।

मसूरदलमात्रा नेत्रगतकृष्णमण्डलमध्यस्थमसूरद्विदल-प्रमाणाम् । पञ्चभूतप्रसादजा प्रसन्नपञ्चभूतात्मिकाम । खद्योत-विस्फुलिङ्गाभा निमिषे कदाचित् खद्योताभा खद्योतवत्, निमिषाभावे विद्योतमानत्वात् विस्फुलिङ्गवत् । अव्ययैश्चिरस्थायि भिस्तेजोभि सिद्धामुत्पन्नाम । विवराकृति सच्छिद्राम् । अक्ष्णो-र्वाह्येन पटलेन रसरक्ताधारभूतेन आवृताम् । इति नेत्रस्वरूपम् ।

नेत्ररोगाणा सख्या ।

द्वादश व्याधयो दृष्टौ तत्रैवान्यौ गदावुभौ ।
कृष्णभागे तु चत्वारो दशैक शुक्लभागज ॥

वर्त्मन्येकौ विंशतिश्च पक्ष्मजौ द्वौ प्रकीर्त्तितौ ।
नव सन्धिषु सर्व्वस्मिन् नेत्रे सप्तदशोदिता ॥
एव नेत्रे समस्ता स्युरष्टसप्ततिरामया ॥

तत्र दृष्टौ ग्रन्थौ चरकोक्तौ सुश्रुतोक्तषट्सप्तति सङ्ख्येभ्योऽधिकौ ।

सुश्रुतोक्ताना नेत्ररोगाणा सङ्ख्या ।

वाताद् दश तथा पित्तात् कफाच्चैव त्रयोदश ।
रक्तात् षोडश विज्ञेया सर्व्वजा पञ्चविंशति ॥
वाह्यौ पुनर्द्वौ नयने रोगा सट्सप्तति स्मृता ॥

नेत्ररोगाणा निदानम ।

उष्णाभितप्तस्य जले प्रवेशाद्
दूरेक्षणात् स्वप्नविपर्य्ययाच्च ।
स्वेदाद्रजोधूमनिषेवणाच्च-
च्छर्द्देर्विघाताद् वमनातियोगात् ॥
द्रवात् तथान्नान्निशि सेविताच्च
विण्मूत्रवातागमनिग्रहाच्च
प्रसक्तसरोदनकोपशोका
च्छिरोऽभिघातादतिमद्यपानात् ॥
तथा ऋतूनाञ्च विपर्य्ययेण
क्लेशाभिघातादतिमैथुनाच्च ।
वाष्पग्रहात सूक्ष्मनिरीक्षणाच्च
तथोपदशादमत प्रमेहात् ॥
सूतस्य योगादविशोधितस्य
शुक्तारनालाम्लकुलत्थमाषात् ।

दुष्टाम्बुपानादतिशीघ्रयाना
नेत्रे विकारान् जनयन्ति दोषा ॥

स्वेदात् स्विद्यते अनेनेति स्वेद अग्न्यादि तस्मात्। रजो-धूमनिषेवणात् नेत्रेण। शिरोऽभिघातात् शिरसि प्रहारात् अर्द्धावभेदकादिशिरोरोगाद्वा। ऋतूना विपर्ययेण ऋतुचर्य्या-विपरीताचरणेन। क्लेश कार्यादिदु ख तेन अभिघातात्। वाष्पग्रहात् अश्रुवेगविघातात। असत उपदशात् प्रमेहादिति पापोपदशात् पापप्रमेहाच्च।

तेषा सम्प्राप्ति ।

शिरानुसारिभिर्दोषैर्विगुणै रूर्द्धमाश्रिते ।
जायन्ते नेत्ररोगेषु रोगा परमदारुणा ॥

नेत्रभागेषु नेत्रस्य दृष्ट्याद्यवयवेषु ।

प्रथमपटलगतस्य दोषस्य स्वभाव ।

प्रथमे पटले दोषो यस्य दृष्टौ व्यवस्थित ।
अव्यक्तानि स रूपाणि सर्व्वाण्येव प्रपश्यति ॥

प्रथमे पटले आभ्यन्तरे न तु वाह्ये। अव्यक्तानि ईषद् व्यक्तानि।

द्वितीयपटलगतस्य दोषस्य स्वभाव ।

दृष्टिर्भृश विह्वलति द्वितीय पटल गते।
मक्षिका मशकान् केशान् जालकानि च पश्यति ॥
मण्डलानि पताकाश्च मरीचीन् कुण्डलानि च।
परिप्लवाश्च विविधान् वर्षमभ्र तमासि च ॥
दूरस्थानि च रूपाणि मन्यते स समीपत ।

समीपस्थानि दूरे च दृष्टेर्गोचरविभ्रमात् ॥
यत्नवानपि चात्यर्थं सूचीच्छिद्रं न पश्यति ॥

तृतीयपटलगतस्य स्वभाव ।

ऊर्द्ध्वं पश्यति नाधस्तात् तृतीय पटल गते ।
महान्त्यपि च रूपाणि च्छादितानीव वाससा ॥
कर्णनासाक्षियुक्तानि विपरीतानि वेक्षते ।
यथादोषञ्च रज्येत दृष्टिर्दोषे बलीयसि ॥
अध स्थिते समीपस्थं दूरस्थं चोपरिस्थिते ।
पार्श्वस्थिते तथा दोषे पार्श्वस्थानि न पश्यति ॥
समन्तत स्थिते दोषे सङ्कुलानीव पश्यति ।
दृष्टिमध्यगते दोषे स एकं मन्यते द्विधा ॥
द्विधा स्थिते त्रिधा पश्येद् बहुधा चानवस्थिते ॥

चतुर्थपटलगतस्य स्वभाव ।

तिमिराख्य स वै दोषश्चतुर्थ पटल गत ।
रुणद्धि सर्व्वतो दृष्टिं लिङ्गनाश स उच्यते ॥
अस्मिन्नपि तमोभूते नातिरूढे महागदे ।
चन्द्रादित्यौ सनक्षत्रावन्तरीक्षे च विद्युत ॥
निर्म्मलानि च तेजांसि भ्राजिष्णूनि च पश्यति ।
स एव लिङ्गनाशस्तु नीलिकाकाचसंज्ञित ॥

दोषोऽत्र रोग चतुर्थ पटल बाह्य पटल गत स तिमिराख्य तिमिरदर्शनेन तिमिरमस्यास्तीति तिमिर अर्श आदित्वादच् । तस्य लक्षणमाह रुणद्धीत्यादि सर्व्वत सर्व्वत्र । लिङ्गनाश लिङ्ग्यते ज्ञायतेऽनेनेति लिङ्ग दृष्टितेज तस्य नाशोऽस्मिन्निति लिङ्गनाश । अस्मिन्नपि तिमिरेऽपि तमोभूते

तमस्तुल्ये अत्र भूतशब्दस्तुल्यार्थे भूत प्राप्यतीति समे त्रिष्वित्य मरात्। नातिरूढे अप्रौढे नवे चन्द्रादित्यौ नक्षत्राणि च पश्यति। तेजासि अग्न्यादि। भ्राजिष्णूनि रत्नसुवर्णादीनि। अस्मिन् प्रौढे चिरजे चन्द्रादीनपि न पश्यतीत्याशय। नीलिकाकाचसञ्ज्ञित नीलिकाकाचेति नामान्तराभ्या युक्त ।

दृष्टिरोगाणा नामानि सख्या च।

दृष्ट्याश्रया षट च षडेव रोगा
षड् लिङ्गनाशा हि भवन्ति तत्र।
वातेन पित्तेन कफेन सर्व्वै
रक्तात् परिम्लाय्यभिधश्च षष्ठे ॥
तथा नर पित्तविदग्धदृष्टि
कफेन चान्यस्त्वथ धूमदर्शी।
यो ह्रस्वजात्यो नकुलान्धता च
गम्भीरसञ्ज्ञा च तथैव दृष्टि ॥

दृष्ट्याश्रया रोगा षट् षट् द्वादशेत्यर्थं । तत्र लिङ्गनाशा षट् तान् विवृणोति वातेनेत्यादि। पित्तविदग्धदृष्ट्यादयश्च षट्। एव दृष्ट्याश्रया द्वादश रोगा । लिङ्गनाशो दृष्टितेजसो नाश इत्यर्थं ।

तत्रैवान्यौ गतौ ज्ञेयौ सनिमित्तानिमित्तकौ ॥

वातिकस्य लिङ्गनाशस्य लक्षणम्।

वातेन खलु रूपाणि भ्रमन्तीव च पश्यति।
आविलान्यरुणाभानि व्याविद्धानीव मानव ॥

आविलानि कलुषाणि अरुणाभानि अव्यक्तलौहित्य युक्तानि।

पैत्तिकस्य तस्य लक्षणम।

पित्तेनादित्यखद्योतशक्रचापतडिद्गुणान्।
नृत्यतश्चैव शिखिन सर्व्वं नीलञ्च पश्यति॥
आदित्यादीना गुणान् रूपाणि।

श्लैष्मिकस्य लक्षणम्।

कफेन पश्येद्रूपाणि स्निग्धानि च सितानि च।
पश्येदसूक्ष्माण्यत्यर्थं व्यभ्रे वै चाभ्रसम्प्लवम।
सलिलप्लावितानीव परिजाड्यानि मानव॥

सान्निपातिकस्य लक्षणम।

सन्निपातेन चित्राणि विप्लुतानीव पश्यति।
बहुधा वा द्विधा वापि सर्व्वाण्येव समन्तत॥
हीनाधिकाङ्गान्यथवा ज्योतींष्यपि च पश्यति॥

चित्राणि नानावर्णानि, विप्लुतानि विपरीतानि। वैपरीत्य विवृणोति बहुधेत्यादि।

रक्तजस्य लक्षणम्।

पश्येद्रक्तेन रक्तानि तमांसि विविधानि च।
हरितान्यथ कृष्णानि पीतान्यपि च मानव॥

परिम्लायिनो लक्षणम्।

रक्तेन मूर्च्छित पित्त परिम्लायिनमाचरेत्।
तेन पीता दिश पश्येदुद्यन्तमिव भास्करम्॥
विकीर्य्यमाणान् व्याप्यमानान्, तेजोभिरग्न्यादिभिरिव।
वक्ष्यामि षड्विध रागैर्लिङ्गनाशमत परम्॥
वातादिजनितैर्नेत्रवर्णैरपि स षड्विध॥

रागोऽरुणो मारुतत प्रदिष्टो
म्लायी च नीलश्च तथैव पित्तात ।
कफात् सित शोणितत सरक्ता
समस्तदोषप्रभवो विचित्र ॥

अरुण मण्डल वाताच्चञ्चल परुष तथा ।
पित्ततो मण्डल नील कास्याभ वा सपीतकम् ॥
श्लेष्मणा बहल स्निग्ध शङ्खकुन्देन्दुपाण्डुरम ।
चलत्पद्मपलाशस्थ शुक्लो विन्दुरिवाम्भस ॥
मृद्यमाने तु नयने मण्डल तद्द् विसर्पति ।
मण्डलन्तु भवेच्चित्र लिङ्गनाशे त्रिदोषजे ॥
प्रवालपद्मपत्राभ मण्डल शोणितात्मकम् ।
रक्तज मण्डल दृष्टौ स्थूलकाचारुणप्रभम् ॥
परिम्लायिनि रोगे स्यान्म्लान नीलमथापि वा ।
दोषक्षयात् स्वय तत्र कदाचित् स्यात्तु दर्शनम् ॥

रक्तज पित्तानुगामिरक्तज, स्थूलकाचारुणप्रभ स्थूल काचस्येव प्रभा यस्य तत्, एतेन स्थौल्यमरुणत्वञ्च बोध्यते। दोषक्षयादित्यादि तत्र परिम्लायिनि रोगे कालान्तरेण दोषक्षयात् कदाचित् स्वयमेव दर्शन स्यात् ।

यथास्व दोषलिङ्गानि सर्व्वेष्वेव भवन्ति हि ॥

पित्तविदग्धदृष्टेर्लक्षणम ।

पित्तेन दुष्टेन गतेन दृष्टि
पीता भवेद् यस्य नरस्य दृष्टि ।

पीतानि रूपाणि च तेन पश्येत्
स वै नरः पित्तविदग्धदृष्टिः ॥
प्राप्ते तृतीयं पटलन्तु दोषे
दिवा न पश्येन्निशि वीक्षते स ।
रात्रौ स शीतानुगृहीत दृष्टिः
पित्ताल्पभावात् सकलानि पश्येत् ॥

पित्तेन दृष्टिं गतेन दृष्टौ प्रथमद्वितीयपटलगतेनेत्यर्थः । द्वितीयश्लोकस्य प्रथमचरणे दोषशब्दः पित्तस्य बोधकः ।

श्लेष्मविदग्धदृष्टेर्लक्षणम् ।

तथा नरः श्लेष्मविदग्धदृष्टिः
स्तान्येव शुक्लानि हि मन्यते तु ।
त्रिषु स्थितो यः पटलेषु दोषो
नक्तान्ध्यमापादयति प्रसह्य ॥
दिवा स सूर्य्यानुगृहीतदृष्टिः
पश्येत्तु रूपाणि कफाल्पभावात् ॥

नक्तान्ध्यस्य श्लेष्मविदग्धदृष्टावन्तर्भूतत्वान्न पृथग्गणना ।

धूमदर्शनस्य लक्षणम् ।

शोकज्वरायासशिरोऽभितापै
रभ्याहता यस्य नरस्य दृष्टिः ।
धूमांस्तु यः पश्यति सर्व्वभावान्
स धूमदर्शीति नरः प्रदिष्टः ॥

शिरोऽभितापैः शिरसि घर्म्मादीनां सन्तापैः । एतस्य पित्तदोषो बोद्धव्यः ।

ह्रस्वजातस्य लक्षणम् ।

यो वासरे पश्यति कष्टतोऽथ
रूप महच्चापि निरीक्षतेऽल्पम् ।
रात्रौ पुनर्य प्रकृतानि पश्येत्
स ह्रस्वजात्यो मुनिभि प्रदिष्ट ॥

नकुलान्ध्यस्य लक्षणम् ।

विद्योतते यस्य नरस्य दृष्टि-
र्दोषाभिपन्ना नकुलस्य यद्वत् ।
चित्राणि रूपाणि दिवा तु पश्येत्
स वै विकारो नकुलान्ध्यसञ्ज्ञ ॥

गम्भीरिकाया लक्षणम् ।

दृष्टिर्विरूपा श्वसनोपसृष्टा
सङ्कुच्यतेऽभ्यन्तरत प्रयाति ।
रुजावगाढा च तमक्षिरोग
गम्भीरिकेति प्रवदन्ति धीरा ॥

विरूपा विकृता । श्वसनोपसृष्टा वातोपहता । रुजावगाढा गम्भीरवेदनान्विता ।

बाह्यौ पुनर्द्वाविह सम्प्रदिष्टौ
निमित्ततश्चाप्यनिमित्ततश्च ।
निमित्ततस्तत्र शिरोऽभितापाज्-
ज्ञेयस्त्वभिष्यन्दनिदर्शनै स ॥

बाह्यौ सुश्रुतोक्तद्वादशसङ्ख्येभ्योऽधिकौ । तत्र निमित्तमाह शिरोऽभिताप शिर अभितप्यते येन विषकुसुमगन्धवहपवन-

स्पर्शेन शिरोऽभिताप तस्मात् अभिष्यन्दनिदर्शनै रक्ताभिष्यन्द लिङ्गैरिति गदाधर सन्निपाताभिष्यन्दलिङ्गैरिति कार्त्तिक ।

सुरर्षिगन्धर्व्वमहोरगाणा
सन्दर्शनेनापि च भास्करस्य ।
हन्येत दृष्टिर्मनुजस्य यस्य
स लिङ्गनाशस्त्वनिमित्तसञ्ज्ञ ॥
तत्राक्षि विस्पष्टमिवावभाति
वैदूर्य्यवर्णा विमला च दृष्टि ॥

अनुपलभ्यमानसुरादिदर्शनरूपनिमित्तमपि अनिमित्तमिति मतम। विस्पष्ट ज्योतिर्युक्त, वैदूर्य्यवर्णा श्यामा, विमला निर्म्मला ।

कृष्णमण्डलस्य रोगा ।

यत् सव्रण शुक्रमथाव्रणञ्च
पाकात्ययश्चाप्यजका तथैव ।
चत्वार एते नयनामयास्तु
कृष्णप्रदेशे नियता भवन्ति ॥

सव्रणशुक्रस्य लक्षणम् ।

निमग्नरूपन्तु भवेद्धि कृष्णे
सूच्येव विद्ध प्रतिभाति यद् वै ।
स्राव स्रवेदुष्णमतीव चापि
तत सव्रण शुक्रमुदाहरन्ति ॥

निमग्नरूपमिति शुक्रविशेषणम् । सूच्येव विद्धमिति शुक्रस्य वर्त्तुलत्व व्यथायुक्तत्वञ्च बोधयति। स्रवेदित्यनेनैव स्रावो बोधित तथापि स्रावपद निरन्तरस्रावबोधनार्थम ।

दृष्टे समीपे न भवेत्तु यच्च
न चावगाढं न च संस्रवेद्धि ।
अवेदनं वा न च युग्मशुक्रं
तत् सिद्धिमायाति कदाचिदेव ।

चतं हि स्वभावत एव सत्त्वयोपघातकर अतो दृष्टे समीपेन न साध्यम् । न च अवगाढं एकत्वग्गतम् । न च संस्रवेत् नचात्यर्थं स्रवेत् । अवेदनं मन्दवेदनं रक्तस्य कफानुगमात् वातानुगमादतिवेदनन्तु न सिध्यति । युग्मञ्च चतशुक्रं न कदापि सिध्यति ।

अव्रणशुक्रस्य लक्षणम ।

सितं यदा भात्यसितप्रदेशे
स्यन्दात्मकं नातिरुगश्रुयुक्तम् ।
विहायसीवाभ्रदलानुकारि
तदव्रणं साध्यतमं वदन्ति ॥
गम्भीरजातं बहलञ्च शुक्रं
चिरोत्थितञ्चापि वदन्ति कृच्छ्रम् ॥

गम्भीरजातं द्वित्रित्वग्गतम् । बहलं स्थूलम् ।

विच्छिन्नमध्यं पिशितावृतं वा
चलं शिरासक्तमदृष्टिकृच्च ।
द्वित्वग्गतं लोहितमन्ततश्च
चिरोत्थितञ्चापि विवर्ज्जनीयम् ॥

विच्छिन्नमध्यं विदीर्णमांसत्वात सच्छिद्रं निम्नमिति यावत्, तद्विपरीतन्तु पिशितावृतमुन्नतमांसरूपत्वेन ।

उष्णाश्रुपात पिडका च नेत्रे
यस्मिन् भवेन्मुद्गनिभञ्च शुक्रम ।
तदप्यसाध्य प्रवदन्ति केचि
दन्यच्च यत तित्तिरिपक्षतुल्यम ॥

अक्षिपाकात्ययस्य लक्षणम ।

सञ्छाद्यते श्वेतनिभेन सर्व्व-
दोषेण यस्यासितमण्डलन्तु ।
तमक्षिपाकात्ययमक्षिकोप
समुत्थित तीव्ररुज वदन्ति ॥

श्वेतनिभेन सर्व्वदोषेण श्वेतरूपतया परिणतेन दोषत्रयेण ।

अजकाजातस्य लक्षणम् ।

अजापुरीषप्रतिमो रुजावान्
सलोहितो लोहितपिच्छिलास्रम् ।
विगृह्य कृष्ण प्रचयोऽभ्युपैति
तच्चाजकाजातमिति व्यवस्येत् ॥

अन्यच्च । कृष्णाक्ष्णोर्यद् भवेच्छुष्कच्छगलीविट्समप्रभम् ।
सान्द्रपिच्छिलरक्ताश्रु वित्वग्गतमजाजकम् ॥

सलोहित ईषल्लोहित । प्रचय मेदप्रचय ।

शुक्लमण्डलस्थ रोगाणा नामानि सख्या च ।

प्रस्तारिशुक्लक्षतजाधिमास-
स्नायूर्म्मसज्ञा खलु पञ्च रोगा ।
स्याच्छुक्तिका चार्ज्जुनपिष्टकौ च
जाल शिराणा पिडकाश्च या स्यु ॥

रोगा बलासग्रथितेन सार्द्ध
मेकादशाक्ष्णो खलु शुक्लभागे ॥
तत्र प्रस्तार्य्यर्म्मणो लक्षणम ।
प्रस्तार्य्यर्म्म तनु स्तीर्ण श्यावरक्तनिभ सिते ॥
तनु सूक्ष्म, स्तीर्ण विस्तीर्ण, श्यावरक्तनिभमित्यत्र विकल्पो बोद्धव्य ।
शुक्लार्म्मणो लक्षणम् ।
सश्वेत मृदु शुक्लार्म्म शुक्ले तद्व वर्द्धते चिरात् ॥
रक्तार्म्मणो लक्षणम् ।
पद्माभ मृदुरक्तार्म्म यन्मास चीयते सिते ॥
पद्माभ अरुणपद्मपत्रनिभ, मृदु कोमलम् ।
अधिमासार्म्मणो लक्षणम् ।
पृथु मृद्वधिमासार्म्म वहलञ्च यकृन्निभम ॥
पृथु विस्तीर्ण, वहल पुष्ट, यकृन्निभ ईषत्कृष्णलोहितम् ।
स्नाय्वर्म्मणो लक्षणम ।
स्थिर प्रसारि मासाढ्य शुष्क स्नाय्वर्म्म पञ्चमम् ॥
स्थिर कठिन, शुष्क स्रावरहितम् । प्रस्तारीति पाठान्तरे प्रस्तार्य्यर्म्म शुष्क कठिन मासाढ्यञ्च सत् स्नाय्वर्म्मसञ्ज्ञक भवति ।
शुक्तिकाया लक्षणम् ।
श्यावा स्यु पिशितनिभाश्च विन्दवो ये
शुक्त्याभा सितनियता स शुक्तिसञ्ज्ञ ॥
श्यावा इत्यादि वर्णत्रये विकल्पो बोद्धव्य । स शुक्तिसञ्ज्ञो रोग ।

अर्ज्जुनस्य लक्षणम् ।

एको य शशरुधिरोपमस्तु विन्दु
शुक्लस्थो भवति तमर्ज्जुन वदन्ति ॥

पिष्टकस्य लक्षणम् ।

श्लेष्ममारुतकोपेन शुक्ले मास समुन्नतम् ।
पिष्टवत् पिष्टक विद्धि मलाक्तादर्शसन्निभम् ॥

अन्यच्च । उत्सन्न सलिलनिभोऽथ पिष्टशुक्लो
विन्दुर्यं सम्भवति पिष्टक सुवृत्त ॥
ईषच्छ्यावतया स्वच्छत्वेन च मलाक्तदर्पणतुल्यम् ।

शिराजालस्य लक्षणम् ।

जालाभ कठिनशिरोऽरुण शिराणा
सन्तानो भवति शिरादि जालसज्ञ ॥

शिरादिजालसज्ञ शिरापूर्णजालसज्ञ शिराजालसज्ञ इत्यर्थ ।

शिरापिडकाया लक्षणम् ।

शुक्लस्था सितपिडका शिरावृता या
स्ता विद्यादसितसमोपजा शिराजा ॥

वलासग्रथितस्य लक्षणम ।

कास्याभोऽमृदुरथ वारिविन्दुकल्पो
विज्ञेयो नयनसिते वलाससज्ञ ॥

कास्याभ श्वेत इत्यर्थ । अमृदु कठिन । वारिविन्दुकल्प एतेन मनागुन्नतत्व बोध्यते । वलाससज्ञ वलासग्रथितसज्ञ क्वचिदेकदेशेनापि समुदायावगमात्, यथा भीमो भीमसेन इति, अतएव सुश्रुते नामसग्रहे वलासग्रथितपद निर्दिष्टम् ।

सन्धिरोगाणा नामानि सङ्ख्या च ।

पूयालस सोपनाह स्रावाश्चत्वार एव च ।

पर्व्वणीकालजीजन्तुग्रन्थि सन्धौ नवामया ॥

तत्र पूयालसस्य लक्षणम् ।

पक्व शोथ सन्धिज सस्रवेद्द य

सान्द्र पूय पूतिपूयालस स ॥

अन्यच्च । शोथक्लेदसमाविष्ट तोदभेदसमाकुलम् ।

पूयालसन्त त विद्यात् सन्धौ कानीनके नृणाम् ॥

उपनाहस्य लक्षणम् ।

ग्रन्थिर्नाल्पो दृष्टिसन्धावपाकी

कण्डूप्रायो नीरुजस्तूपनाह ॥

अन्यच्च । वायु श्लेष्माणमादाय दृष्टिसन्धौ व्यवस्थित ।

अरुण कठिन ग्रन्थि जनयत्यल्पवेदनम् ॥

श्लेष्मोपनाह त विद्यात् स्रावान् वक्ष्याम्यत परम् ॥

नाल्पो महान् अपाकी ईषत्पाकी नीरुज ईषद्वेदन ।
दृष्टिसन्धाविति कृष्णदृष्टिमण्डलयो सन्धावित्यर्थ ।

स्रावाणा सम्प्राप्ति ।

गत्वा सन्धीनश्रुमार्गेण दोषा

कुर्य्यु सावान् लक्षणै स्वैरुपेतान् ।

तान् वै स्रावान् नेत्रनाडीति चैके

तस्या लिङ्ग कीर्त्तयिष्ये चतुर्धा ॥

सन्धीनिति बहुवचनेन नेत्रान्तर्गता सर्व्वएव सन्धयो गृह्यन्ते। एके वदन्तीति शेष । वातिकस्रावो न भवति केवलेन वातेन तदसम्भवात् । चतुधा पित्तश्लेष्मजत्रिदोषजरक्तजभेदात् ।

पित्तस्रावस्य लक्षणम् ।

पीताभास नीलमुष्णा ज्जलाभ
पित्तस्राव सस्रवेत् सन्धिमध्यात् ॥

श्लेष्मस्रावस्य लक्षणम ।

श्वेत सान्द्र पिच्छिल य स्रवेत्तु
श्लेष्मस्रावोऽसौ विकार प्रदिष्ट ॥

सन्निपातस्रावस्य लक्षणम् ।

शोथ सन्धौ सस्रवेद् यस्तु पक्क
पूय स्राव सर्व्वज सम्मत स्यात् ॥

अन्यच्च । पाक सन्धौ सस्रवेद् यश्च पूय
पूयस्रावी नैकरूप प्रदिष्ट ॥

रक्तस्रावस्य लक्षणम ।

रक्तस्राव शोणितोत्थ सरक्त
कोष्णा नाल्प सस्रवेन्नातिसान्द्रम् ॥

पर्व्वणीकाया अलज्याश्च लक्षणम् ।

ताम्रा तन्वी दाहशूलोपपन्ना
रक्ताज् ज्ञेया पर्व्वणी वृत्तशोफा ।
जाता सन्धौ शुक्लकृष्णोऽलजो स्यात्
तस्मिन्नेव व्याहृता पूर्व्वलिङ्गै ॥

तस्मिन्नेव शुक्लकृष्णयोरेव सन्धौ। भेदार्थमाह पूर्व्वलिङ्गै प्रमेहाधिकारलिखितै ।

क्रिमिग्रन्थेर्लक्षणम् ।

क्रिमिग्रन्थिर्वर्त्मन पक्ष्मणश्च
कण्डू कुर्य्यु क्रिमय सन्धिजाता ।

नानारूपा वर्त्म शुक्लान्तसन्धौ
चरन्त्यन्तर्लोचन दूषयन्त ॥

वर्त्म रोगाणा सम्प्राप्ति ।

पृथग् दोषा समस्ताश्च यदा वर्त्म व्यपाश्रया ।
शिरा व्याप्यावतिष्ठन्ते वर्त्म न्यधिकमूर्च्छिता ॥
विवर्द्ध्य मास रक्तञ्च तदा वर्त्म व्यपाश्रयान् ।
विकारान् जनयन्त्याशु नामतस्तान् निबोधत ॥

तेषा नामानि सख्या च ।

उत्सङ्गिन्यथ कुम्भिका पोथक्यो वर्त्म शर्करा ।
तथार्शोवर्त्म शुष्कार्शस्तथैवाञ्जननामिका ॥
वहल वर्त्म यच्चापि तथान्यो वर्त्मबन्धक ।
क्लिष्टवर्त्म तथा वर्त्मकर्द्दम श्यावर्त्म च ॥
प्रक्लिन्नवर्त्म चाक्लिन्नवर्त्म वातहतञ्च यत् ।
वर्त्मार्व्वुद निमिषश्च शोणितार्शस्तथैव च ॥
लगणो विसवर्त्मापि कुञ्चन नाम तत्परम ।
एकविंशतिरित्येते विकारा वर्त्मसश्रया ॥

तेषूत्सङ्गपिडकाया लक्षणम ।

अभ्यन्तरमुखी ताम्रा वाह्यतो वर्त्मसश्रया ।
सोत्सङ्गोत्सङ्गपिडका सर्व्वजा स्थूलकण्डुरा ॥

अभ्यन्तरमुखो वर्त्मनोऽभ्यन्तरे मुख यस्या सा। वर्त्मनो वाह्यतस्ताम्रा। सोत्सङ्गा अन्त पूया। उत्सङ्गपिडका उत्सङ्गे क्रोडे वहव पिडका यस्या सा। स्थूलकण्डुरा स्थूला चासौ कण्डुरा चेति कम्मधारय । एषा अधरवर्त्मजा बोद्धव्या वर्त्मनोत्सङ्गेऽधरे जन्तोरिति विदेहवचनात् ।

कुम्भिकाया लक्षणम् ।

वर्त्मान्ते पिडका ध्माता भिद्यन्ते च स्रवन्ति च ।
कुम्भिकावीजसदृशा कुम्भिका सन्निपातजा ॥

दाडिमाकारफलो लताविशेष कुम्भिकाशब्दवाच्य तद्वीजमपि दाडिमफलवीजाकारम् ।

पोथकीना लक्षणम् ।

स्राविण्य कण्डुरा गुर्व्यो रक्तसर्षपसन्निभा ।
रुजावत्यश्च पिडका पोथक्य इति कीर्त्तिता ॥

वर्त्मशर्कराया लक्षणम् ।

पिडकाभि सुसूक्ष्माभिर्घनाभिरभिसवृता ।
पिडका या खरा स्थूला सा ज्ञेया वर्त्मशर्करा ॥
घनाभिर्निविडाभिर्दृढाभिर्वा ।

अर्शोवर्त्मनो लक्षणम ।

एर्व्वारुवीजप्रतिमा पिडका मन्दवेदना ।
श्लक्ष्णा खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्त्यते ॥
खरास्तीक्ष्णाग्रा ।

शुष्कार्शसो लक्षणम् ।

दीर्घाङ्कुर खर स्तब्धो दारुणोऽभ्यन्तरोद्भव ।
व्याधिरेषोऽभिविख्यात शुष्कार्शो नाम नामत ॥
खर कर्कश, स्तब्ध स्रावरहित, दारुण कठिन ।

अञ्जननामिकाया लक्षणम ।

दाहतोदवती ताम्रा पिडका वर्त्मसम्भवा ।
मृद्वी मन्दरुजा सूक्ष्मा ज्ञेया साञ्जननामिका ॥

वहलवर्त्मनो लक्षणम् ।

वर्त्मोपचीयते यस्य पिडकाभि समन्तत ।
सवर्णाभि स्थिराभिश्च विद्याद् वहलवर्त्म तत् ॥

वर्त्मवन्धकस्य लक्षणम् ।

कण्डूमताल्पतोदेन वर्त्मशोफेन मानव ।
न सम छादयेदक्षि यत्रासौ वर्त्मवन्धक ॥

यत्र यस्मिन् रोगे। न सम छादयेदक्षि चक्षु सम प्रकृत सम्यगिति यावत् छादयितु न शक्नुयात ।

क्लिष्टवर्त्मनो लक्षणम ।

मृद्वल्पवेदन ताम्र यद्वर्त्म सममेव च ।
अकस्माच्च स्रवेद्रक्त क्लिष्टवर्त्मेति तद् विदु ॥

अत्र वर्त्मशब्देन वर्त्मद्वय ज्ञेयम। अतएव सममेव युगपदेव इति ।

वर्त्मकर्द्दमस्य लक्षणम ।

क्लिष्ट पुन पित्तयुत शोणित विदहेद यदा ।
तदा क्लिन्नत्वमापन्नमुच्यते वर्त्मकर्द्दमम् ॥

क्लिष्ट कर्त्तृ क्लिष्टवर्त्मैव यदा पित्तलाभ्यासादधिकपित्त मत् शोणित विदहेत् तथा तत् क्लिन्नत्वमापन्न वर्त्मकर्द्दमसञ्ज्ञा लभते। अथवा यदा शोणित कर्त्तृ शोणित पित्तयुत सत् क्लिष्ट क्लिष्टवर्त्मकर्म्म विदहेत् तदा तत् क्लिष्टवर्त्म वर्त्मकर्द्दमसञ्ज्ञा लभते ।

श्याववर्त्मनो लक्षणम् ।

यद्वर्त्म वाह्यतोऽन्तश्च श्याव शून सवेदनम् ।
सकण्डूक परिक्लेदि श्याववर्त्मेति तन्मतम् ॥

प्रक्लिन्नवर्त्मनो लक्षणम्।

अरुज वाह्यत शून वर्त्म यस्य नरस्य हि।
प्रक्लिन्नवर्त्म तद् विद्यात् क्लिन्नमत्यर्थमन्तत ॥

अरुज ईषद्व्यथम। अन्तत क्लिन्न अन्ते क्लेदवत्।

अक्लिन्नवर्त्मनो लक्षणम्।

यस्य धौतान्यधौतानि सम्बध्यन्ते पुन पुन।
वर्त्मान्यपरिपक्वानि विद्यादक्लिन्नवर्त्म तत् ॥

वातहतवर्त्मनो लक्षणम।

विमुक्तसन्धि निश्चेष्ट वर्त्म यस्य निमील्यते।
एतद् वातहत विद्यात सरुज यदि वारुजम् ॥

वर्त्मार्बुदस्य लक्षणम्।

वर्त्मान्तरस्थ विषम ग्रन्थिभूतमवेनदम्।
आचक्षीतार्बुदमिति सरक्तमविलम्बि च ॥

विषम अवर्त्तुलम्। ग्रन्थिभूत कठिनम। अवेदन मीष द्वेदनम्। सरक्त ईषल्लोहितम्। अविलम्बि अस्रस्तम्।

निमिषस्य लक्षणम्।

निमेषिणी शिरा वायु प्रविष्टो वर्त्मसश्रया।
सञ्चालयति वर्त्मानि निमेष स गदो मत ॥

शोणितार्शसो लक्षणम।

वर्त्मस्थो यो विवर्द्धेत लोहितो मृदुरङ्कुर।
तद्रक्तज शोणितार्शश्छिन्नश्चापि विवर्द्धते ॥

लगणस्य लक्षणम्।

अपाकी कठिन स्थूलो ग्रन्थिर्वर्त्मभवोऽरुज।
सकण्डू पिच्छिल कोलप्रमाणो लगण स्मृत ॥

विसवर्त्मनो लक्षणम् ।

शून यद् वर्त्म बहुभि सूक्ष्मैश्छिद्रै समन्वितम् ।
विसमन्तर्जलमिव विसवर्त्मेति तन्मतम् ॥

अन्यच्च । त्रयो दोषा वहि शोथ कुर्य्युश्छिद्राणि वर्त्मनो ।
प्रस्रवन्त्यन्तरुदक विसवद् विसवर्त्म तत् ॥

विस मृणालम् । विसवत् बहुसूक्ष्मच्छिद्रयुक्तत्वादस्य विसवर्त्मसञ्ज्ञा ।

कुञ्चनस्य लक्षणम् ।

वाताद्या वर्त्मसङ्कोच जनयन्ति मला यदा ।
तदा द्रष्टु न शक्नोति कुञ्चन नाम तद् विदु ॥

पक्ष्मरोगयोर्नामनी ।

पक्ष्मकोप पक्ष्मशातो रोगौ द्वौ पक्ष्मसश्रयौ ॥

पक्ष्मकोपस्य लक्षणम ।

पक्ष्माशयगता दोषास्तीक्ष्णाग्राणि खराणि च ।
निर्वर्त्तयन्ति पक्ष्माणि तैर्घृष्टञ्चाक्षि दूयते ॥
उत्पाटितै पुन शान्ति पक्ष्मभिश्चोपजायते ।
वातातपानलद्वेषी पक्ष्मकोप स उच्यते ॥

अन्यच्च । प्रचालितानि वातेन पक्ष्माण्यक्षि विशन्ति हि ।
घृष्यन्त्यक्षि मुहुस्तानि सरम्भ जनयन्ति च ॥
असिते सितभागे च मूलकोषात् पतन्त्यपि ।
पक्ष्मकोप स विज्ञेयो व्याधि परमदारुण ॥

पक्ष्मशातस्य लक्षणम् ।

वर्त्म पक्ष्माशयगत पित्त रोमाणि शातयेत् ।
कण्डू दाहञ्च कुरुते पक्ष्मशात तमादिशेत् ॥

समस्त नेत्ररोगाणा नामानि सख्या च।

स्यन्दाश्चतुष्का इह सम्प्रदिष्टा-
श्चत्वार एवेह तथाधिमन्था।
पाक सशोथ स च शोथहीनो
हताधिमन्थोऽनिलपर्य्ययश्च॥
शुष्काक्षिपाकस्त्विह कीर्त्तितश्च
तथान्यतोवात उदीरितश्च।
दृष्टिस्तथाम्लाध्युषिता शिराणा
मुत्पातहर्षौ च समस्तनेत्रे॥

एव समस्तनेत्रे स्युरामया दश सप्त च।
तेषामिह पृथग् वक्ष्ये यथावल्लक्षणानि च॥
वातात् पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्व्विध।
प्रायेण जायते घोर सर्व्वनेत्रामयाकर॥

घोरो दुसहवेदन। सर्व्वनेत्रामयाकर सर्व्वेषा नेत्र रोगाणामधिमन्थादीनामाकर सर्व्वनेत्ररोगजनक इत्यर्थ।

तेषु वातिकस्याभिष्यन्दस्य लक्षणम्।

निस्तोदनस्तम्भनरोमहर्ष
सघर्षपारुष्यशिरोऽभितापा।
विशुष्कभाव शिशिराश्रुता च
वाताभिपन्ने नयने भवन्ति॥

स्तम्भन जडिमा। सघष करकरिका। पारुष्य रूक्षता। शिरोऽभिताप शिरसो व्यथा। विशुष्कभाव दूषिका-राहित्यम्।

पैत्तिकस्य लक्षणम् ।

दाहप्रपाकौ शिशिराभिनन्दा
धूमायन वाष्पसमुच्छ्रयश्च ।
उष्णास्रुता पीतकनेत्रता च
पित्ताभिपन्ने नयने भवन्ति ।

शिशिराभिनन्दा शीतलेच्छा। धूमायन नेत्राद् धूमोद्गम इव। वाष्पसमुच्छ्रय अस्रुबाहुल्यम् ।

श्लैष्मिकस्य लक्षणम् ।

उष्णाभिनन्दा गुरुताक्षिशोफ
कण्डूपदेहावतिशीतता च ।
स्रावो मुहु पिच्छिल एव चापि
कफाभिपन्ने नयने भवन्ति ॥

रक्तजस्य लक्षणम् ।

ताम्राश्रुता लोहितनेत्रता च
राज्य समन्तादतिलोहिताश्च ।
पित्तस्य लिङ्गानि च यानि तानि
रक्ताभिपन्ने नयने भवन्ति ॥

अनुक्तसंग्रहार्थमाह पित्तलिङ्गानि पित्ताभिष्यन्दलिङ्गानि । पैत्तस्य लिङ्गानीति पाठान्तरमधिकसन्तोषजनकम् ।[1]

अधिमन्थाना निदानम् ।

वृद्धैरेतैरभिष्यन्दैर्नराणामक्रियावताम् ।
तावन्तस्त्वधिमन्था स्युर्नयने तीव्रवेदना ॥

अधिमन्थस्य लक्षणम्।

उत्पाद्यते इवात्यर्थं नेत्र निर्म्मथ्यते तथा।
शिरसोऽर्द्धञ्च त विद्यादधिमन्थ स्वलक्षणे।
स्वलक्षणे यथोक्तवातादिकृताभिष्यन्दलक्षणे।

वातिकस्याधिमन्थस्य लक्षणम्।

नेत्रमुत्पाद्यत इव मथ्यतेऽरणिवच्च यत।
सघर्षतोदनिर्भेदसयुत स्वब्धमाविलम॥
कुञ्चनास्फोटनाध्मानवेपथुव्यथनैर्युतम्।
शिरसोऽर्द्धञ्च येन स्यादधिमन्थ स मारुतात्॥

पैत्तिकस्य लक्षणम।

यकृत्पिण्डोपम चक्षुर्ज्वलदङ्गारकीर्णवत्।
अधिमन्थे भवेत् पैत्ते शिरसो दहन तथा॥

श्लैष्मिकस्य लक्षणम्।

शल्यगौरवपैच्छिल्यदूषिकाशोथसयुतम्।
स्रावकण्डूयुत नेत्र नासाध्मान शिरोरुजा॥
आविला पांशुपूर्णेव दृष्टि कफसमुद्भवे।
अधिमन्थे नत कृष्णमुन्नत शुक्लमण्डलम्॥

रक्तजस्य लक्षणम्।

मन्थे रक्तभवे नेत्रमुत्पाटनसमानरुक्।
रागेण बन्धुकनिभ ताम्यति स्पर्शनाक्षमम्॥
लोहितान्त सनिस्तोद पश्यत्यग्निनिभा दिश।
ज्वलद्भिश्च शिरोऽङ्गारैराकीर्णमिव जायते॥

हन्याद् दृष्टि सप्तरात्रात् कफोत्थोऽ-
धीमन्थोऽसृक्सम्भव पञ्चरात्रात्।

षड्भावाद्वा मारुतोत्थो निहन्या
न्मिथ्याचारात् पैत्तिक सद्य एव ॥
सद्य शब्दोऽत्र त्रिरात्रवाची ।
सशोथस्य पाकस्य लक्षणम् ।
कण्डूपदेहाश्रुयुत पक्वोडुम्बरसन्निभ ।
दाहसंघर्षताम्रत्वशोथनिस्तोदगौरवै ॥
जुष्टो मुहु स्रवेद् वाष्पमुष्णा पिच्छिलमेव च ।
सरम्भी पच्यते योऽसौ नेत्रपाक सशोथक ॥
( सरम्भी बलवतस्त्वायुक्रिय )
अशोथस्य पाकस्य लक्षणम ।
शोथहीनानि लिङ्गानि नेत्रपाके त्वशोथके ॥
हताधिमन्थस्य लक्षणम् ।
उपेक्षणादक्षि यदाधिमन्थो
वाताधिक शोषयति प्रसह्य ।
रुजाभिरुग्राभिरसाध्य एष
हताधिमन्थ खलु नाम रोग ॥
अन्यच्च । अन्त शिराणा श्वसन स्थितो दृष्टि प्रतिक्षिपन् ।
हताधिमन्थ जनयेत् तमसाध्य विदुर्बुधा ॥
अन्यच्च । अथवा शोषयेदक्षि क्षीणतेजो बलादयम् ।
तत् पद्ममिव सशुष्कमवसीदति लोचनम् ॥
हताधिमन्थ त विद्यादसाध्य वातकोपत ॥
वातपर्य्ययस्य लक्षणम् ।
वार वारञ्च पर्य्येति भ्रुवौ नेत्रे च मारुत ।
रुजाभि सह तीव्राभि स ज्ञेयो वातपर्य्यय ॥
पर्य्येति पर्य्यायेण याति कदाचिद् भ्रुवौ कदाचिन्नेत्रे ।

शुष्काक्षिपाकस्य लक्षणम्।

यत् कूणित दारुण रूक्षवर्त्म
सन्दह्यते चाविलदर्शन यत्।
सुदारुण यत् प्रतिबोधने च
शुष्काक्षिपाकोपहत तदक्षि॥

कूणित निमीलितम्। दारुणरूक्षवर्त्म दारुण विक्षत रूक्षञ्च वर्त्म यस्य तत्, इदमक्ष्णोर्विशेषणम्। सन्दह्यते सदाह भवति। आविलदर्शन आविलस्य दर्शन येन तत्। यत्प्रतिबोधने उन्मेषणे सुदारुण सुकाठिनम्।

अन्यतोवातस्य लक्षणम्।

यस्यावटू कर्णशिरोहनुस्थो
मन्यागतो वाप्यनिलोऽन्यतो वा
कुर्य्याद्रुजोऽति भ्रुवि लोचने च
तमन्यतोवातमुदाहरन्ति॥

अवटूर्घाटा। अन्यतो वा पृष्ठादिदेशस्थागत। अन्यतोवात योह्यन्यत्र स्थितोऽन्यत्र रुज करोति तादृशम्।

अम्लाध्युषितस्य लक्षणम्।

स्राव लोहितपर्य्यन्त सर्व्वमक्षि प्रपच्यते।
सदाहशोथ सास्रावमम्लाध्युषितमम्लत॥

अम्लत अम्लभोजनात्। तथाच सुश्रुत। अम्लेन भुक्तेनेत्यादि।

शिरोत्पातस्य लक्षणम्।

अवेदना वापि सवेदना वा
यस्याक्षिराज्यो हि भवन्ति ताम्रा।

मुहुर्विरज्यन्ति च या समन्तात्
व्याधि शिरोत्पात इति प्रदिष्ट ॥

अक्षिराज्य अक्षिशिरा । विरज्यन्ति विकृतवर्णा भवन्ति ।

शिराहर्षस्य लक्षणम ।

मोहात् शिरोत्पात उपेक्षितस्तु
जायेत रोगस्तु शिराप्रहर्ष ।
ताम्राच्छमस्र स्रवति प्रगाढ
तथा न शक्नोत्यभिवीक्षितुञ्च ॥

नेत्रस्य सामताया लक्षणम् ।

उदीर्णवेदन नेत्र रागशोफसमन्वितम् ।
घर्ष निस्तोद शूलास्रुयुक्त मामान्वित विदु ॥

नस्य निरामताया लक्षणम् ।

मन्दवेदनता कण्डू सरम्भास्रुप्रशान्तता ।
प्रसन्नवर्णता चाक्ष्णो निरामिक्षणलक्षणम् ॥

सरम्भ शोथ ।

नेत्ररोगाणा चिकित्सा ।

अष्टसप्ततिराख्याता येऽत्र नेत्रभवा गदा ।
चिकित्सितमिद तेषा समासाद् व्यासत शृणु ॥
छेद्यास्तेषु दशैकञ्च नव लेख्या प्रकीर्त्तिता ।
भेद्या पञ्चविकारा स्युर्व्यध्या पञ्चदशैव तु ॥
षोडश शस्त्रकृत्याश्च याप्या सप्त भवन्ति हि ।
रोगा वर्ज्जयितव्याश्च दश पञ्च च जानता ॥
असाध्यौ वा भवेतान्तु याप्यौ वागन्तुसञ्ज्ञितौ ॥

अर्शोऽन्वित भवति वर्त्म तु यत्तथार्श ।

शुष्कं तदार्व्वुदमथो पिडका शिराजा ।
जालं शिराजमपि पञ्चविधं तथाम्मं
च्छेद्या भवन्ति सह पर्व्वणिकामयेन ॥
उत्सङ्गिनी बहलकर्द्दमवर्त्मनी च
श्यावञ्च यच्च पठितं त्विह बद्धवर्त्म ।
क्लिष्टञ्च पोथक्रियुतं खलु यच्च वर्त्म
कुम्भीकिनी च सह शर्करया च लेख्या ॥
श्लेष्मोपनाहलगणौ च विसञ्च भेद्या
ग्रन्थिश्च यः क्रमिकृतोऽञ्जननामिका च ।
आदौ शिरा निगदिता च ययोः प्रयोगे
पाकौ च यौ नयनयोः पवनोऽन्यतश्च ।
पूयालसानिलविपर्य्ययमन्यसञ्ज्ञा
स्यन्दास्तु यान्त्युपशमं हि शिराव्यधेन ॥
शुष्काक्षिपाककफपित्तविदग्धदृष्टि-
ष्वम्लाख्यशुक्रसहिताज्र्जुनपिष्टकेषु ।
अक्लिन्नवर्त्महुतभुग्ध्वजदर्शिशुक्ति
प्रक्लिन्नवर्त्मसु तथैव बलाससञ्ज्ञे
आगन्तुरोगयुगकुञ्चनपक्ष्मशातं
शस्तं न शस्त्रपतनं प्रवदन्ति धीराः ॥
सम्पश्यतः षडपि येऽभिहितास्तु काचा-
स्ते पक्ष्मकोपसहितास्तु भवन्ति याप्याः ॥
चत्वार एव पवनप्रभवास्त्वसाध्या
द्वौ पित्तजौ कफनिमित्तज एक एव ।
अष्टाष्टका रुधिरजाश्च गदास्त्रिदोषा-

स्रावन्त एव गदितावपि वाह्यजौ द्वौ ॥
अन्यच्च । हताधिमन्थो निमिषो दृष्टिर्गम्भीरिका च या ।
यच्च वातहत वर्त्म न ते सिध्यन्ति वातजा ॥
पित्तज सलिलस्राव परिम्लायी च नीलक ॥
असाध्यौ कीर्त्तितावेतौ व्याधौ पित्तनिमित्तजौ ॥
रक्तस्रावोऽजकाजात शोणितार्शोऽवलम्बितम् ।
शुक्रञ्चास्रसमुद्भूता असाध्या व्याधयो मता ॥
पूयास्रावो नाकुलान्ध्यमक्षिपाकात्ययोऽन्नजौ ।
असाध्या व्याधयश्चापि सनिमित्तानिमित्तकौ ॥

छेद्यरोगाणा प्रतिषेध ।

स्निग्ध भुक्तवतो ह्यन्नमुपविष्टस्य यत्नत ।
सरोषयेत् तु नयन भिषक् चूर्णैस्तु लावणै ॥
तत सरोषित तूर्ण सुस्विन्न परिघट्टितम् ।
अर्म्म यत्र वलीजात तत्रैतल्लगयेद्द भिषक् ॥
अपाङ्ग प्रेच्चमाणस्य वडिशेन समाहित ।
मुचुण्ड्याग्रह्य मेधावी सूचीसूत्रेण वा पुन ॥
न चोत्थापयता क्षिप्र कार्य्यमभ्युन्नतन्तु तत् ।
शस्त्रपातभयाच्चास्य वर्त्मनी ग्राहयेद दृढम् ॥
तत प्रशिथिलीभूत त्रिभिरेव विलम्बितम् ।
उल्लिखन् मण्डलाग्रेण तीक्ष्णेन परिशोधयेत् ॥
विमुक्त सर्व्वतश्चापि कृष्णाच्छुक्लाच्च मण्डलात् ॥
नीत्वा कनीनकोपान्त छिन्द्यान्नातिकनीनकम् ॥
चतुर्भागस्थित मार्षेनाक्षि व्यापत्तिमर्हति ।
कनीनकवधाद्स्र नाडी चाप्युपजायते ॥

हीनच्छेदात् पुनर्वृद्धिं शीघ्रमेवाधिगच्छति।
अर्म्म यज्जालवद् व्यापि तदप्युन्माज्र्य लम्बितम्॥
छिन्द्यादवक्रेण शस्त्रेण वर्त्म शुक्लान्तमाश्रितम्।
प्रतिसारणमक्ष्णोस्तु ततः कार्य्यमनन्तरम्॥
यवनालस्य चूर्णेन त्रिकटोर्लवणस्य च।
स्वेदयित्वा ततः पश्चाद् बध्नीयात् कुशलो भिषक्॥
दोषर्त्तुबलकालज्ञः स्नेहं दत्त्वा यथाहितम्।
व्रणवत् संविधानन्तु तस्य कुर्य्यादतः परम्॥
त्र्यहान्मुक्त्वा करस्वेदं दत्त्वा शोधनमाचरेत्।
करञ्जबीजामलकमधुकैः साधितं पयः॥
हितमाश्च्योतने शूले हिरञ्जं क्षौद्रसंयुतम्।
मधुकोत्पलकिञ्जल्कदूर्व्वाकल्कैश्च मूर्द्धनि॥
प्रलेपः सघृतः शीतः क्षीरपिष्टः प्रशस्यते।
लेख्याञ्जनैरपहरेदर्म्मशेषं भवेद् यदि॥
अर्म्म चाल्पं दधिनिभं नीलं रक्तमथापि वा।
धूसरं तनु यच्चापि शुक्रवत् तदुपाचरेत्॥
चर्म्माभं बहलं यत्तु स्नायुमांसघनावृतम्।
छेद्यमेव तदर्म्म स्यात् कृष्णमण्डलगञ्च यत्॥
विशुद्धवर्णमक्लिष्टं क्रियास्वक्षिगतक्लमम्।
छिन्नेऽर्म्मणि भवेत् सम्यग् यथास्वमनुपद्रवम्॥
शिराजाले शिरा यास्तु कठिनास्ताश्च बुद्धिमान्।
उल्लिखेन्मण्डलाग्रेण बडिशेनावलम्बिताः॥
शिरासु पिडका जाता या न सिध्यन्ति भेषजैः।
अर्म्मवन्मण्डलाग्रेण तासां छेदनमिष्यते॥

रोगयोश्चैतयोः कार्य्यमर्म्मोक्तं प्रतिसारणम् ।
विविधान्यपि यथादोषं लेखनद्रव्यसम्भृतं ॥
मन्थौ सस्वेद्य शस्त्रेण पर्व्वणीका विचक्षण ।
उत्तरे च त्रिभागे च वडिशेनावलम्बिताम् ॥
छिन्द्यात् ततोऽर्द्धमग्रे स्यादश्रुनाडो ह्यतोऽन्यथा ।
प्रतिसारणमत्रापि सैन्धवक्षौद्रमिष्यते ॥
लेखनीयानि चूर्णानि व्याधिशेषस्य भेषजम् ॥
अर्शस्तथा यच्च नाम्ना शुष्कार्शोऽर्व्वुदमेव च ।
मण्डलाग्रेण तीक्ष्णेन मूले च्छिन्द्याद् भिषग्वर ॥
ततः सैन्धवकासीसकृष्णाभिः प्रतिसारयेत् ।
शस्त्रकर्म्मण्युपरते मास स्यात्ता सुयन्त्रितः ॥

लेख्यरोगाणां चिकित्सा ।

नव येऽभिहिता लेख्या सामान्यास्तेष्वयं विधिः ।
स्निग्धवान्तविरिक्तस्य निवातातपसद्मनि ॥
सुखोदकप्रतप्तेन वाससा सुसमाहितः ।
स्वेदयेद् वर्त्म निर्भज्य वामाङ्गुष्ठाङ्गलिस्थितम् ।
अङ्गुल्यङ्गुष्ठकाभ्यान्तु निर्भुग्नं वर्त्म यत्नतः ।
प्लोतान्तरीकृतं नैव चलति स्रसतेऽपि वा ॥
ततः प्रमृज्य प्लोतेन वर्त्म शस्त्रपदाङ्कितम ।
लिखेच्छस्त्रेण यत्नेन ततो रक्ते स्थिते पुनः ॥
स्विन्नं मनोह्वाकासीसव्योषाञ्जनकसैन्धवैः ।
समाक्षिकैः श्लक्ष्णपिष्टैः प्रतिसार्य्योष्णवारिणा ॥
प्रक्षाल्य हविषा सिक्तं व्रणवत् समुपाचरेत् ।
स्वेदावपीडप्रभृतींस्त्र्यहादूर्द्धं प्रयोजयेत् ॥

भेद्यरोगाणां प्रतिषेधः।

स्वेदयित्वा विसग्रन्थिं छिद्राण्यस्य निराश्रयम्।
पक्वं भित्त्वा तु शस्त्रेण सैन्धवेनावचूर्णयेत्॥
रोचनाक्षारतुत्थानि पिप्पल्यः क्षौद्रयोगतः।
प्रतिसारणमेकैकं भिन्ने लगणे इष्यते॥
स्विन्नां भिन्नां विनिष्पीड्य भिषगञ्जननामिकाम्।
शिलैलानतसिन्धूत्थैः सक्षौद्रैः प्रतिसारयेत्॥
रसाञ्जनमधुभ्यां वा भिन्नां वा शस्त्रकर्म्मवित्।
प्रतिसार्य्याञ्जनैर्युञ्ज्यादुष्णैर्दीपशिखोद्भवैः॥
सम्यक् स्विन्ने क्रिमिग्रन्थौ भिन्ने स्यात् प्रतिसारणम्।
त्रिफलातुत्थकासीससैन्धवैस्तु यथाविधि॥
भित्त्वोपनाहं कफजं पिप्पलीमधुसैन्धवैः।
लेखयेद् मण्डलाग्रेण समन्तात्प्रच्छयेदपि॥
सस्नेह्य विधिना सम्यक् स्वेदयित्वा यथासुखम्।
आपाकाद् विधिनोक्तेन पञ्चभेद्यानुपाचरेत्॥
सर्व्वेष्वेतेषु विहितं विधानं स्नेहपूर्व्वकम्।
सम्यक् पक्वेषु कुर्व्वीत व्रणादिविहितां क्रियाम॥
अनुक्तेषु च रोगेषु शस्त्रकर्म्म विचक्षणः।
विद्रधिव्रणनाडीवत् क्रियां कुर्य्यात समाहितः॥

लिङ्गनाशस्य चिकित्सा।

विध्येत् सुजातं निष्प्रेच्य लिङ्गनाशं कफोद्भवम्।
आवर्त्तक्यादिभिः षड्भिर्विवर्ज्जितमुपद्रवैः॥
सोऽसञ्जातो हि विषमो दधिमस्तुनिभस्तनुः॥
शलाकयावकृष्टोऽपि पुनरूर्द्ध्वं प्रपद्यते॥

करोति वेदना तीव्रा दृष्टिञ्च स्थगयेत् पुन ।
तत्रावर्त्तचला दृष्टिरावर्त्तक्यरुणाऽसिता ।
शर्करार्कपयोलेशनिचितेव घनाति च ॥
राजीमती दृङ्चिता शालिशूकाभराजिभि ।
विषमच्छिन्नदग्धाभा सरुक् छिन्नांशुका स्मृता ॥
दृष्टि कांस्यसमच्छाया चन्द्रकी चन्द्रकाकृति ।
छत्राभा नैकवर्णा च च्छत्रकी नाम नीलिका ॥
अथ साधारणे काले शुद्धसम्भोजितात्मन ।
देशे प्रकाशे पूर्व्वाह्णे भिषग् जानूच्चपीठग ॥
यन्त्रितस्योपविष्टस्य स्विन्नाक्षस्य मुखानिलै ।
अङ्गुष्ठमुदिते नेत्रे दृष्टौ दृष्ट्वोत्प्लुत मलम् ॥
स्वनास प्रेक्षमाणस्य निष्कम्प मूर्द्ध्नि धारिते ।
कृष्णादर्द्धाङ्गुल मुक्त्वा तदर्द्धार्द्धमपाङ्गत ॥
तर्ज्जनीमध्यमाङ्गुष्ठै शलाका निश्चला धृताम् ।
दैवच्छिद्र नयेत् पार्श्वादूर्द्ध्वमामन्त्रयन्निव ॥
सव्य दक्षिणहस्तेन नेत्र सव्येन चेतरत् ।
विध्येत् सुविद्धे शब्द स्यादरुक् चाम्बुलवस्रुति ॥
सान्त्वयन्नातुर चानु नेत्र स्तन्येन सेचयेत् ।
शलाकायास्ततोऽग्रेण निर्लिखेन्नेत्रमण्डलम् ॥
अबाधमान शनकैर्नासा प्रतिनुदस्तत ।
भिषक् सम्यगपहरेद दृष्टिमण्डलग कफम ॥
अथ दृष्टेषु रोगेषु शलाकामाहरेच्छनै ।
घृताप्लुत पिचु दत्त्वा वद्धाक्षि शाययेत्तत ॥
विद्वानन्येन पार्श्वेन तमुत्ताना द्वयोर्व्यधे ।

निवाते शयनेऽभ्यक्तशिर पाद हिते रतम् ॥
चवथु कासमुद्गार ष्ठीवन पानमम्भस ।
अधोमुखस्थित स्नान दन्तधावन चर्व्वणम ॥
सप्ताह नाचरेत स्नेह पीत वत्स्यात्र यन्त्रणा ।
शक्तितो लङ्घयेत् सेको रुजि कोष्णेन सर्पिषा ॥
त्र्यहात्तत्र्यहाच्च धावेत कषायैरनिलापहै ।
वायोर्भयात् त्र्यहादूर्द्ध स्वेदयेदक्षि सर्व्वथा ॥
दशाहमेव सयम्य हित दृष्टिप्रसादनम ॥
पश्चात् कर्म्म च सेवेत लघ्वन्नञ्चापि मात्रया ।
यन्त्रणामनुरुध्येत दृष्टेरास्थैर्य्यलाभत ।
रूपाणि सूक्ष्मदीप्तानि सहसा नावलोकयेत् ॥

अभिष्यन्दादीना चिकित्सा ।

लङ्घनालेपन स्वेद शिराव्यधविरेचनै ।
उपाचरेदभिष्यन्दानञ्जनाश्च्योतनादिभि ॥
श्रीवासातिविषालोधैश्चूर्णितैरल्पसैन्धवै ।
अव्यक्तेऽक्षिगदे कार्य्य प्रोतस्थैर्गुण्डन वहि ॥
अक्षिकुक्षिभवा रोगा प्रतिश्याय व्रणज्वरा ।
पञ्चैते पञ्चरात्रेण प्रशम यान्ति लङ्घनात् ॥
स्वेद प्रलेपस्तिक्तान्न सेको दिनचतुष्टयम् ।
लङ्घन चाक्षिरोगाणामामाना पाचनानि षट् ॥
अञ्जन पूरण क्वाथपानमामे न शस्यते ॥
दार्व्वी रसाञ्जन वापि स्तन्ययुक्त प्रपूरणम् ।
निहन्ति शीघ्र दाहाश्रुवेदना स्यन्दसम्भवा ॥
आमलक्या रसो हन्ति नेत्रकोप प्रपूरित ।

सक्षौद्रसैन्धवो वापि शिग्रुमूलत्वचो रस ॥
सैन्धवदारुहरिद्रा गैरिकपथ्यारसाञ्जनै पिष्टै ।
दत्तो वहि प्रलेपो भवत्यशेषाक्षिरोगहर ॥
कार्य्या हरीतकी तद्वद् घृतभृष्टा विडालक ।
शालाक्येऽक्ष्णोर्वहिर्लेपो विडालक उदाहृत ॥
सम्यक्कोऽक्षिगदे घोरैरञ्जनादिकमिष्यते ॥
गैरिक सैन्धव कृष्णा तगरञ्च यथोत्तरम् ।
पिष्ट हिरशतोऽद्भिश्च गुडिकाञ्जनमिष्यते ॥
द्राक्षामधुकमञ्जिष्ठाजीवनीयै शृत पय ।
प्रातराश्चोतन शस्त शोथशूलाक्षिरोगिणाम् ॥
स्निग्धैरुष्णैश्च वातोत्थ मृदुशीतैश्च पित्तज ।
तीक्ष्णैरुष्णैश्चविशदै प्रशाम्यति कफात्मक ॥
विल्वपत्ररस साम्ल निघृष्ट ताम्रभाजने ।
सिन्धुत्थकटुतैलाक्त कुर्य्यान्नेत्रस्रवादिषु ॥
तरुस्थविद्धामलकरस सर्व्वाक्षिरोगनुत् ।
पुराण सर्व्वथा सर्पि सर्व्वनेत्रामयापह ॥
अयमेव विधि सर्व्वो मन्थादिष्वपि शस्यते ।
अशान्ते सव्वथा मन्थे भ्रुवोरुपरि सन्दहेत् ॥
जलौकापातन शस्त नेत्रपाके विरेचनम् ।
शिरावेध प्रकुर्व्वीत सेकलेपास्तथा हितान् ॥

सूर्य्योपरागानलविद्युताञ्च
विलोकनेनोपहतेक्षणञ्च ।
सन्तर्पण स्निग्धहिमादि कार्य्य
साय निषेव्यास्त्रिफलाप्रयोगा ॥

अभिष्यन्दमधिमन्थ रक्तोत्थमथवार्ज्जुनम्।
शिरोत्पात शिराहर्षमन्याश्चाक्षिभवान् गदान्॥
स्निग्धस्याज्येन कौम्भेन शिरावेधै शम नयेत्॥
अम्लाध्युषित शान्त्यर्थं कुर्य्याल्लेपान् सुशीतलान्॥
मपि क्षौद्राञ्जनञ्च स्याच्छिरोत्पातस्य भेषजम्।
तद्वत् सैन्धवकासीस स्तन्यपिष्टञ्च पूजितम्॥
निराकरोति नक्तान्ध्य सगोमयरसा कणा॥
वटक्षीरेण सयुक्त श्लक्ष्ण कर्पूरज रज।
क्षिप्रमञ्जनतो हन्ति शुक्रञ्चापि घनोन्नतम्॥
अजका पार्श्वतो विद्धा सूच्या विस्राव्य चोदकम्।
व्रण गोमयचूर्णेन पूरयेत् सर्पिषा सह॥
शशकाद्य घृत तद्वदजकाजात नाशनम्॥
कल्क क्वाथोऽथवा चूर्ण त्रिफलाया निषेवितम्।
मधुना सर्पिषा वापि समस्तातिमिरापहम्॥
जाता रोगा विनश्यन्ति न भवन्ति कदाचन।
त्रिफलाया कषायेण प्रातर्नयनधावनात्॥
रसाञ्जन समाक्षिक सर्व्वनेत्रामयापहम्॥

नेत्रवर्त्ती।

तुत्थक तोलकमित टङ्कन सर्ज्जिक तथा।
द्रावयित्वा मुषामध्ये तत्र माषमित घनम्॥
मिश्रयित्वा कृता नेत्रवर्त्ती नेत्ररुजापहा।
भाषिता श्रीमहेशेन सद्य शान्तिप्रदा शुभा॥
प्रवाल मुक्ता वैदुर्य्यशङ्खस्फटिकचन्दनम्।
सुवर्ण रजत क्षौद्रमञ्जन शुक्तिकापहम्॥

वैदेही श्वेतमरिच सैन्धव नागर समम् ।
मातुलुङ्गरसै पिष्टमञ्जन पिष्टकापहम ॥

## माक्षिकादिवटी ।

माक्षिक तोलकमित तदर्द्ध गन्धक रसम् ।
तथाभ्रञ्च समादाय मुक्तास्वर्णौ च पादिकौ ।
काकमाचीपत्ररसैस्त्रिधा सभाव्य यत्नत ।
रक्तिद्वयमिता कार्य्या माक्षिकादिवटी शुभा ॥
वेष्टिता पद्मपत्रेण धान्यराशौ निधापिता ।
यथायोग्यानुपानेन सेविता सहरेन्नृणाम् ॥
नेत्ररोगांश्च निखिलान् नानोपद्रवसयुतान् ॥
वर्त्तिश्चन्द्रोदया नाम चन्दनाद्या सुखावती ।
चन्द्रप्रभा तूषणाद्या दृष्टिदा च कुमारिका ॥
माक्षिकादि वटी चैव नेत्रवर्त्ती तथा शुभा ।
त्रिफलाद्य घृत तैल घृतञ्च नृपवल्लभम् ॥
भृङ्गराजाभिध तैल तैलञ्चाजितनामकम् ।
मधुकाद्य तथा लौह लौह नयनचन्द्रकम् ॥
भेषजान्येवमादीनि योज्यानि नयनामये ॥
समुद्र इव गम्भीर नैव शक्य चिकित्सितम् ।
वक्त निरवशेषेण श्लोकानामयुतैरपि ॥
सहस्रैरपि च प्रोक्तमर्थमल्पमतिर्नर ।
तर्कग्रन्थार्थरहितो नैव गृह्णात्यपण्डित ॥
तदिद बहुगूढार्थ चिकित्साबीजमीरितम् ।
कुशलेनाभिपन्न तद् बहुधाभिप्ररोहति ॥

पथ्यापथ्यानि ।

शालिर्मुद्गो यवो दुग्ध पटोल चाप्युडुम्बरम् ।
द्राक्षादाडिमखर्ज्जूरामलकान्यविदाहि च ॥
पुष्टिदानि सुपाच्यानि हितानि नयनामये ।
विपरीतानि जानीयाद् वर्ज्जनीयानि यत्नत ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
नेत्ररोगाधिकारस्त्रिसप्ततितमोऽध्याय ।

---

## चतु सप्ततितमोऽध्याय ।

— o —

### कर्णरोगाधिकार ।

कर्णरोगाणा नामानि सख्या च ।

कर्णशूल कर्णनादो वाधिर्य्य क्ष्वेड एव च ।
कर्णस्राव कर्णकण्डू कर्णगूथस्तथैव च ॥
प्रतिनाहो जन्तुकर्णो विद्रधिर्व्विविधस्तथा ।
कर्णपाक पूतिकर्णस्तथैवार्शश्चतुर्व्विधम् ॥
तथार्व्वुद सप्तविध शोफश्चापि चतुर्व्विध ।
एते कर्णगता रोगा अष्टाविंशतिरीरिता ॥

कर्णशूलस्य सम्प्राप्तिर्लक्षणञ्च ।

समीरण श्रोत्रगतोऽन्यथा चरन्
समन्तत शूलमतीव कर्णयो ।

करोति दोषैश्च यथास्वमावृत
स कर्णशूल कथितो दुराचर ॥

*अन्यथा चरन् प्रतिलोम चरन्। दोषै पित्तकफरक्तै। रक्तस्यापि रुजादिकर्त्तृत्वेन दोषसाम्याद् दोषत्वमेव। यथास्व यथात्मीयनिदान कुपितै। अथवा यथास्वमिति शूलविशेषणम्। दुराचर दुरुपचर।

कर्णशूलस्यारिष्टलक्षणम।

मूर्च्छा दाहो ज्वर कास क्लमोऽथ वमथुस्तथा।
उपद्रवा कर्णशूले भवन्त्येते मरिष्यत ॥

कर्णनादस्य लक्षणम्।

कर्णस्रोत स्थिते वाते शृणोति विविधान् स्वरान्।
भेरीमृदङ्गशङ्खाना कर्णनाद स उच्यते ॥

वाधिर्य्यस्य लक्षणम।

यदा शब्दवह वायु स्रोत आवृत्य तिष्ठति।
शुद्ध श्लेष्मान्वितो वापि वाधिर्य्य तेन जायते ॥

कर्णक्ष्वेडस्य लक्षणम्।

वायु पित्तादिभिर्युक्तो वेणुघोषसम स्वनम्।
करोति कर्णयो क्ष्वेड कर्णक्ष्वेड स उच्यते ॥

क्ष्वेडशब्दार्थं व्यनक्ति। वेणुघोषसमस्वनमिति। यत उक्त क्ष्वेडन वेणुघोषवदिति। ननु कर्णनादकर्णक्ष्वेडयो को भेद ? यत्रोच्यते कर्णनाद केवलेन वातेन जन्यते तत्र नानाशब्दाश्च शृणोति। कर्णक्ष्वेडस्तु पित्तादियुक्तेन वातेन जन्यते तत्र नियमेन वेणुघोषमिव शृणोतीति भेद।

कर्णस्रावस्य लक्षणम् ।

शिरोऽभिघातादथवा निमज्जतो
जले प्रपाकादथवापि विद्रधे ।
स्रवेद्धि पूय श्रवणोऽनिलार्द्दित
स कर्णसस्राव इति प्रकीर्त्तित ॥

पूयमित्युपलक्षण जल रसञ्च स्रावयेत् । श्रवणशब्द पुल्लिङ्गोऽप्यस्ति ।

कर्णकण्डू लक्षणम् ।

मारुत कफसयुक्त कर्णे कण्डू करोति हि ॥

कर्णगूथस्य लक्षणम् ।

पित्तोष्मशोषित श्लेष्मा कुरुते कर्णगूथकम् ॥
कर्णे गूथ यस्मात् स कर्णगूथो व्याधि ।

कर्णप्रतीनाहस्य लक्षणम् ।

स कर्णगूथो द्रवता यदा गतो
विलापितो घ्राणमुख प्रपद्यते ।
तदा स कर्णप्रतिनाहसञ्ज्ञितो
भवेद् विकार शिरसोऽर्द्धभेदकृत् ॥

घ्राणञ्च मुखञ्च घ्राणमुख एकत्व द्वन्द्वे । शिरसोऽर्द्धभेदकृत् अर्द्धावभेदकाख्यशिरोरोगकृत् ।

क्रिमिकर्णस्य लक्षणम् ।

यदा तु मूर्च्छान्त्यथवापि जन्तव
सृजन्त्यपत्यान्यथवापि मक्षिका ।
तदञ्जनत्वाच्छ्रवणो निरुच्यते
भिषग्भिराद्यै क्रिमिकर्णको गद ॥

तद् व्यञ्जकत्वात् क्रिमिलक्षणत्वात् । श्रवण क्रिमिकर्णको गदो निरुच्यते इति आश्रयाश्रितयोरभेदोपचाराच्छ्रवण क्रिमिकर्णको गदो भण्यते ।

पतङ्गादिषु प्रविष्टेषु लक्षणम ।

पतङ्गा शतपदाश्च कर्णस्रोत प्रविश्य हि ।
अरति व्याकुलत्वञ्च भृश कुर्व्वन्ति वेदनाम् ॥
कर्णौ निस्तुद्यते तस्य तथा फरफरायते ।
कोटे चरति रुक् तीव्रा निष्पन्दे मन्दवेदना ॥

द्विविधस्य कर्णविद्रधेर्लक्षणम् ।

क्षताभिघातप्रभवस्तु विद्रधि
भवेत् तथा दोषकृतोऽपर पुन ।
सरक्तपीतारुणमस्रमास्रवेत्
प्रतोदधूमायनदाहचोषवान् ॥

क्षतप्रभवोऽभिघातप्रभवश्च तयोर्द्वयोरप्यागन्तुजत्वादैक्यम् । एव वातादिजस्यापि दोषजत्वादेकत्वम् । असशब्देनात्र आस्रावो बोध्य ।

कर्णपाकस्य लक्षणम ।

कर्णपाकस्तु पित्तेन कोथविक्लेदकृद भवेत् ॥

कोथ पूतिभाव । विक्लेद आर्द्रता ।

पूतिकर्णस्य लक्षणम ।

कर्णविद्रधिपाकाद् वा कर्णे वा वारिपूरणात् ।
पूय स्रवति य पूति स ज्ञेय पूतिकर्णक ॥

कर्णस्रावाद् भेदार्थमाह पूतीति नियमेन पूति यथा स्यादेव स्रवति ।

कर्णगतानां शोथार्व्वुदार्शसां लक्षणानि।

कर्णशोथार्व्वुदार्शांसि जानीयादुक्तलक्षणैः ॥

कर्णशोथाश्चत्वारो वातपित्तकफरक्तजाः। एवमर्शोऽपि चतुर्व्विधम्। अन्येषां शोथानामर्शसाञ्चात्रासम्भव आधार प्रभावात्। अर्व्वुदं सप्तविधं वातपित्तकफरक्तमांसमेदश्शिराजम्।

एते कर्णरोगा अष्टाविंशतिः सुश्रुतोक्ता वर्णिताः। इदानीं चरकोक्तकर्णरोगचतुष्टयं वातपित्तकफसन्निपातकृतमाह।

वातजस्य कर्णरोगस्य लक्षणम्।

नादोऽतिरुक् कर्णमलस्य शोषः

स्रावस्तनुश्चाश्रवणञ्च वातात् ॥

पित्तजस्य लक्षणम्।

शोथः सरागो दरणं विदाहः

सपीतः पूतिस्रवणञ्च पित्तात् ॥

कफजस्य लक्षणम्।

वैश्रुत्यकण्डूस्थिरशोथशुक्ल-

स्निग्धस्रुतिः स्वल्परुजः कफाच्च ॥

वैश्रुत्यमन्यथा श्रवणम्।

त्रिदोषजस्य लक्षणम्।

सर्व्वाणि रूपाणि च सन्निपातात्

स्रावश्च तत्राधिकदोषवर्णः ॥

कर्णपाल्याः कर्णावयवत्वात् तद्विकारानत्रैवाह।

तत्र परिपोटकस्य निदानं लक्षणञ्च।

सौकुमार्य्याच्चिरोत्सृष्टे सहसातिप्रवर्द्धिते।

कर्णशोथो भवेत् पाल्यां सरुजः परिपोटवान् ॥

क्षणारुणाभि सस्तब्ध स रातात् परिपोटक ॥

परिपोटवान् मनाक् त्वगवदरणवान् ।

उत्पातस्य लक्षणम् ।

गुर्व्वाभरणसयोगात ताडनाद्द घर्षणादपि ।
शोथ पाल्या भवेच्छ्यावो दाहपाकरुजान्वित ॥
रक्तो वा रक्तपित्ताभ्यामुत्पात स गद स्मृत ॥

उन्मन्थकस्य लक्षणम् ।

कर्ण बलाद्द वर्द्धयत पाल्या वायु प्रकुप्यति ।
कफ सग्टह्य कुरुते शोथ स्तब्धमवेदनम ॥
उन्मन्थक सकण्डूको विकार कफवातज ॥

वर्द्धयतो जनस्य । अवेदनमीषद्वेदनम् ।

दु खवर्द्धनस्य लक्षणम ।

सवर्द्धमाने दुविद्धे कण्डूदाहरुजान्वित ।
शोथो भवति पाकश्च त्रिदोषो दु खवर्द्धन ॥

सवर्द्धमाने दुर्व्विद्धे कर्ण इति शेष ।

परिलेहिनो लक्षणम ।

कफासृक् क्रिमय क्रुद्धा सर्षपाभा विसर्पिण ।
कुर्व्वन्ति पिडका पाल्या कण्डूदाहसमन्विताम ॥
कफासृक् क्रिमिसम्भूत स विसर्पन्नितस्तत ।
लिह्यात् सशष्कुली पाली परिलेही च स स्मृत ॥

स पिडकात्मक परिलेहिसज्ञको गद । लिह्यात् निर्मांसीकुर्य्यात् । विसर्पान्वित इति पाठे विसर्पेण अन्वित इति ।

कर्णरोगाणां चिकित्सा ।

कर्णशूले कर्णनादे बाधिर्य्ये क्ष्वेड एव च ।
चतुर्ष्वपि च रोगेषु सामान्यं भेषजं स्मृतम् ॥
शृङ्गवेरञ्च माध्वीकं सैन्धवं तैलमेव च ।
कदुष्णं कर्णयोर्धार्य्यमेतत् स्याद् वेदनापहम् ॥
लशुनार्द्रकशिग्रूणां वारुण्या मूलकस्य च ।
कदल्याश्च रसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥
वारुणी वरुणः ।

अर्कस्य पत्रं परिणामपीत
माज्येन लिप्तं शिखियोगतप्तम् ।
आपीड्य तस्याम्बु सुखोष्णमेव
कर्णे निषिक्तं हरतेऽतिशूलम् ॥

तीव्रशूलातुरे कर्णे सशब्दे क्लेदवाहिनि ।
छागमूत्रं प्रशंसन्ति कोष्णं सैन्धवसंयुतम् ॥
हिङ्गुसैन्धवशुण्ठीभिः स्तैलं सर्षपसम्भवम् ।
विपक्वं हरतेऽवश्यं कर्णशूलं प्रपूरणात् ॥
शोभाञ्जनस्य निर्य्यासस्तिलतैलेन संयुतः ।
सुखोष्णः पूरणात् कर्णे कर्णशूलं निवारयेत् ॥
हिङ्गुतुम्बुरुशुण्ठीभिः साध्यं तैलन्तु सार्षपम् ।
कर्णशूले प्रधानन्तु पूरणं हितमुच्यते ॥
कर्णशूले कर्णनादे बाधिर्य्ये क्ष्वेड एव च ।
पूरणं कटुतैलेन हितं वातघ्नमौषधम् ॥
कर्णस्रावे पूतिकर्णे तथैव क्रिमिकर्णके ।
सामान्यं कर्म्म कुर्व्वीत योगान् वैशेषिकानपि ॥

खर्ज्जिकाचूर्णसयुक्त वीजपूरस्य सन्निपेत् ।
कर्णस्रावरुजादाहास्तेन नश्यन्त्यसशयम ॥
आम्रजम्बू प्रवालानि मधुकस्य वटस्य च ।
एभिस्तु साधित तैल पूतिकर्णगद हरेत् ॥
जातीपत्ररसे तैल विपक्क पूतिकर्णजित् ॥
घृष्ट रसाञ्जन नार्य्या क्षीरेण क्षौद्रसयुतम् ।
प्रशस्यते चिरोत्थे तत् सस्रावे पूतिकर्णके ॥
शम्बूकस्य तु मासेन कटुतैल विपाचयेत् ।
तस्य पूरणमात्रेण कर्णनाडी प्रशाम्यति ॥
क्रिमिकर्णविनाशाय क्रिमिघ्नी कारयेत् क्रियाम् ।
वार्त्ताकुधूमश्च हित सर्षपस्नेह एव च ॥
पूरण हरितालेन गव्यमूत्रयुतेन च ।
धूपने कर्णदौर्गन्धे गुग्गलु श्रेष्ठ उच्यते ।
चिकित्सा कर्णशोथाना तथा कर्णार्शसामपि ।
कर्णार्ब्बुदाना कुर्व्वीत शोथार्शोऽर्ब्बुदवद् भिषक् ॥

कर्णपालीविकाराणा चिकित्सा ।

पालीसशोषणे कुर्य्याद् वातकर्णरुजाक्रियाम् ।
स्वेदयेद् यत्नतस्ताश्च स्विन्ना सवर्द्धयेत् तिलै ॥
शतावरीवाजिगन्धापयस्यैरण्डवीजकै ।
तैल विपक्क सक्षीर पाली सवर्द्धयेत् सुखम् ॥
जीवनीयस्य कल्केन तैल दुग्धेन पाचयेत् ।
चिकित्सेत् तेन तैलेन हतास्र परिपोटकम ॥
शीतलेपैर्जलौकोभिरुत्पात समुपाचरेत् ॥
हलिनी सुरसाभ्याञ्च गोधाकङ्कवशान्वितम् ।

तैलं विपक्कमभ्यङ्गादुन्मन्थं नाशयेद् ध्रुवम् ॥
दुःखवर्द्धनकं सिद्धा जम्ब्वाम्रविल्वपत्रजैः ।
क्वाथैस्तैलेन सुस्निग्धं तच्चूर्णेश्चावधूनयेत् ॥
बहुशो गोमयैस्तप्तैः स्वेदितं परिलेहिनम् ।
घनसारैः समालिम्पेदजामूत्रेण कल्कितैः ॥
अपामार्गक्षारतैलं तैलञ्च लशुनाद्यकम ।
विल्वतैलं स्वर्ज्जिकाद्यं दशमूलाभिधं तथा ॥
कुष्ठाद्यं क्षारतैलञ्च जम्ब्वाद्यञ्च निशादिकम् ।
भेषजान्येवमादीनि घ्नन्ति कर्णामयान् बहून् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
कर्णरोगाधिकारश्चतुःसप्ततितमोऽध्यायः ।

---

## पञ्चसप्ततितमोऽध्यायः ।

— ० —

### शिरोरोगाधिकारः ।

तत्र शिरोरोगस्य निदानं सङ्ख्या च ।
शिरोरोगास्तु जायन्ते वातपित्तकफैस्त्रिभिः ।
सन्निपातेन रक्तेन क्षयेण क्रिमिभिस्तथा ॥
सूर्य्यावर्त्तानन्तवातशङ्खकार्द्धावभेदकाः ।
एकादशविधा एते कथ्यन्ते च सलक्षणाः ॥

शिरोरोगशब्देन शिरोगता शूलरूपा रुगभिधीयते ।
चयेण रसादिचयेण ।

सर्व्वे एव शिरोरोगा सन्निपातसमुत्थिता ।
वैशिष्ट्याद् दोषलिङ्गाना कीर्त्तिता ऋषिभि पृथक् ॥

वातिकस्य शिरोरोगस्य लक्षणम ।

यस्यानिमित्त शिरसो रुजश्च
भवन्ति तीव्रा निशि चातिमात्रम् ।
वन्धोपतापै प्रशमो भवेच्च
शिरोऽभिताप ससमीरणेन ॥

भवेदिति शेष । अनिमित्त अतर्कितविप्रकृष्ट निमित्तम् ।
निशि चातिमात्र रात्रौ शैत्येन वायोराधिक्यात् । उपताप
स्वेदनम् । शिरोऽभिताप शिर पीडा ।

पैत्तिकस्य तस्य लक्षणम् ।

यस्योष्णमङ्गारचित यथैव
भवेच्छिरो दह्यति चाक्षि नासम् ।
पोतेन रात्रौ च भवेत प्रशान्ति
शिरोऽभिताप स तु पित्तकोपात् ॥

दह्यतीति पदमार्षम् ।

श्लैष्मिकस्य लक्षणम् ।

शिरो भवेद् यस्य कफोपदिग्ध
गुरु प्रतिष्टब्धमतो हिमञ्च ।
शूनाक्षि नासा वदनञ्च यस्य
शिरोऽभिताप स कफप्रकोपात् ॥

सान्निपातिकस्य लक्षणम्।

शिरोऽभितापे त्रितयप्रवृद्धे
सर्व्वाणि लिङ्गानि समुद्भवन्ति।

रक्तजस्य लक्षणम्।

रक्तात्मकः पित्तसमानलिङ्गः
स्पर्शासहत्वं शिरसो भवेच्च॥
पैत्तिकाद् भेदमाह स्पर्शासहत्वमिति।

क्षयजस्य लक्षणम्।

वसा वलासक्षतसम्भवानां
शिरोगतानामति संक्षयेण।
क्षयप्रवृत्तः शिरसोऽभितापः
कष्टो भवेदुग्ररुजोऽतिमात्रम्॥
संस्वेदनच्छर्द्दनधर्म्मनस्यै
रसृग्विमोक्षैश्च विवृद्धिमेति॥
अङ्गं भ्रमति तुद्येत शिरो विभ्रान्तनेत्रता।
मूर्च्छा गात्रावसादश्च शिरोरोगे क्षयात्मके॥

क्रिमिजस्य लक्षणम्।

निस्तुद्यते यस्य शिरोऽतिमात्रं
संभक्ष्यमाणं स्फुरतीव चान्तः।
घ्राणाच्च गच्छेद्रुधिरं सपूयं
शिरोऽभितापः क्रिमिभिः सघोरः॥
संभक्ष्यमाणं क्रिमिभिरिति शेषः। स्फुरतीव मनाक् चलतीव। घ्राणाच्चेति चकारेण क्रिमिनिर्गमोऽपि बोध्यते।

सूर्य्यावर्त्ताख्यस्य लक्षणम ।

सूर्य्योदय वा प्रति मन्दमन्द-
मक्षिभ्रुव रुक् समुपैति गाढम् ।
विवर्द्धते चांशुमता सहैव
सूर्य्यापवृत्तौ विनिवर्त्तते च ॥
शीतेन शान्ति लभते कदाचि-
दुष्णेन जन्तु सुखमाप्नुयाच्च ।
त भास्करावर्त्तमुदाहरन्ति
सर्व्वात्मक कष्टतम विकारम ॥

सूर्य्योदये प्रातर्मन्द यथा स्यात् तथा रुजा अक्षिभ्रुव समुपैति, अंशुमता सूर्य्येण सह गाढ यथा भवति तथा वर्द्धते च शीतेन कदाचित् शान्ति लभते कदाचिदुष्णेन वा। शीते उष्णे च इति सप्तम्यन्ते पदे स्वीकृते शीते कर्म्मणि उष्णे कर्म्मणि वा कृते शान्ति न प्राप्नुयादित्यर्थ । भास्करावर्त्त सूर्य्यावर्त्त ।

अनन्तवातस्य लक्षणम् ।

दोषास्तु दुष्टास्त्रय एव मन्या
सपीड्य घाटासु रुजा सुतीव्राम्
कुर्व्वन्ति योऽक्षिणि भ्रुवि शङ्खदेशे
स्थित करोत्याशु विशेषतस्तु ॥
गण्डस्य पार्श्वे तु करोति कम्प
हनुग्रह लोचनजाश्च रोगान् ।
अनन्तवात तमुदाहरन्ति
दोषत्रयोत्थ शिरसो विकारम् ॥

अनन्तेषु बहुषु अङ्गेषु वात एव अनन्तवात । प्रथमत त्रयो दोषा मन्या ग्रीवाशिरादय सपीड्य घाटासु ग्रीवापश्चाद् भागेषु सुतीव्रा रुजा कुर्व्वन्ति । अनन्तर शीघ्र चक्षुरादिषु व्याधे स्थितिर्भवतीत्यर्थ । अयञ्च अन्वय । यो व्याधि अक्षिण भ्रुवि शङ्खदेशे विशेषत गण्डस्य पार्श्वे आशु घाटायामुत्पत्त्य नन्तरमेव स्थिति करोति तथा कम्पादिकञ्च करोति त अनन्तवात वदन्ति भिषज ।

शङ्खकस्य लक्षणम् ।

रक्तपित्तानिला दुष्टा शङ्खदेशे विमूर्च्छिता ।
तीव्ररुग्दाहराग हि शोथ कुर्व्वन्ति दारुणम ॥
स शिरो विषवद्वेगो निरुध्याशु गल तथा ।
त्रिरात्राज्जीवित हन्ति शङ्खको नाम नामत ॥
त्र्यह जीवति भैषज्य प्रत्याख्याय समाचरेत् ॥

रक्तपित्तानिला अत्र कफोऽपि योज्य वातानुयात्र कफपित्तरक्तैरिति सुश्रुतवचनात् । विमूर्च्छिता प्रवृद्धा । त्रिरात्रात् त्रिरात्रिमध्ये मारयतीति यावत् ।

अर्द्धावभेदक लक्षणम् ।

रुक्षाशनाद्यध्यशनावश्यप्राग्वातमैथुनै ।
वेगसन्धारणायासव्यायामै कुपितोऽनिल ॥
केवल सकफो वार्द्ध गृहीत्वा शिरसो बली ।
मन्याभ्रूशङ्खकर्णाक्षि ललाटार्द्धेषु वेदनाम् ॥
शस्त्राशनिनिभा कुर्य्यात् तीव्रा सोऽर्द्धावभेदक ।
नयन वाथवा श्रोत्रमतिवृद्धो विनाशयेत् ॥

सुश्रुते तु । यस्योत्तमाङ्गार्द्धमतीव जन्तो
सम्भेदतोदभ्रमशूलजुष्टम ।
पक्षाद् दशाहादथवाप्यकस्मात
तस्यार्द्धभेद त्रितयाद् व्यवस्येत् ॥

अवश्य अवश्याय । आयाम अतिचलनभारोद्वहनादि । व्यायाम मल्लश्रम । शस्त्राशनिनिभा शस्त्राघातेनेव वज्रपातेनेव वेदनाम् । शस्त्रारणिनिभामिति पाठे अरणिना अग्न्युत्थापक-काष्ठयन्त्रेण मन्थनवत् पीडा अथवा लक्षणया अग्नियोगेनेव पीडा बोध्या ।

तन्त्रविशेषोक्तस्य मनोविघातजस्य शिरोरोगस्य
निदान सम्प्राप्तिर्लक्षणञ्च ।

ईर्षया कोपशोकाभ्या शास्त्रादेरतिचिन्तया ।
वायु प्रकुपित कुर्य्यात् पीडा शिरसि दारुणाम् ॥
मस्तिष्क शोणित नीत्वा कृत्वा तस्यापि वैकृतम् ।
शङ्खयोश्च भ्रुवोरक्ष्णो स्तथा शीर्षतलादिषु ॥
जनयेद् वेदना घोरा भ्रमरोगञ्च दारुणम् ।
इन्द्रियाणा हरेच्छक्ति स्मृतिभ्र श करोति च ॥
मनोविघातजाख्येन शिरोरोगेण पीडित ।
न शक्नोति पुमाश्चिन्ता हृदि धारयितु क्षणम् ॥

शिरोरोगस्य चिकित्सा ।

वातिके शिरसो रोगे स्नेहस्वेदान् सलावणान् ।
पानान्नसुपनाहाश्च कुर्य्याद्वातामयापहान् ॥
कुष्ठमेरण्डमूलञ्च लेपात काञ्जिकयोजितम् ।
शिरोऽर्त्ति नाशयत्याशु चर्ण वा मुचुकुन्दजम ॥

शिरोवस्ति ।

आशिरो व्यायत चर्म्म क्रत्वाष्टाङ्गुलमुच्छ्रितम् ।
तेनावेष्ट्य शिरोऽधस्तात माषकल्केन लेपयेत् ॥
नैश्चल्येनोपविष्टस्य तैलैरुष्णै प्रपूरयेत् ।
धारयेदारुज शान्तेर्याम यामार्द्धमेव वा ॥
शिरोवस्तिर्जयत्येष शिरोरोग मरुद्भवम् ।
हनुमन्याक्षिकर्णार्त्तिमर्द्दित मस्तककम्पनम ॥
पैत्ते घृत पय सेका शीतलेपा सलावणा ।
जीवनीयानि सर्पींषि पानान्नञ्चापि पित्तनुत् ॥
कफजे लङ्घन स्वेदो रुक्षोष्णै पाचनात्मकै ।
तीक्ष्णावपीडधूमाश्च तीक्ष्णाश्च कवलग्रहा ॥

सारिवादिलेप ।

सारिवोत्पल कुष्ठानि मधुक चाम्लपेषितम् ।
सर्पिस्तैलयुतो लेप सूर्य्यावर्त्तार्द्धभेदयो ॥
सारिवादिभि समभागै काञ्जिकपिष्टैर्घृततैलेन सहितै लेप प्रयोक्तव्य ।

सूर्य्यावर्त्तभव वीज तद्रसेन सुपेषितम् ।
वेदनानाशनो लेप सूर्य्यावर्त्तार्द्धभेदयो ॥
सूर्य्यावर्त्ते विज्ञातव्य नस्यकर्म्मादि भेषजम् ।
पाययेत सगुड सर्पिर्घृतपूपाश्च भोजयेत् ॥
सूर्य्यावर्त्त शिरावेधो लावण क्षीरसर्पिषा ।
हित क्षारघृताभ्यासस्ताभ्याञ्चैव विरेचनम् ॥
क्षतमालपल्लवरसे खरमञ्जरीकल्कसिद्ध नवनीतम् ।
नस्येन जयति नियत सूर्य्यावर्त्त सुदुर्व्वारम् ॥

कृतमाल धनवहेडा इति हिन्दीभाषा। खरमञ्जरी अपामार्गवीजम्।

दशमूलीकषायन्तु सर्पि सैन्धव सयुतम।
नस्यमर्द्धावभेदघ्न सूर्य्यावर्त्त शिरोऽर्त्तिजित् ॥
शिरीष मूलकवीजैरवपीडञ्च योजयेत।
अवपीडो हितो वा स्याद्वचापिप्पलिभि कृत ॥
जाङ्गलानि च मासानि कारयेदुपनाहकम्।
तेनास्य शाम्यते व्याधि सूर्य्यावर्त्त सुदारुण ॥
भृङ्गराजरसञ्छागचीरान्तरोऽर्कतापित।
सूर्य्यावर्त्त निहन्त्याशु नस्येनैव प्रयोगराट् ॥
एष एव विधि कृतस्न कार्य्यश्चार्द्धावभेदके ॥
पिवेत् सशर्कर चीर नीर वा नारिकेलजम्।
सुशोत वापि पानीय सर्पिर्व्वा नस्ततस्तयो ॥
तिलात कल्क सनलद सचौद्र लवणान्वितम।
तेनास्य लेपयेत् शीर्ष मर्द्धभेद व्यपोहति ॥
सविडङ्ग तिल कृष्णा सम कृत्वा प्रपेषयेत्।
नस्यकर्म्मणि दातव्य मर्द्धभेद विनाशयेत् ॥
दग्धचूर्णो मृत्तिका चूर्ण मरिच चूर्णयो
समाश मिलित कृत्वा नस्य हन्ति शिरोरुजाम ॥
अनन्तवाते कर्त्तव्य सूर्य्यावर्त्तहितो विधि।
शिराविधश्च कर्त्तव्योऽनन्तवात प्रशान्तये ॥
आहारश्च विधातव्यो वातपित्त विनाशन ॥
सूर्य्यावर्त्ते हित यच्च शङ्खके स्वेदवर्ज्जितम्।
चीरसर्पि प्रशमन्ति नस्त पानञ्च शङ्खके ॥

अतावरी कृष्णातिलान् मधुकं नीलमुत्पलम् ।
दूर्व्वां पुनर्नवाञ्चापि लेपं साध्ववतारयेत् ॥
शीत तोयावसेकाश्च चीरसेकाश्च शीतलान् ॥
कल्कैश्च चीरवृक्षाणां शङ्खकस्य प्रलेपनम ॥
क्रौञ्च कादम्ब हंसानां शराव्या कच्छपस्य च ।
रसै सवृंहणश्चाथ तस्य शङ्खक सन्धिजा ॥
ऊर्द्ध्वास्थितस्य शिरा प्राज्ञो भिद्यादेव न ताडयेत् ॥
गिरिकर्णीफलरस मूलञ्च नस्य माचरेत् ।
मूल वा वन्धयेत् कर्णे शीघ्र हन्ति शिरोव्यथाम ॥
गुञ्जाकरञ्जवीजञ्च तयो कल्को जले कृत ।
मरिचैर्भृङ्गराजैश्च शीघ्र हन्ति शिरोव्यथाम ॥
नागरकल्क विमिश्र चीर नस्येन योजित पु साम ।
नानादोषोद्भूता शिरोरुजा हन्ति तीव्रतराम् ॥
शतधौतघृताभ्यङ्ग सर्व्वशीर्षविकारनुत ।
तथा चन्दनकर्पूरलेपनञ्च हित मतम ॥
चिप्रा दारुसिता दुग्धे कोलमाना पलाष्टके ।
पक्वैकत्र विशानञ्चो घनता तत् समाचरेत् ॥
भक्षणादस्य नित्य हि शिरोरोगो विनश्यति ।
सेवन फनिफेनस्य हरितालस्य चाथवा ।
सर्व्वान् शीर्षगदान् हन्ति ज्ञानाग्नि कर्म्मसघनन् ॥
यष्टीमधुकमाष स्याच्चतुर्थांश विष भवेत ।
तयोश्चूर्णं सुसूक्ष्म स्यात् तच्चूर्णं सर्षपोन्मितम् ॥
नासिकाभ्यन्तरे न्यस्त सर्व्वां शीर्षव्यथा हरेत् ।
दृष्टप्रयोगो योगोऽयमनुभाविभिरादृत ॥

मनोविघातजे कार्य्यो निखिलो बृंहणो विधि ।
हितो मांसरसश्चात्र पयश्च परम हितम् ॥

शिरोरोगहरो रस ।

रस गन्धकमभ्रञ्च लौह कर्षमित पृथक् ।
स्वर्णं शाणमितञ्चैव दार्व्व्याख्यञ्च विष तथा ॥
भृङ्गराजाम्भसा सम्यङ् मर्द्दयित्वा विचक्षण ।
रक्तिकार्द्धमिता कुर्य्याद् वटीश्चण्डांशुशोषिता ॥
शिरोरोगहरो नाम रसोऽय हरनिर्म्मित ।
हरेत् सर्व्वान शिरोरोगान् विरामे यदि सेवित ॥
षड्विन्द्वाख्यञ्च यत्तैल दशमूलादिक तथा ।
मयूराद्य तथा सर्पिर्हंसाद्यादिकमेव च ॥
शिर शूलादिवज्राख्यो रसश्चैवविधानि च ।
भेषजानि शिरोरुक्षु सर्व्वाख्येव हितानि हि ॥
रस श्वासकुठारो यस्तस्य नस्य विशेषत ।
शिर शूल हरत्येव सशयोऽत्र न विद्यते ॥

मिहिरोदय वटी ।

लौहमभ्र सुवर्णञ्च विद्रुम राजपट्टकम् ।
सर्व्व सम प्रदातव्य सिन्दूरञ्च द्विभागिकम ॥
एरण्डमूलजेनैव रसेन परिभावयेत ।
क्वाथैस्तथा जटामास्या वटी रक्तिद्वयात्मिका ॥
पथ्यापयोऽनुपानेन वटीय मिहिरोदया ।
अर्द्धावभेदक हन्ति पीता वातमनन्तकम ॥
सूर्य्यावर्त्त तथा शङ्खञ्चैकजञ्च द्विदोषजम् ।
त्रिदोषज शिरोरोग साध्यासाध्य न सशय ॥

शिरोरोगे पथ्यापथ्य निर्णय ।

शालि यव मांसरस वार्त्ताकुश्च पटोलकम्।
द्राक्षादाडिमखर्ज्जूरफलानि च पयस्तथा ॥
निशापान नदीस्नान गन्धद्रव्यनिषेवणम्।
शिरोरोगेषु सर्व्वेषु हितमुक्त यथायथम् ॥
द्रव्याणि चातितीक्ष्णानि दुर्ज्जराणि च यानि वा।
तान्यनिष्टप्रदान्यत्र तीक्ष्णाश्च निखिला क्रिया ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
शिरोरोगाधिकार पञ्चसप्ततितमोऽध्याय ।

---

## षट्सप्ततितमोऽध्याय.।



शीर्षाम्बुरोगाधिकार ।

तस्य निदान सम्प्राप्तिश्च ।

मद्यातिपानादतिशैत्ययोगाद
विरुद्धभोज्यादनिलप्रदोषात्।
दुष्टाम्बुपानादभिघाततश्च
तथान्त्रमध्ये क्रिमिसम्भवाच्च ॥
शिरोगतस्नेहद्रुती क्रमेण
सञ्चीयते तोयमतिप्रभूतम।

शीर्षाम्बुनामा गद एष पूर्व्वै
प्रकीर्त्तित [illegible] भिषग्भि ॥
प्रायश्च शैशवे व्याधिर्विविधाहितसेवनात् ।
तथा दन्तोद्गतेरेष बाहुल्येनाभिजायते ॥

तस्य पूर्व्वरूपम् ।

जिह्वा लिप्तातिनिद्रत्व दौर्ब्बल्य श्वासपूतिता ।
गाढविट्ता च तस्मिंस्तु भविष्यति भविष्यति ॥

तस्य लक्षणम् ।

शिरसो वेदना घोरा श्रुतेर्दृष्टेश्च तीक्ष्णता ।
मूत्राल्पत्व कृष्णविट्त्व धमनी वेगवाहिनी ॥
त्वगुष्णोष्णा तथा छर्द्दिर्विषमा च कनीनिका ।
कोपित्व मुखवैवर्ण्य निद्राया दन्तघर्षणम् ॥
कण्डूरोष्ठस्य नासाया आक्षेपो रक्तनेत्रता ।
पक्षाघात प्रलापश्च शीर्षाम्बुगदलक्षणम् ॥

तस्य चिकित्सा ।

भेषज रेचन यच्च यन्मूत्रस्य प्रवर्त्तनम् ।
रक्तदोषहर यच्च तच्छीर्षाम्बुगदे शुभम् ॥
मुण्डयित्वा शिरस्तच्च च्छादयेदुष्णवाससा ।
पाययेन्नारिकेलस्य स्नेहच्चापि निरन्तरम ॥
सेवयेद्रसचूर्णञ्च स्तोकमात्र विचक्षण ॥
पीतमूली त्रिवृच्छ्यामे पथ्यामामलकी शटीम् ।
अनन्ता मधुक मुस्ता धन्याक कटुरोहिणीम् ।
हरिद्रे द्वे त्रिजातञ्च क्वाथयित्वा यथाविधि ।
यवक्षारेण सहित पाययेदस्य शान्तये ॥

### सलिलशोषणं चूर्णम् ।

रसचूर्णं यव[illegible] [illegible]तन्तु [illegible] नि[illegible]म् ।
भार्गीमेला तथा लघ्वीमभयामिन्द्रवारुणीम् ॥
समांशेन प्रगृह्याथ प्रयुञ्ज्यात् पयसा सह ॥
शीर्षाम्बु तन्निराकुर्य्याच्चूर्णं सलिलशोषणम् ॥

### कुङ्कुमाद्य घृतम् ।

कुङ्कुम शारिवा द्राक्षा जीवन्तीमभया विडम् ।
पत्र पटोलमूलञ्च सर्पिषा पाचयेद्भिषक् ॥
अस्य मात्रा प्रयुञ्जीत वीक्ष्य व्याधेर्बलाबलम् ।
सर्व्वान् शीर्षगदान् हन्यात् कुङ्कुमाद्याभिध घृतम् ॥

### रसतैलम ।

धुस्तूर धातकी मूर्व्वा मधूक मधुक विडम् ।
नागर नीलिनी कृष्णा कट्फल कटुक जलम् ॥
शाणमानेन नि क्षिप्य कटुतैलशरावके ।
सप्तते मृण्मये भाण्डे निशा सप्त च यापयेत् ॥
तत कल्कान् विनिर्हृत्य कज्जलीमर्द्धकार्षिकीम् ।
तत्र समिश्र्य शिरसि मुण्डिते तत् प्रयोजयेत् ॥
रसतैलमिद हन्यात् शीर्षाम्बाशु न संशय ।
व्याधितानां हितार्थाय हरेणैतत् समीरितम् ॥

### वह्निभास्करी रस ।

सुवर्णमभ्र वैक्रान्त रजत शाणमाणकम् ।
लौह रस गन्धकञ्च माक्षिक कर्षसम्मितम् ॥
रक्तचित्रकतोयेन तथा ब्राह्म्या रसेन च ।

चि सप्तखल सम्भाव्य कुर्य्याद्बल्वमिता वटी ॥
रसोऽय सर्व्वथा हन्ति मस्तिष्कोदकमाशु च ।
अन्याश्च शिरसो रोगान् वह्निस्तृणगणानिव ॥
वह्निवद्भासते यस्माद्वीर्य्येणैव रसोत्तम ।
ख्यात पृथ्वीतले तस्मादाख्यया वह्निभास्कर ॥

मस्तिष्कोदक शीर्षाम्बु ।

नैव शान्ति गते व्याधौ मस्तिष्कात् सलिल हरेत् ।
त्रिकूर्च्चकेन लघुना यत्नत कुशलो भिषक् ॥
लघु पुष्टिकर सर्व्व पानमन्न रसश्च यत् ।
मस्तिष्काम्बुनि तत्पथ्य विपरीत हिताय न ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
शिर्षाम्बुरोगाधिकार षट्सप्ततितमोऽध्याय ।

---

## सप्तसप्ततितमोऽध्याय ।

---

### मस्तिष्कवेपनाधिकार ।

मस्तिष्कवेपनस्य निदान लक्षणञ्च ।

शिरस्यभिहते तैस्तैर्मूर्च्छोह्लासवान्तय ।
जडत्व स्पन्दनह्रासो दौर्व्वल्य चलचित्तता ॥
वेपथु कर्णनादश्च मलिनत्व मुखस्य च ।
पृथुत्व तारकायाश्च धमनी बलवर्ज्जिता ॥

शीतलत्व शरीरस्य वैक्लव्य वचनस्य च ।
तथा पक्षवध स्याच्च गदोऽसौ शीर्षवेपन ॥

अथास्य चिकित्सा ।

मन स्थैर्य्यकर कर्म्म कार्य्य मस्तिष्कवेपने ।
शिरस्युष्णेऽतिशीतेन तोयेन सेचन हितम् ॥
मस्तिष्कवेपनध्वसि दन्तीस्नेहेन रेचनम् ॥
सजला बललाभाय मृतसञ्जीवनी सुधा ।
प्रयोक्तव्या यथामात्र बल्यमन्यच्च भेषजम ॥
वङ्कुरसमणा हरेच्छैत्यमङ्गाना कुशलो भिषक् ॥
त्रिवृता स्वर्णपत्रीच्च मुस्तक मधुक बलाम ।
हरिद्रे द्वे नागरञ्च त्रिफला कटुरोहिणीम् ॥
क्वाथयित्वा प्रयोक्तव्य शीर्षवेपनशान्तये ॥
बलाक्काथेन सिन्दूर शीर्षवेपथुनाशनम ॥
वातव्याधिहर सर्व्व भेषज तस्य शान्तिकृत् ॥

अत्र पथ्यादिव्यवस्था ।

पयोमासरसाद्यञ्च स्नायूना बलवर्द्धनम ।
अन्नपानादिक यच्च सुजर स्वादु सारकम् ॥
शीर्षवेपथुरोगिभ्यो हित तन्निखिल मतम् ।
विपरीत विजानीयात् कदाचन न शर्म्मदम् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
मस्तिष्कवेपनरोगाधिकार सप्तसप्ततितमोऽध्याय ।

## मस्तिष्कचयापचयाधिकार ।



देहस्वभावाद् दिष्ट्या च वर्द्धते मस्तुलुङ्गक ।
करोटिरपि बालाना यूनाञ्चापि कदाचन ॥
मस्तिष्कस्य करोटेश्च यदि वृद्धिर्द्वयोर्भवेत् ।
न चिह्न दृश्यते किञ्चित् प्रायश समवर्द्धनात् ॥
मस्तिष्कस्यैव चेद्वृद्धिर्न करोटेस्तथा भवेत् ।
तदा निपीडनात् तस्य जायन्ते विविधा रुज ॥
शिरसोऽतिरुजा तीव्रा दौर्ब्बल्य भ्रममूर्च्छने ।
पक्षाघातस्तथाक्षेप स्ततो मरणमेव च ॥
ह्रासमायाति मस्तिष्क देहदोषाददृष्टत ।
एकपार्श्वं ह्रसेत् तच्चेत्र शीघ्र जीवनक्षय ॥
समन्ताद्ध्रसनात् तस्य प्राणान्तस्त्वरया भवेत् ॥

### मस्तिष्कवृद्धेश्चिकित्सा ।

मस्तुलुङ्गस्य सद्वृद्धिर्जायते मरणाय हि ।
नौषध तत्र चेत् सेव्य तथापि च रसायनम् ॥
पेयमत्र पञ्चगव्य घृत मधुयुत तथा ॥

### मस्तिष्कह्रासस्य चिकित्सा ।

मस्तिष्कस्य यदि ह्रासो मरणायैव जायते ।
तथाप्यत्र सदा सेव्य भेषज परिवृंहणम् ॥

### चन्दनादिक्वाथ ।

चन्दनद्वितय मूर्व्वा श्यामाद्वन्द्व निशाद्वयम् ।
लाक्षा ब्राह्मी गैरिकञ्च जीवन्ती मधुक वरी ॥

वाजिगन्धा वचा कृष्णा काकोली जीवकर्षभौ ।
क्वाथ एषां पिबेत् प्रातर्मस्तिष्कह्रासशान्तये ॥
अत्र वातामयोक्तानि तैलानि च घृतानि च ।
अपस्मारगदोक्तानि तथा सेव्यानि सर्व्वदा ॥
मस्तिष्कस्य चये ह्रासे देहस्य पोषणं लघु ।
पानमत्र सुखाय स्याद्विपरीतं न शर्म्मणे ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
मस्तिष्कचयापचयाधिकारः ।

---

## अष्टसप्ततितमोऽध्यायः ।

— ० —

### अंशुघाताधिकारः ।

#### अंशुघातस्य निदानं लक्षणञ्च ।

चण्डांशोरंशुना शीर्षे तप्ते चण्डेन जायते ।
अंशुघाताभिधो व्याधिः प्राणिनां प्राणपीडनः ॥
तृष्णातिघोरा त्वगुष्णा भ्रमो नेत्रस्य रक्तता ।
मूत्रवेगश्च मूर्च्छायो हृल्लासो विषमा धरा ॥
श्वासकृच्छ्रं स्पर्शहानिराक्षेपश्चात्र सम्भवेत् ।
प्रायः कार्य्यव्यग्राणां भटानां जायते च सः ।
स अंशुघातः सर्दिगर्मीति बङ्गभाषा ।

अस्यारिष्ट लक्षणम् ।

नैल्यं हस्तपादस्य धमन्या चलालुमता ।
विक्षेपणञ्च गात्राणा मरणायाशुघातिन ।

अंशुघातिन अंशुघातरोगिण ।

अंशुघातस्य चिकित्सा ।

अङ्गावरणवासासि दूरे निक्षिप्य यत्नत ।
प्रच्छाये प्रवहद्वाते गन्धाढ्ये मनस प्रिये ॥
विविक्ते व्यक्तानभसि विहङ्गगणनादिते ।
शाययेत् सुखशय्यायामंशुघातिनमञ्जसा ॥
शीताम्बुसेक कुर्य्याच्च चन्दनाम्बु च पाययेत् ॥
नाधिक पाययेदम्बु सहसा कुशलो भिषक् ।
आच्छादयेत्सर्व्वमङ्ग शीततोयार्द्रवाससा ॥
सहस्रधारया स्नानमंशुघातगदापहम् ।
दन्त्युद्भवेन तैलेन रेचन हितमुच्यते ॥
अत्युष्णेनाम्भसा सिक्त वस्त्रमूर्णामय पृथु ।
ततो निष्कृत्य तोयञ्च श्रीवासपृषताप्लुतम् ॥
उष्णमेव च घाटाया निधायान्येन वाससा ।
शुष्केण वापि कदलीदलैर्नातिदृढ तत ॥
बद्धातिदाह यावच्च सरक्षेदतियत्नत ।
अनेन विधिना मूर्च्छा नश्यत्येव हि सत्वरम् ॥
अङ्गानामुष्मणो नाशे धमन्याश्च व्यतिक्रमे ।
स्वेदो विधेयो योज्या च मृतसञ्जीवनी सुधा ।

रत्नेश्वरो रस ।

वज्र वैक्रान्तमभ्रञ्च सिन्दूरमपि माक्षिकम् ।
मौक्तिक हेम रौप्यञ्च सममिक्षुजवारिणा ॥

शतावरीरसेनापि विदार्य्या स्वरसेन च ।
विभाव्य वटिका कुर्य्याद्गुञ्जामाना भिषक् ॥
त्रिफलाजलयोगेन रसो रत्नेश्वरो हरेत् ।
मस्तिष्कस्नायुजान् व्याधीनंशुघात विशेषत ॥
अंशुघाते प्रकर्त्तव्यो विधिर्मूर्च्छानिसूदन ॥

महाशिशिरपानकम् ।

शर्करा द्विपलोन्माना चन्दनञ्चाङ्ककार्षिकम् ।
जम्बीरजश्च पलिको रसो वर्य्याश्च तत्सम ॥
शाणञ्च मधुरीतैल प्रस्थार्द्धप्रमितेऽम्भसि ।
मिश्रयित्वा समालोड्य स्तोक स्तोक मुहुर्मुहु ॥
अंशुघातगदाक्रान्त पाययेत् सुखद हितञ्च ।
महाशिशिरनामेद पानक हरिणोदितम् ॥
अंशुघाते निवृत्तेऽपि मिथ्याहारविहारिण ।
अपस्मारादय प्रायो जायन्ते बहवो गदा ॥
तन्मुक्तोऽतो हित नित्य सेवेतावललाभत ।
मन प्रीतिप्रद कर्म्म विदधीत निरन्तरम् ॥

अत्र पथ्यापथ्यव्यवस्था ।

अन्नपानादिक स्निग्ध बलपुष्टिप्रद सरम् ।
हित स्यादंशुघातिभ्यो विपरीत न शर्म्मणे ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
अंशुघाताधिकारोऽष्टसप्ततितमोऽध्याय ।

## खालित्याधिकारः ।

---

### खालित्यस्य निदानम् ।

स्नायूनां बलनाशाच्च वातस्यातिप्रकोपणात् ।
कर्म्मणश्चातिसातत्यात् खालित्यं खलु जायते ॥
क्षोभ्यः पुंसामयं व्याधिः यौवनात् परतस्तथा ।
बाहुल्येनाभिजायेत सद्भिरेव निरूपितम् ॥

### तस्य लक्षणम् ।

शान्तिर्भारश्च हस्तस्य जायते तदनन्तरम् ।
अङ्गुल्याः स्खलनाद्धानिर्भवेदारब्धकर्म्मणः ॥
लेखनेऽक्षरदोषः स्याद् वाद्ये तालव्यतिक्रमः ।
प्रयत्नादपि दोग्धा गां दोग्धुं सम्यङ् न चार्हति ॥
खालित्यं सुचिरं यस्य विद्यते व्यवसायिनः ।
दृढं धारयितुं द्रव्यं न स शक्नोति मुष्टिना ॥

### खालित्यस्य चिकित्सा ।

स्वकर्म्मणो निवृत्तिर्हि खालित्ये खलु भेषजम् ।
कटुतिक्तकषायैः किं किं पथ्यस्य च सेवया ॥
तिमिङ्गिलगिलस्नेहः सप्ताहं परियोजितः ।
खालित्यं क्षपयेद् ब्रह्मन् स्नेहः शौकर एव वा ॥

ब्रह्मन्निति इन्द्रकृतसम्बोधनम् ।

### आदित्यपक्वं तैलम् ।

वला रास्नाश्वगन्धा च जीवकर्षभकौ वरा ।
जयन्ती मधुयष्टिश्च त्रिवृल्लवणपञ्चकम् ॥

एलाद्वय मुरामासी देवपुष्प सरोरुहम् ।
केशर नलिका कुष्ठ मुशली चन्दनद्वयम् ॥
प्रत्येक कार्षिक तैले क्षिप्ता प्रस्थप्रमाणके ।
माषान् षट् स्थापयेद्बुद्धा तत्पात्र सूर्य्यतेजसि ॥
तत कल्कान् समुद्धृत्य तैलमेतत् प्रयोजयेत् ।
अनेन प्रशम यान्ति खालित्यप्रमुखा गदा ॥

खालित्यारिरस ।

रौप्यमभ्र तुत्यकञ्च मर्द्दयेत् कन्यकाम्भसा ।
मुद्गमात्रा वटी कृत्वा पाययेत् सह सर्पिषा ॥
खालित्यारी रसो नाम खालित्य स्नायुज गदम् ।
वातश्लेष्मोद्भवाश्चापि गदानाशु निवारयेत् ॥
भैषजान्यत्र योज्यानि वातव्याधिहराणि च ॥
पथ्यमत्र विजानीयाद् द्रव्य पुष्टिबलप्रदम् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
खालित्याधिकार ।

# ऊनाशीतितमोऽध्यायः ।

— ० —

अथ स्त्रीरोगेषु ।

प्रदररोगाधिकार ।

प्रदरस्य विप्रकृष्ट निदानम् ।

विरुद्धमद्याध्यशनादजीर्णाद्
गर्भप्रपातादतिमैथुनाच्च ।
यानाध्वशोकादतिकर्षणाच्च
भाराभिघाताच्छयनाद् दिवा च ॥
त श्लेष्मपित्तानिलसन्निपातै-
श्चतु प्रकार प्रदर वदन्ति ॥

अत्र वातपित्तयोरादौ श्लेष्मणोऽभिधान श्लैष्मिकेऽतिप्रवृत्ति बोधनार्थम् ।

प्रदरस्य सामान्य लक्षणम ।

असृग्दर भवेत् सर्व्वं साङ्गमर्द्दं सवेदनम् ॥

( असृग्दर असृक् रक्त दार्य्यते चाव्यतेऽनेनेत्यसृग्दर अच्प्रत्ययान्तम् । सवेदन सशूलम् ) ।

श्लैष्मिक प्रदरस्य लक्षणम् ।

आम सपिच्छाप्रतिम सपाण्डु
पुलाकतोयप्रतिम कफात्तु ॥

आम अपक्वरसयुक्तम् । सपिच्छाप्रतिम शाल्मल्यादि-निर्य्यासतुल्य पिच्छिलमित्यर्थं । सपाण्डु सहशब्दोऽत्रेषदर्थे

तैनेषत्पाण्डु। पुलाकतोयप्रतिमं कफात्तु पुलाकस्तुच्छधान्यं तद्धावनतोयतुल्यमित्यर्थः। रुधिरं स्रवेदित्यर्थः।

पैत्तिकस्य तस्य लक्षणम्।

सपीतनीलासितरक्तमुष्णं
पित्तार्त्तियुक्तं भृशवेगि पित्तात्॥

सपीतनीलासितरक्तं पीतादिवर्णयुक्तम्। पित्तार्त्तियुक्तं दाहयुक्तम्। भृशवेगि वारंवारं प्रवृत्तियुक्तम।

वातिकस्य लक्षणम।

रूक्षारुणं फेनिलमल्पमल्पं
वातात् सतोदं पिशितोदकाभम्॥
पिशितोदकाभं मांसधावनतोयाभम।

सान्निपातिकस्य लक्षणम।

सक्षौद्रसर्पिर्हरितालवर्णं
मज्जप्रकाशं कुणपं त्रिदोषम्।
तच्चाप्यसाध्यं प्रवदन्ति तज्ज्ञा
न तत्र कुर्व्वीत भिषक् चिकित्साम्॥

तस्यातिप्रवृत्तावुपद्रवानाह।

तस्यातिवृत्तौ दौर्ब्बल्यं भ्रमो मूर्च्छा मदस्तथा।
दाहः प्रलापः पाण्डुत्वं तन्द्रा रोगाश्च वातजाः॥

असाध्यप्रदरव्याधिमतीमाह।

शश्वत् स्रवन्तीमास्राव तृष्णादाहज्वरान्विताम्।
दुर्ब्बलां क्षीणरक्ताञ्च तामसाध्यां विनिर्द्दिशेत्॥

चिकित्सानिवृत्त्यर्थं शुद्धार्त्तवस्य लक्षणमाह ।

मासान्निष्पिच्छदाहार्त्ति पञ्चरात्रानुवन्धि च ।
नैवाति बहुलानल्पमार्त्तवं शुद्धमादिशेत् ॥

निष्पिच्छदाहार्त्ति अपिच्छिलमदाहशूलम् । एतेन विकृतवातादिलक्षणरहितमित्यर्थं । पञ्चरात्रानुवन्धि प्रभूत-प्रवृत्त्या त्रिरात्रानुवन्धि ततो मध्यमप्रवृत्त्या पञ्चरात्रानुवन्धि तत पर कस्याश्चिचेत् स्रवति तदा स्वल्पप्रवृत्त्या षोडश दिनानि यावत् तदपि शुद्धमेव ।

शशासृक्प्रतिम यच्च यद्वा लाक्षारसोपमम् ।
तदार्त्तवं प्रशसन्ति यच्चाप्सु च विरज्यते ॥

प्रदरस्य चिकित्सा ।

दध्ना सौवर्च्चलाजाजीमधुक नीलमुत्पलम् ।
पिवेत् क्षौद्रयुत नारी वातासृग्दरपीडिता ॥

सौवर्च्चलजीरकयष्टिमधुनीलकमलपुष्पाण्येषा प्रत्येक माषद्वय सर्व्वमेकीकृत्य दध्ना कर्षचतुष्टयेन पिष्ट्वा तत्र माषाष्टक मधु क्षिप्त्वा पिवेत् ।

पिवेदैणेयक रक्त शर्करामधुसयुतम् ॥

कुशमूल समुद्धृत्य पेषयेत् तण्डुलाम्बुना ।
एतत् पीत्वा त्र्यहान्नारी प्रदरात् परिमुच्यते ॥

उडुम्बरफलस्याम्बु मरिचेन समन्वितम् ।
पीत श्लेष्मभव हन्ति प्रदर नात्र सशय ॥

दार्व्यादिक्काथ ।

दार्व्वीरसाञ्जनवृषाब्दकिराततिल्व
भल्लातकैरवकृतो मधुना कषाय ।

पीतो जयत्यतिबलं प्रदरं सशूलं
पीतासितारुणविलोहितनीलशुक्लम् ॥
अशोकवल्कलक्वाथशृतं दुग्धं सुशीतलम् ।
यथाबलं पिबेत् प्रातस्तीव्रासृग्दरनाशनम ॥
अलाबुफलचूर्णस्य शर्करासहितस्य च ।
मधुना मोदकं कृत्वा खादेत प्रदरशान्तये ॥
अपामार्गस्य संपिष्टं मूलं मरिचसंयुतम् ।
तोयेन पीतं शमयेदतिरक्तस्रुतिं ध्रुवम् ॥

अजातपुष्पस्यापामार्गस्य मूलं ग्राह्यम। अभावाज्जात-पुष्पस्यापि । बहुशो दृष्टफलोऽयं प्रयोगः ।

खड्गवर्त्तिः ।

अयष्टङ्कनं धुस्तूरं सारणा भाग एकशः ।
रसालवीजचूर्णस्य भागाश्चत्वार एव च ॥
घृतेन सह समद्य वर्त्ती रक्तिषडात्मिका ।
स्थूलमूला च सूक्ष्माग्रा सद्योजाता सुकोमला ॥
योनौ प्रवेशिता तूर्णं रक्तस्रावादिकं जयेत् ॥
भूम्यामलकचूर्णन्तु पीतं तण्डुलवारिणा ।
दिनत्रयान्तरेणैव स्त्रीरोगं नाशयेद्‌ध्रुवम् ॥
योनिदाहापहः प्रोक्तः सितयामलकोरसः ॥
रक्तपित्तविधानेन प्रदरांश्चाप्युपाचरेत् ।
रक्तातिसारवच्चाथ रक्तार्शोवत् तथैव च ।
असृग्दरे विशेषेण कुटजाष्टकमिष्यते ॥

न्यग्रोधाद्य घृतञ्चैव सितकल्याणक घृतम् ।
तथाशोकघृत चूर्ण चन्दनाद्यञ्च लौहकम् ॥
प्रदरारि तथा पुष्यानुगचूर्णं शिलाजतु-
वटिकेत्यवमादीनि शस्तानि प्रदरामये ॥
व्रतञ्च पोषण यच्च तदन्नमिह शर्म्मणे ।
विपरीत विजानीयाद् वर्ज्जनीय विशेषत ॥

---

## योनिव्यापदधिकार. ।

— o —

योनिरोगाणा निदानानि सज्ञा च ।
विंशतिर्व्यापदो योनौ निर्द्दिष्टा रोगसग्रहे ।
मिथ्याचारेण ता स्त्रीणा प्रदुष्टेनार्त्तवेन च ।
जायन्ते वीजदोषाच्च दैवाच्च शृणु ता पृथक ॥
उदावृत्ताया लक्षणम ।
सा फेनिलमुदावृत्ता रज कृच्छ्रेण मुञ्चति ॥
सा योनि' ।
वन्ध्याया विप्लुतायाश्च लक्षणम् ।
वन्ध्या निरार्त्तवा ज्ञेया, विप्लुता नित्यवेदना ॥
परिप्लुताया लक्षणम् ।
परिप्लुताया भवति ग्राम्यधर्म्मे रुजा भृशम् ॥
वातलाया लक्षणम् ।
वातला कर्कशा स्तब्धा शूलनिस्तोदपीडिता ॥
चतसृष्वपि चाद्यासु भवन्त्यनिलवेदना ॥

अनिलवेदनास्तोदादय। वातलायान्तु अतिवातवेदना बोद्धव्या।

लोहितक्षयाया लक्षणम्।

सदाह क्षरते रक्तं यस्या सा लोहितक्षया॥

प्रस्रंसिन्या लक्षणम्।

प्रस्रंसिनी स्रंसते च क्षोभिता दुष्प्रजायिनी॥

क्षोभिता विमर्द्दिता। स्रंसते स्वस्थानाच्च्यवते। दुष्प्रजायिनी दुष्टप्रजननशीला।

वामिन्या लक्षणम्।

सवातमुद्गिरेद्बीज वामिनी रजसंयुतम्॥

पुत्रघ्न्या लक्षणम।

स्थित स्थित हन्ति गर्भं पुत्रघ्नी रक्तसंस्रवात्॥

पुत्रशब्दोऽत्र अपत्योपलक्षक।

पित्तलाया लक्षणम्।

अत्यर्थं पित्तला योनिर्दाहपाकज्वरान्विता॥

चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत्॥

अत्यानन्दाया लक्षणम्।

अत्यानन्दा न सन्तोष ग्राम्यधर्मेण विन्दति॥

कर्णिन्या लक्षणम्।

कर्णिन्या कर्णिका योनौ श्लेष्मास्रृग्भ्या प्रजायते॥

अचरणाया लक्षणम।

मैथुनेऽचरणा पूर्व्वं पुरुषादतिरिच्यते॥

अतिरिच्यते रजो मुञ्चतीत्यर्थ।

अतिचरणाया लक्षणम्।

बहुशश्चातिचरणा तयोर्वीर्य्यं न तिष्ठति॥

बहुशो वारवारमतिरिच्यते। तयो रचरणातिचरणयो ।

श्लेष्मलाया लक्षणम्।

श्लेष्मला पिच्छिला योनि कण्डूयुक्तातिशीतला ॥
चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत् ॥

षण्ड्या लक्षणम ।

अनार्त्तवाऽस्तनी षण्डी खरस्पर्शा च मैथुने ॥

अस्तनी ईषत्स्तनी यस्या सा।

अण्डन्या लक्षणम् ।

महामेढ्रगृहीताया बालाया अण्डनी भवेत् ॥

महामेढ्र पुरुषस्तेन गृहीताया बालाया सूक्ष्मयोनि-च्छिद्राया अण्डनी अण्डवल्लमाना योनिर्भवति ।

महायोनिसूचीवक्त्रयोर्लक्षणम् ।

विवृतातिं महायोनि सूचीवक्त्रातिसंवृता ॥

त्रिदोषिण्या लक्षणम् ।

सर्व्वलिङ्गसमुत्थाना सर्व्वदोषप्रकोपजा ॥
चतसृष्वपि चाद्यासु सर्व्वलिङ्गोच्छ्रयो भवेत् ॥
पञ्चासाध्या भवन्तीह योनय सर्व्वदोषजा ॥

पञ्च षण्डीप्रभृतय ।

योनिरोगाणां चिकित्सा ।

योनिव्यापत्सु भूयिष्ठ शस्यते कर्म्म वातजित् ।
वस्त्यभ्यङ्गपरीषेकप्रलेपा पिचुधारणम् ।
वचोपकुञ्चिकाजाजीकृष्णावृषकसैन्धवम ।
अजमोदा यवक्षार चित्रक सितया सह ॥
पिष्ट्वा प्रसन्नयालोड्य खादेत् तद् घृतभर्जितम् ।

योनिव्यापत्तिहृद्रोगगुल्मार्शोविनिवृत्तये ॥
गुडूचीत्रिफलादन्तीकषायैः सेचनं हितम् ॥
नतवार्त्ताकिनीकुष्ठसैन्धवामरदारुभिः ।
तैलात् प्रसाधितात् कार्य्यः पिचुर्योनौ रुजापहः ॥
पित्तलानान्तु योनीनां सेकाभ्यङ्गपिचुक्रियाः ।
शीताः पित्तहराः कार्य्याः स्नेहनार्थं घृतानि च ॥
योन्यां बलासदुष्टायां सर्व्वं रूक्षोष्णमौषधम् ॥
पिप्पल्या मरिचैर्माषैः शताह्वाकुष्ठसैन्धवैः ।
वर्त्तिस्तुल्या प्रदेशिन्या योनौ श्लेष्मविशोधिनी ॥
प्रदेशिन्या तुल्या दैर्घ्येण परिणाहेन च ।
हिंस्राकल्कन्तु वातार्त्तां कोष्णमभ्यज्य धारयेत् ।
पञ्चवल्कस्य पित्तार्त्तां श्यामादीनां कफोत्तरां ॥
मूषिकमांससंयुक्तं तैलमातपभावितम् ।
अभ्यङ्गाद्धन्ति योन्यर्शः स्वेदस्तन्मांससैन्धवैः ॥
प्रस्रंसिनीं घृताभ्यक्तां क्षीरस्विन्नां प्रवेशयेत् ।
पिधाय वेसवारेण ततो बन्धं समाचरेत् ।
शुण्ठीमरिचकृष्णाभिर्धान्यकाजाजिदाडिमैः ।
पिप्पलीमूलसंयुक्तैर्वेसवारः स्मृतो बुधैः ।
योन्यान्तु पूयस्राविण्यां शोधनद्रव्यनिर्मितैः ।
सगोमूत्रैः सलवणैः पिण्डैः संपूरणं हितम् ॥
शोधनद्रव्याणि निम्बपत्रादीनि ।
वामिन्यां पूतियोन्याञ्च कर्त्तव्यः स्वेदनक्रमः ॥
नलकीजिङ्गिनीजम्बुधवत्वक्पञ्चपल्लवैः ।
कषायैः साधितः स्नेहपिचुः स्याद्विप्लुतापहः ॥

कर्णिन्या वर्त्तिका कुष्ठपिप्पल्यर्काग्रसैन्धवै ।
वस्तमूत्रे कृता धार्य्या सर्व्वञ्च कफनुद्धितम् ॥
तुवरीदलसिद्धेन सिद्धेन शतपुष्पया ।
तैलेन लेपात सभिन्ना योनिराशु प्रशाम्यति ॥
पेटिकामूललेपेन योनिर्भिन्ना प्रशाम्यति ॥
मुषवीमूललेपेन प्रविष्टा तु वहिर्भवेत ।
योनिर्मृषावसाभ्यङ्गान्नि सृता प्रविशेदपि ॥
लोध्रतुम्बीफलालेपो योनिदार्ढ्य करोति च ।
वेतसमूलनि क्वाथक्षालनञ्च तथैव च ॥
वचा नीलोत्पल कुष्ठ मरिचानि तथैव च ।
अश्वगन्धा हरिद्रा च गाढीकरणमुत्तमम् ॥
पञ्चपल्लवयष्ट्याह्वमालतीकुसुमैर्घृतम ।
रविपक्वमन्यथा वा योनिगन्धनिवारणम ॥
आर्त्तवादर्शने नारी मत्स्यान् सेवेत नित्यश ।
काञ्जिकञ्च तिलान् माषानुदश्विञ्च तथा दधि ॥
इक्ष्वाकुवीजदन्तीचपला गुडमदनकिरावयवशूकै ।
सस्नुक्क्षीरैर्वर्त्तिर्योनिगता कुसुमसजननी ॥
किराव सुरावीजम् ।
सकाञ्जिक जवापुष्प भृष्ट ज्योतिष्मतीदलम् ।
दूर्व्वापिष्टञ्च सम्प्राश्य पुष्पिणी रमणी भवेत् ॥
दूर्व्वापिष्ट तण्डुलयोगात् ।
अश्वगन्धाकषायेण सिद्धं दुग्ध घृतान्वितम् ।
ऋतुस्नाताङ्गना प्रात पीत्वा गर्भं दधाति हि ॥
पुष्योद्धृत लक्ष्मणाया मूल दुग्धेन कन्यया ।

पिष्टं पीत्वा ऋतुस्नाता गर्भं धत्ते न संशयः ॥
वटाङ्कुरञ्च मधुकं केशरं नीलमुत्पलम्।
बलाञ्च पयसा पीत्वा नारी गर्भं दधाति हि ॥
समष्टिपादमानया सितया सेयम्।
हेम्नो रौप्यस्य वा चूर्णं गव्येनाज्येन संयुतम्।
संसेव्य मासमासान् नारी गर्भं धत्ते न संशयः ॥

कुमारिका वटी।

कन्यासारं केशरं भोगिफेनं
सर्व्वं तुल्यं वङ्गं देवप्रियं च।
छित्वा खल्ले मर्द्दयेत् जीवनेन
मात्रा रक्ती द्वेऽनुपानं जलञ्च ॥
योनिव्यापद्‌ बाधकौ वेदनाञ्च
शूलं तूर्णं हन्ति गर्भाशयोत्थम्।
मक्कल्लोत्थं शूलमेषा कुमारी
रोगानन्यान् तूलराशिं यथाग्निः ॥

जयादिवटी।

मूलं रक्तोत्पलभवं विजयासारमेव च।
अपामार्गस्य मूलञ्च कन्यासारं समं समम् ॥
मर्द्दयित्वा वटीं कुर्य्यात् रक्तिद्वयमितां शुभाम्।
सेवनादाशु नश्यन्ति वेदना कटिसम्भवा ॥
जरायुशूलं बाधाञ्च तथा कष्टरजांसि च।
जयादिवटिका नाम महादेवेन भाषिता ॥

रज प्रवर्त्तिनी वटी ।

टङ्गन हिङ्गु कासीस कन्यासार समांशकम् ।
कुमारीस्वरसेनैव चणकप्रमिता वटी ॥
रजोरोध कष्टरजो वेदनाश्च तदुद्भवा ।
रजप्रवर्त्तिनी नाम वटी तूर्णं विनाशयेत् ॥
भाषिता नीलकण्ठेन वह्नि काष्ठचय तथा ॥

कुण्डलिनी वर्त्ति ।

छिन्नासारश्चतुर्भाग हेमसारैक भागिक ।
तथैक भागोऽहिफेनसारस्य घृतमर्द्दित ॥
षड्रक्ति प्रमिता वर्त्तिर्योनिमध्ये प्रयोजिता ।
रक्तस्राव तथा योनिव्यापद प्रदरादिकम् ॥
जयेत् कुण्डलिनी वर्त्ती तूर्णं सूर्य्यो तथा तम ॥

शिखर्य्यादिवर्त्ति ।

अपामार्गमूलचूर्णं फनिफेनस्य सारक ।
खदिर चूर्णगोधूम सर्व्वं रक्तिमित भवेत ॥
घृतेन सह संलिप्य शुभा कृत्वा च वर्त्तिकाम् ।
योनौ प्रवेशत शीघ्र रक्तस्रावादिक जयेत् ॥

कणक्मार ।

वन्ध्यधुस्तूरपत्राणा वस्त्रनिष्पीडित रसम् ।
जलस्वेदनयन्त्रेण सूर्य्यसन्तपनेन वा ॥
गाढीकुर्य्यात तथा यावन्मुद्रा तत्राङ्किता भवेत् ।
ततोऽवतार्य्य मधुना सुरया वाथ योजयेत् ॥
मृतसञ्जीवनी नाम्ना रचयेदति यत्नत ।
रक्तिपादमितामात्रा ज्ञेया रक्तिद्वयात्मिका ॥

हरेत् कणकसारोऽय धन्वन्तरि विनिर्म्मित ।
रोगान् जरायुजान् योनिव्यापद शूलमेव च ॥
मक्कल सत्रक कृच्छ्र मामवात सुदारुणम् ।
श्वास हृद्रोग मखिल तूलराशिमिवानल ॥
वह्नि सलेपनादेव वेदना सत्वर जयेत्।
मेरौ लेपन मात्रेण घर्म्माक्रान्तस्य देहिन ।
सत्वर नाशयेद घर्म्म घोर सूर्य्यो यथा तम' ।

वन्ध्य अपुष्पफलम।

सब्बिदासार ।

सब्बिदामञ्जरीपत्रस्वरम वस्त्रशोधितम ।
जलस्वेदन यन्त्रेण गाढमेव प्रकल्पयेत ॥
यावन्मुद्राङ्कण तत्र भवेद्वा गोलक तथा ।
रक्तिपाद मितादर्द्ध रक्तिमात्र प्रदापयेत ॥
द्वित्रिवार सेवनेन स्त्रीणा शूल जरायुजम् ।
योनिशूल द्रुत हन्यात् सब्बिदासार नामक ॥
प्रोक्तो गङ्गनाथेन फलवर्त्ति प्रयोगत ।
मात्रया रक्तिमितया योनिव्यापत् प्रणश्यति ॥
आमवातश्च द् साध्यस्तमकश्वास एव च ।
तथा चायामक शीघ्र सिंहाक्रान्तो यथा करी ॥
सब्बिदामञ्जरी पत्र स्वरसाभावतोऽथवा ।
शुष्क मञ्जरी पत्राणा क्वाथो देयो यथाविधि ॥

नों गर्भप्रदभेषजकथनावसरे गर्भाजनकभेषजमाह ।

रसाञ्जन हैमवती वय स्था
चूर्णीकृत शीतजलेन पीतम् ।

रजोविनाश नियत करोति

प्रज्ञात का गर्भसमागमस्य ॥

पाठापत्रमृतुस्नाता पीत्वा गर्भं न धारयेत् ॥

पुष्पिणी पयसा पीत्वा पिप्पली टङ्गण विडम् ।

न गर्भं धारयेज्जातु भिषग्भिरिति निश्चितम् ॥

मारनालं जयापत्र पुष्पिणी या त्र्यह पिवेत् ।

तस्याश्च विफल वीज वीजमुप्त यथोषरे ॥

योनिकन्दस्य निदान लक्षणञ्च ।

दिवास्वप्नादतिक्रोधाद्व्यायामादतिमैथुनात् ।

चताच्च नखदन्ताद्यैर्वाताद्या कुपिता यथा ॥

पूयशोणितसङ्काश लकुचाकृतिसन्निभम् ।

जनयन्ति यदा योनौ नाम्ना कन्द स योनिज' ॥

लकुचाकृतिसन्निभ लकुचाकार लकुचो डहुफलम् ।

वातजादि भेदेन तस्य रूपम् ।

रुक्ष विवर्णं स्फुटित वातिक त विनिर्द्दिशेत् ।

दाहरागज्वरयुत विद्यात पित्तात्मकन्तु तम् ॥

नीलपुष्पप्रतीकाश कण्डूमन्त कफात्मकम् ।

सर्व्वलिङ्गसमायुक्त सन्निपातात्मक वदेत् ॥

योनिकन्दस्य चिकित्सा ।

गैरिकाम्राास्थिजन्तुघ्नरजन्यञ्जन कट्फला ।

पूरयेद् योनिमेतेषा चूर्णं क्षौद्रसमन्विते ॥

त्रिफलाया कषायेण सक्षौद्रेण च सेवयेत् ।

प्रमदा योनिकन्देन व्याधिना परिमुच्यते ॥

चाक्षोर्मास सपदि बहुधा खण्डखण्डीकृत तत्

तैले पाच्य भवति नियत यावदेतन्न सम्यक्।
या तैलाक्त वसनमनिश योनिभागे दधाना
हन्ति व्रीडाकरभगफल नात्र सन्देहबुद्धि ॥

तन्त्रविशेषोक्तास्य बाधकस्य लक्षणम्।

रक्तमाद्री तथा षष्ठ्यङ्कुरौ जलकुमारक।
बाधका इति चत्वार प्रजाजननबाधका ॥

तत्र रक्तमाद्या लक्षणम्।

व्यथा कट्यां तथा नाभेरध पार्श्वे स्तनेऽपि च।
रक्तमाद्रीप्रदोषेण जायते फलहीनता ॥
मासमेक द्वय वापि ऋतुयोगो भवेद् यदि।
रक्तमाद्रीप्रदोषेण फलहीना तदा भवेत् ॥

षष्ठ्या लक्षणम।

नेत्रे हस्ते भवेज्ज्वाला योनौ चैव विशेषत।
लालासयुक्तरक्तञ्च षष्ठीवाधकयोगत ॥
मासैकेन भवेद् यत्र ऋतुस्नानद्वय तथा।
मलिना रक्तयोनि स्यात् षष्ठीवाधकयोगत ॥

अङ्कुरस्य लक्षणम।

उद्वेगो गुरुता देहे रक्तस्रावो भवेद् बहु।
नाभेरधो भवेच्छूल चाङ्कुर स तु बाधक ॥
ऋतुहीना चतुर्मास त्रिमास वा भवेद् यदि।
क्षशाङ्गी करपादे च ज्वाला चाङ्कुरयोगत ॥

जलकुमारस्य लक्षणम्।

सशूला च सगर्भा च शुष्कदेहाल्परक्तिका।
जलकुमारदोषेण जायते फलहीनता ॥

या कृशाङ्गी भवेत् स्थूला बहुकालमृतुस्तथा ।
गुरुस्तनी स्वल्परक्ता जलकुमारदूषणात् ॥
गर्भे जातेऽपि तस्य पतन स्यात् ।

वाधकस्य चिकित्सा ।

रसाञ्जन विड वह्नि शीतेन पयसा सह ।
पीत्वा वाधकरोगेण सद्यो नारी प्रमुच्यते ॥
मरिचेन प्रजावत्या मूल पीताम्भसा सह ।
पीत्वा वाधकनिर्मुक्ता नारी गर्भ दधाति हि ॥
प्रजावती श्रोलटकम्बल इति यस्या प्रसिद्धि ।
अन्तर्भवन्ति व्यापत्सु योनि सर्व्वेऽपि वाधका ।
अतस्तासा विधानेन भिषगेतानुपाचरेत् ॥

समस्त योनिरोगाणा चिकित्सा ।

योनिरोगवती नारी कुर्य्यान्नातिरतौ मतिम् ।
भूयसी विकृति योनिर्यत सा जनयेद्ध्रुवम् ॥
सा अतिरति ।
जीरकद्वितय कृष्णा श्यामानन्ता निशाद्वयम् ।
वासारैन्धवपथ्याश्च यवक्षारो यमानिका ॥
एषा चूर्ण घृते किञ्चिद् भृष्टा खण्डेन मोदकम् ।
कृत्वा खादेद् यथावह्नि योनिरोगादिमुच्यते ॥

त्रिफलाद्य घृतम् ।

त्रिफलां त्रिवृता शुण्ठी गुडूची सपुनर्नवाम् ।
विदारिका हरिद्रे द्वे रास्ना मेदा शतावरीम् ॥
कल्कीकृत्य घृतप्रस्थ पचेत् क्षीरे चतुर्गुणे ।
तत्सिद्ध पाययेन्नारी योनिरोगप्रशान्तये ॥

कुमारकल्पद्रुमकं फलकल्याणकं घृतम् ।
तथा सोमघृतं शस्तं योनिरोगं प्रशान्तये ॥

अत्र पथ्यापथ्य व्यवस्था ।

बृंहणं पोषणं वङ्क्षेदोंपनञ्चानुलोमनम ।
अन्नं पानं योनिरोगी सेवेतान्यद्विवर्ज्जयेत् ॥

## योनिकण्ड्वधिकारः ।

तस्य निदानम् ।

योनौ वलासे सङ्कुद्धे जरायुविकृतिस्तथा ।
वस्तिद्वारेऽर्व्वुदे जाते दुर्नामगदतोऽपि च ॥
योने शिराणां प्रसूतेर्वातवत्याश्च योषितः ।
रजः प्रवृत्तिसमये पुरुषेणातिसङ्गमात् ॥
गर्भप्रागुद्भवे चापि योनिकण्डू प्रजायते ।
वार्द्धक्य एव नारीणां सा बाहुल्येन सम्भवेत् ॥

तस्या लक्षणम् ।

योनौ कण्डूश्च तोदश्च रौक्ष्यं शुष्कत्वमेव च ।
योनिकण्डूगदस्यैतल्लक्षणं भिषजो विदुः ॥
उष्णानुपशयो व्याधिः शीतोपशय एव हि ॥

तस्याश्चिकित्सा ।

योनिकण्डूगदे देयमादौ स्निग्धविरेचनम् ।
भेषजं रक्तदोषघ्नं बलदायि रसायनम् ॥

अनन्ता सारिवा लोध्र त्रिवृतामिभपिप्पलीम् ।
क्वाथयित्वा पिबेत् तोय योनिकण्डूप्रशान्तये ॥

शिवकरी वटी ।

लौहद्वामृतसाराख्य फणिफेन वन विडम् ।
वह्नितोयेन समर्द्ध माषमात्र वटी चरेत् ॥
वटी शुभकरी ह्येषा योनिकण्डूप्रशान्तिकृत् ॥

टङ्गनादिचूर्णम् ।

टङ्गन पञ्चलवण तुगाक्षीरी शिलाजतु ।
नागर मुस्तक वह्नि पद्मक नीलमुत्पलम् ॥
जीवन्ती मधुक द्राक्षा गुडूची चन्दनद्वयम् ।
चूर्णयित्वाम्भसा नारी पिबेत् कण्डूप्रशान्तये ॥
योतिकण्डूगदे योनौ शीततोयाभिषेचनम् ।
स्नेहस्वेदश्च कर्त्तव्यो वस्तिश्चोत्तरसञ्ज्ञित ॥
योनिव्यापद्गदोक्तानि भेषजानीह योजयेत् ॥

अत्र पथ्यापथ्यानि ।

यद् यद् वह्निकर पाच्य तथा वातानुलोमनम् ।
अन्न पानञ्चात्र योज्य विपरीत सुखाय न ॥

## योन्याक्षेपाधिकारः ।

— o —

### योन्याक्षेपस्य निदान लक्षणञ्च ।

मारुते विगुणे योनौ स्पर्शस्यातिप्रवृद्धता ।
विक्षेपणं मुखस्यास्यास्तत्स्पर्शे तीव्रवेदना ॥
योन्याक्षेपवती नारी न सहेत रतिक्रियाम् ।
यदि गच्छेद्बलाद्भर्त्ता ता सातिव्यथिता भवेत् ॥
नोपसर्पति भर्त्तारं सदा साध्वसविह्वला ।
पत्या तिरस्कृता दुःखान्मृत्युमात्मन इच्छति ।
उद्वेगो वह्निहानिश्च निद्राल्पत्व तथा क्रमात् ॥
वस्तिदाहो व्यथा पृष्ठेऽर्शांसिश्वक्रमणेऽपि च ॥
दौर्व्वल्य वर्णहानिश्च तथोत्साहस्य सक्षय ।
योन्याक्षेपगदस्यैता प्रोक्ता आकृतयो बुधै ॥

### योन्याक्षेपस्य चिकित्सा ।

नागदेन गद साध्य शस्त्रेणाय प्रसाध्यते ।
शस्त्र प्रयोजयेदत्र भिषक् शस्त्रविशारद ॥
पाययित्वा सुरा तीव्रा गदिनीं सद्यशायिनीम् ।
उत्तानामथवा कृत्वा योनौ शस्त्र प्रवेश्य च ॥
क्षौमन्त त्वरयाच्छिद्य मुख योनेर्विदार्य्य च ।
तूलेनाकृष्य वध्नीयात्सुदृढस्तच्चिकित्सक ॥

### क्षौमन्त योन्यङ्गभेदम् ।

अवरोधे तु मूत्रस्य वर्त्तयेत् तच्छलाकया ।
वेदना वारयेद्वैद्य फणिफेनप्रयोगत ॥

पुनर्वस्त्रद्वयान्ते ता पाययित्वा सुरा भिषक् ।
तूल नि सार्य्य योनिस्थ सुख योनि प्रसार्य्य च
तदध कर्त्तन कुर्य्यादङ्गुलार्द्धप्रमाणत ।
इत्येव कर्म्मणा व्याधिर्योन्याक्षेप प्रशाम्यति ॥

अत्र पथ्यापथ्यानि ।

अत्र पथ्य घृत दुग्ध गोधूम चणकादय ।
यूषश्छागादिसम्भूत उग्रवीर्य्य हित न हि ॥



## योन्यङ्कुरवृद्ध्यधिकारः ।

योन्यङ्कुरवृद्धेर्निदानम् ।

दुष्टवातेन रक्तस्य दोषाच्च करकर्म्मणा ।
योन्यङ्कुरस्य सवृत्तिर्जायते परमोत्कटा ॥

तस्याश्चिकित्सा ।

रोगिणी चेतनाहीना कृत्वाच्छिन्द्यात् भगाङ्कुरम् ।
बध्नीयादपि वन्धन्या पथ्येनैनाञ्च वर्त्तयेत् ॥

# जरायुरोगाधिकारः।

---

## जरायुरोगस्य निदानम्।

नैरन्तर्य्येण गर्भस्य सम्भवात् स्रावतोऽस्य च।
शैत्यादार्द्राभिवासाच्च पापोपदशतस्तथा॥
अतिव्यवायत पापमेहिना सह सङ्गमात्।
जरायुरोगो जायेत लक्षाण्यस्य निशामय॥

## तस्य लक्षणम्।

ज्वरोऽग्निमान्द्यमास्यस्य नीलत्व त्रिकतोदनम्।
व्यथा निम्नोदरे वस्तावुष्णत्व गोरव तथा॥
मुहुर्मूत्रप्रवृत्तिश्च योनित क्लेदसस्रुति।
मलस्यातिप्रवृत्तिश्च ततस्तद्रोध एव च॥
दुर्नामानि च दौर्ब्बल्य शिरोरुग् वमथुस्तथा।
जरायुरोगे जायन्ते आकारा एवमादय॥

आकारा लक्षणानि।

## जरायुरोगस्य चिकित्सा।

जरायुरोगे प्रथम देय स्निग्धविरेचनम्।
हितोऽत्रोत्तरवस्तिश्च सुखोष्णेनाम्भसा तथा॥
अधोदेहस्य सलिले चोष्णे समज्जन हितम्॥
अतसीवीजकल्केन तप्तेन सह सर्पिषा।
पुटलेपो हित प्रोक्त उदराधो मनीषिभि॥
नारिकेलजतैलेन रससिन्दूरसेवनम्।
जरायुरोग शमयेत् तथा पथ्यानुवर्त्तनम्॥

### शारिवादि चूर्णम् ।

शारिवाद्वयमञ्जिष्ठाचित्वद् द्राक्षा वरी बला ।
शतपुष्पा कणाद्वन्द्व टारु दारुनिशा निशा ॥
क्षारत्रत्र चतुर्ज्जात तथा लवण पञ्चकम ।
फलत्रय मुस्तकञ्च मधुक विश्वभेषजम् ॥
चूर्णयित्वा पिबेन्नारी प्रात प्रात प्रसन्नया ।
जरायुरोग प्रशम यात्यनेन न सशय ॥

### प्रमदानन्दो रस ।

अयो रौप्य तथा हेम रस गन्ध शिलाजतु ।
वह्निद्रवेण सम्मर्द्य रक्तिमाना वटीश्वरेत् ।
नाम्नासौ प्रमदानन्दो रसो ह्याशु विनाशयेत् ।
त्रिफलातोययोगेन सर्व्वाञ्जरायुजान् गदान् ॥
जरायुरोगिणी नारी न च सेवेत पूरुषम् ।
न खादेदुग्रवीर्य्याणि नापि कुर्य्यादतिश्रमम् ॥

---

## अण्डाधारगदाधिकारः ।

— o —

### अण्डाधारगदस्य निदानम् ।

रमणातिशयाच्छैत्यादभिघाताद्विषादपि ।
अण्डाधारगद कृच्छ्रो जायते चाहिताशनात ॥

अण्डाधारगदस्य लक्षणम्।

उदरोरुव्यथा कृच्छ्रा मूत्रस्याल्पत्वरक्तते।
ज्वरारोचकहृल्लासा अरतिर्बलसच्चय ॥
धमनी वेगिनी क्षुद्रा जिह्वा रक्तोज्ज्वला तथा।
अण्डाधारगदस्यैता प्रोक्ता आकृतयो बुधै ॥

तस्य चिकित्सा।

बलप्रवर्द्धकं यद्यत् पवनस्यानुलोमनम्।
अण्डाधारगदे तत्तत् प्रयोक्तव्य भिषग्वरै ॥

पटोलादिक्वाथ।

पटोल मधुकं द्राक्षा धन्याकं विश्वभेषजम्।
पीतमूली बला रास्ना मूर्व्वामिन्द्रयव विडम् ॥
कणाद्वन्द्व निशाद्वन्द्वमिन्द्रपुष्प त्रिजातकम्।
क्वाथयित्वा पिबेत्तोयमण्डाधारगदे सदा ॥
विवञ्च मधुना ज्ञेयमण्डाधारगदे हितम् ॥

योषिद्वल्लभो रस।

सिन्दूर मभ्र रौप्यञ्च वैक्रान्त हेम टङ्कनम्।
वराम्भसा भावयित्वा वल्लमात्रा वटीश्चरेत् ॥
योषिद्वल्लभनामाय रसोऽण्डाधारसम्भवान्।
निहन्ति निखिलान् रोगान् हर्य्यक्षो हरिणानिव ॥

चन्दनाद्य चूर्णम्।

चन्दनद्वितय मूर्व्वा नीलिन्येलाद्वय मुरा।
कणाद्वय त्रिवृद्द्राक्षा मासी मधुकं मुस्तकम्।
एतत् सर्व्वं चूर्णयित्वा डिम्बाधारगदापहम्।
उष्णेन पयसा नारी पिबेन्नित्य सुखार्थिनी ॥

अत्र पथ्यापथ्यानि ।

पथ्यमत्र हविर्दुग्ध शालि शक्तो यवस्तिल ।
छागमासरसश्चैव द्रव्यमुग्र न शर्म्मणे ॥

---

## गर्भस्राव-गर्भपाताधिकारः ।

गर्भस्य स्रावपातयोर्निदानम् ।

ग्राम्यधर्म्माध्वगमनयानायासप्रपीडनै ।
ज्वरोपवासोत्पतनप्रहाराजीर्णधावनै ॥
वमनाच्च विरेकाच्च क्षुन्यनाद् गर्भपातनात् ।
तीक्ष्णवीर्य्योष्णकटुकतिक्तरूक्षनिषेवणात् ॥
वेगाभिघाताद्विषमादासनाच्छयनाद्भयात् ।
गर्भे पतति रक्तस्य सशूल दर्शन भवेत् ॥

गर्भे पतति गर्भस्य स्रावपातयो पूर्व्वरूपम् । पतति स्रावेण पातेन वा पतिष्यति ।

गर्भस्रावपातयोरवधि ।

आचतुर्थात् ततो मासात् प्रस्रवेद् गर्भविद्रव ।
तत स्थिरशरीरस्य पात पञ्चमषष्ठयो ॥

आचतुर्थात् मासात् चतुर्थमासपर्य्यन्त गर्भस्य विद्रवः शोणितरूपो गर्भ स्रवति । शोणितमिति भोजवचनात् । ततश्चतुर्थमासात्पर स्थिरशरीरस्य कठिनशरीरस्य पात ।

गर्भपातस्य दृष्टान्त ।

गर्भोऽभिघातविषमाशनपीडनाद्यै
पक्व द्रुमादिव फल पतति क्षणेन ॥

यथा वृन्तलग्न पक्व फलमभिघातेनाकाल एव पतति तथा गर्भोऽप्यभिघातादिना अकाले पतति ।

गर्भस्रावस्य चिकित्सा ।

गुर्व्विण्या गर्भतो रक्त स्रवेद्द यदि मुहुर्मुहु ।
तन्निरोधाय सा दुग्धमुत्पलादिशृत पिबेत् ॥

उत्पलादिगणो यथा—

उत्पल नीलमारक्त कह्लार कुमुद तथा ।
श्वेताम्भोजञ्च मधुकमुत्पलादिरय गण ॥
सशीलितो हरत्येव दाह तृष्णा हृदामयम् ।
रक्तपित्तञ्च मूर्च्छाञ्च तथाच्छर्द्दिमरोचकम् ॥

गर्भपातस्योपद्रवा ।

प्रस्रसमाने गर्भे स्याद दाह शूलञ्च पार्श्वयो ।
पृष्ठरुक् प्रदरानाहौ मूत्रसङ्गश्च जायते ॥

प्रस्रसमाने पतति ।

गर्भस्य स्थानान्तरगमने उपद्रवा ।

स्थानात् स्थानान्तर यस्मिन् प्रयात्यपि च जायते ।
आमपक्वाशयादौ तु क्षोभ पूर्व्वेऽप्युपद्रवा ।

तस्य चिकित्सा ।

स्निग्धशीतक्रियास्तेषु दाहादिषु समाचरेत् ॥
कुशकाशोरुबूकाणा मूलैर्गोक्षुरकस्य च ।
शृत दुग्ध सितायुक्त गर्भिण्या शूलहृत् परम् ॥

खदंष्ट्रामधुकक्षुद्राम्लानै सिद्ध पय पिबेत् ।
शर्करामधुसयुक्त गर्भिणीवेदनापहम् ॥
समङ्गा धातकीपुष्प गैरिकञ्च रसाञ्जनम् ।
सर्व्वरस तथाजाजी मधुकञ्च विचूर्णयेत् ॥
तच्चूर्ण मधुना लिह्याद् गर्भपातप्रशान्तये ॥
समङ्गा लज्जालु ।
कशेरूत्पलशृङ्गाटकल्क वा पयसा पिबेत् ।
कल्क वचारसोनाभ्या हिङ्गुसौवर्च्चलान्वितम् ॥
आनाहे तु पिबेद् दुग्ध गुर्व्विणी सुखिनी भवेत् ॥
कुशादिपञ्चमूलाना कल्केन विपचेत् पय ।
तत् पयो गुर्व्विणी पीत्वा मूत्रसङ्गाद्विमुच्यते ॥
अत पर मासानुमासिकमुच्यते ।
प्रथमे मासि गर्भे तु यदा भवति वेदना ।
चन्दन शतपुष्पा च शर्करा मदयन्तिका ॥
एतानि समभागानि पिष्ट्वा तण्डुलवारिणा ।
पाययेत् पयसालोड्य गर्भिणी मात्रया भिषक् ॥
तथा तिलान् पद्मकञ्च शालूक शालितण्डुलान् ।
क्षीरेण पिष्ट्वा क्षीरेण सिताक्षौद्रान्वितेन च ॥
आलोड्य पाययेन्नारी तत सम्पद्यते शुभम ।
तस्मिन् सुजीर्णे दातव्य भोजन क्षीरसयुतम् ॥
द्वितीये मासि गर्भे तु यदा भवति वेदना ।
तदोत्पलस्य कल्कन्तु सशृङ्गाट कशेरुकम् ॥
तण्डुलोदकपिष्टन्तु पाययेत् तण्डुलाम्बुना ।
निवार्य्य गर्भशूलञ्च स्थिर गर्भं करोति च ॥

तृतीये क्षीरकाकोली काकोल्यामलकीफलम् ।
पिष्टमुष्णोदकेनैतत् पाययेद्गर्भिणी भिषक् ॥
शाल्यन्न पयसा जीर्णे भोजयेदनुगर्भिणीम् ।
तथा पद्मोत्पल कुष्ठ शालूकञ्च समांशिकम् ॥
सितोदकेन पिष्टा तु क्षीरेणालोड्य पाययेत् ।
तेन शूल निवर्त्तेत न गर्भो व्यथते ध्रुवम् ॥
चतुर्थे तु विधानञ्च पाययेदिदमौषधम् ।
पिष्टोत्पलञ्च शालूक कण्टकारित्रिकण्टकम् ॥
यथाग्निमात्रया काले गर्भिणी पयसा सह ।
तथा गोक्षुरक सिद्धो वालक नीलमुत्पलम् ॥
पिष्टा क्षीरेण पातव्य गर्भशूलनिवारणम् ॥
पञ्चमे मासि गर्भे तु यदा भवति वेदना ।
तत्र नीलोत्पल वीरा पिष्टा क्षीरेण पाचनम ॥
घृतक्षौद्रान्वित पीत्वा गर्भस्य च रुजा हरेत् ।
तथा नीलोत्पल नारी काकोलीसमभागिकम् ॥
शीततोयेन पिष्टा च क्षीरेणालोड्य पाययेत् ।
अनेन विधिना गर्भ स्थिर स्याद् रुक् प्रशाम्यति ॥
षष्ठे मासि यदा गर्भे वेदना जायते तदा ।
मातुलुङ्गस्य वीजानि प्रियङ्गु चन्दनोत्पलम् ॥
क्षीरेणालोड्य पातव्य गर्भशूलनिवारणम ।
तथा पियालवीजानि मृद्वीका लाजशक्तव ॥
एतत् सुशीतल काले पीत्वा च सुखमश्नुते ॥
पिष्टा क्षीरेण शूलार्त्ता गर्भिणी या सुखार्थिनी ॥
कपित्थ कसुकाम्मूल सलाज शर्करायुतम् ।

शीततोयेन सपिष्ट चौरेणालोड्य पाययेत् ॥
पीत्वा हन्त्यबला शीघ्र शूल गर्भसमुद्भवम् ॥
अष्टमे तु यदा मासे गर्भे भवति वेदना ।
तदा पिष्ट्वा तु धन्याक पाययेत्तण्डुलाम्बुना ॥
शूल निवर्त्तते तेन गर्भ सधार्य्यते स्त्रिया ॥

एव पलाशस्य दल सुपिष्ट
सपीय तोयेन सुशीतलेन ।
अत्यन्तघोराष्टममासगर्भ-
व्यथातुरा यान्ति सुख तरुण्य ॥

गर्भिण्या नवमे मासे यदा भवति वेदना ।
एरण्डमूल काकोली पिष्ट्वा शीतोदकेन च ॥
पीत्वा शूलाद्विमुच्येत तदा नारी न सशय ।
तथा पलाशबीजञ्च सकाकोलीकुरुण्टकम् ॥
भक्तेन वारिणा पिष्ट्वा गर्भशूल व्यपोहति ॥
अथवा दशमे मासि वेदना जायते यदा ।
तदा नीलोत्पल यष्टिमधुक मुद्गसयुतम् ॥
ससित चाम्भसा पीत्वा चौरेणालोड्य पाययेत् ।
दोषञ्च नाशयेदेष शूल गर्भसमुद्भवम ॥
तथा चैकादशे मासि गर्भे भवति वेदना ।
मधुक पद्मकञ्चैव मृणाल नीलमुत्पलम ।
शीततोयेन पिष्ट्वा तु चौरेणालोड्य पाययेत् ।
तेनैव वेदनातीव नाशमायाति सत्वरम ॥
चौरिकामुत्पल कुष्ठ समङ्गामूलक सिता ।
पिबेदेकादशे मासि गर्भिणी शूलशान्तये ॥

सिता विदारी काकोली तथा चीरविदारिका।
गर्भिणी द्वादशे मासि पिबेच्छूलघ्नमौषधम्॥
कुशकाशोरुवूकाणा मूलैर्गोचुरकस्य च।
शृत दुग्ध सितायुक्त गर्भिण्या शूलनुत परम्॥

कशेरुशृङ्गाटकजीवनीय-
पद्मोत्पलैरण्ड शतावरीभि।
सिद्ध पय शर्करया विमिश्र
सस्थापयेद्गर्भमुदीर्णवेगम॥

मधुना च्छागदुग्धेन कुलालकरकर्द्दम।
अवश्य स्थापयेद्गर्भ चलित पानयोगत॥
गर्भे शुष्के तु वातेन बालानाञ्चापि शुष्यताम्।
सितामधुककाश्मर्य्यैर्हितमुत्थापने पय॥
चन्दन शारिवा लोध्र मृद्वीकाशर्करान्वितम्।
क्काथ कृत्वा प्रदातव्य गर्भिण्या ज्वरनाशनम्॥
एरण्डमूलममृता मञ्जिष्ठा रक्तचन्दनम्।
दारु पद्मयुत क्काथो गर्भिण्या ज्वरनाशन॥
आम्रजम्बूत्वच क्काथ लेहयेल्लाजशक्तुभि।
अनेन लीढमात्रेण गर्भिणी ग्रहणी जयेत्॥
सम्प्राप्ते चाष्टमे मासि मैथुन परिवर्ज्जयेत्।
यदि गच्छति दुर्मेधा काममोहादचेतन॥
विपद्यते तदा गर्भो गर्भिणी च विनश्यति।
मूकोऽन्धो वधिरो वापि जायते कुब्ज एव वा॥
गर्भचिन्तामणिरसो रसो गर्भविलासक।
भेषजान्येवमादीनि गर्भदोषापहाणि हि॥

# मूढ़गर्भाधिकारः।



मूढगर्भस्य निदानसम्प्राप्तिपूर्व्वक लक्षणम्।

मूढ करोति पवन खलु मूढगर्भ
शूलञ्च योनिजठरादिषु मूत्रसङ्गम्।
भुग्नोऽनिलेन विगुणेन तत स गर्भ
सङ्ख्यामतीत्य बहुधा समुपैति योनिम्॥

पवन स्वहेतुभिर्दुष्टस्ततो मूढो रुद्धगति मूढगर्भ रुद्धगति गर्भ योन्यादिषु शूल मूत्रसङ्गञ्च करोति। ततस्तेनानिलेन विगुणेन रुद्धगतिना स गर्भो भुग्न कुटिलीकृत चतुर्भि प्रकारैर्यातीत्यर्थ। अष्टभिरपरे। तत्सङ्ख्यानिरासार्थमाह सङ्ख्यामतीत्य उक्ता सङ्ख्यामतिक्रम्य बहुभि प्रकारैर्योनि समुपैति।

तत्र प्रथमतश्चतुर प्रकारानाह।

सङ्कीलक प्रतिखुर परिघोऽथ बीज
तेषूर्द्ध्वबाहुचरणै शिरसा च योनौ।
सङ्गी च यो भवति कीलकवत् स कीलो
दृश्यै खुरै प्रतिखुर स हि कायसङ्गो॥
गच्छेद्भुजद्वयशिरा स च बीजकाख्यो
योनौ स्थित स परिघ परिघेण तुल्य॥

सशब्दोऽत्र छन्दोऽनुरोधात् कप्रत्ययोऽपि स्वार्थे तेन कील इति नाम। तस्य लक्षणमाह ऊर्द्ध्वबाहुचरणैरिति उत्थितैर्बाहुचरणशिरोभि र्योनौ स सङ्गोभवति स कील कीलकाख्यो मूढगर्भ। दृश्यैर्बहिर्गतै खुरै' खुरसाधर्म्यात् खुरशब्देनात्र हस्तौ

पादौ च गच्छेते। तेन हस्तद्वयपादद्वयैर्वहिर्गतैः प्रतिखुर। स हि कायसङ्गी हस्तपादेतरकायेन सक्तो भवति। यो गर्भ भुजद्वयशिरा भुजद्वयमध्ये शिरो यस्य एतादृक् गच्छेन्निसरेत् तच्छेषेण शरीरेण सक्तो भवति स वीजकाख्य। परिघवद् योनावित्यादि। भोजोऽप्येता गतौ पठति तथाहि। ऊद्धबाहु शिर पादैरुद्ध्राद् योनिमुखन्तु य। प्रतिकीलोपमस्थित्या स कोलकेति सञ्ज्ञित। अधस्तात् पार्श्वतो वापि तथैवाकुञ्चितोऽपि वा। यो नि स्तृत्य मुख योनेर्स्तैय प्रतिखुरस्तु स। योनिद्वारात्तु निर्गच्छेद् यश्चैक सशिरोभुज। तमाहुर्वीजक नाम मूढगर्भ चिकित्सका॥ योनिमावृत्य यस्तिष्ठेत् परिघो गोपुर यथा। तथान्तर्गर्भमायान्त विद्यात् परिघसञ्ज्ञकमिति॥

अष्टौ प्रकारानाह।

द्वार निरुध्य शिरसा जठरेण कश्चित्<br>
कश्चिच्छरीरपरिवर्त्तनकुब्जकाय।<br>
एकेन कश्चिदपरस्तु भुजद्वयेन<br>
तिर्य्यग्गतो भवति कश्चिदवाङ्मुखोऽन्य।<br>
पार्श्वापवृत्तगतिरेति तथैव कश्चि-<br>
दित्यष्टधा भवति गर्भगति प्रसूतौ॥

अयमर्थ। कश्चित् शिरसा योनिद्वार निरुध्य सक्तो भवति १। कश्चित् जठरेण तन्निरुध्य सक्तो भवति २। कश्चित् कुब्जेन कायेन कुब्जेन पृष्ठेन वा सक्तो भवति ३।४। कश्चिदेकेन भुजेन निःसृतेन सक्तो भवति ५। कश्चिद्भुजद्वयेन तिर्य्यग्भूत्वा सक्तो भवति ६। अन्यो ग्रीवाभङ्गादधोभूतेन मुखेन सक्तो भवति ७।

कश्चित् पार्श्वेन अपवृत्ता निरुद्धा गतिर्यस्य एवंविधो योनि द्वारमेति ८ इत्यष्टधा गतय ।

### असाध्यमूढगर्भिणीलक्षणम् ।

अपविद्धशिरा या तु शीताङ्गी निरपत्रपा ।
नीलोद्गतशिरा हन्ति सा गर्भं स च ता तथा ॥

अपविद्धशिरा अवनतशिरा शिरोऽपि धारयित न शक्नोति यावत् । निरपत्रपा लज्जाशून्या । नीलोद्गतशिरा कुक्षौ नीला उद्गता शिरा यस्या सा ।

### मृतस्य गर्भस्य लक्षणमाह ।

गर्भास्पन्दनमावीना प्रणाश श्यावपाण्डुता ।
भवेदुच्छ्वासपूतित्व शूनतान्तर्मृते शिशौ ॥

गर्भास्पन्दन गर्भस्याचलत्व आवीना प्रणाश प्रसववेदना-नामभाव । अथवा आवीशब्देन प्रसवलिङ्गानि मूत्रकफ-प्रसेकादीनि कथ्यन्ते तेषा नाश । शूनता अन्तर्मृतस्य शिशोरुच्छूनता ।

### गर्भस्य मरणे हेतुमाह ।

मानसागन्तुभिर्मातुरुपतापै प्रपीडित ।
गर्भो व्यापद्यते कुक्षौ व्याधिभिश्च प्रपीडित ॥

मानस उपतापो वन्धुधनक्षयादिना दु खम । आगन्तु-रुपताप प्रहारादिना । व्यापद्यते म्रियते ।

### अपरमसाध्यगर्भिणीलक्षणमाह ।

योनिसवरण सङ्ग कुक्षौ मक्कल्ल एव च ।
हन्यु स्त्रिय मूढगर्भा यथोक्ताश्चाप्युपद्रवा ॥

योनिसंवरणं व्याधिविशेषः। सङ्गः कुक्षौ गर्भस्य लग्नता अप्रवृत्तिरिति यावत्। कुक्षौ मक्कल्ल रक्तमारुतजः शूलविशेषः। यद्यपि प्रसूताया मक्कल्लशूलमुक्तं तथापि सुश्रुते प्रजातायाश्चेति चकारेणाप्रसूताया अपि मक्कल्लशूलं भवति इति बोद्धव्यम्। उपद्रवा आक्षेपककासश्वासादयः।

योनिसंवरणस्य निदानादिकम्।

वातलान्यन्नपानानि ग्राम्यधर्मं प्रजागरम्।
अत्यर्थं सेवमानाया गर्भिण्या योनिमार्गगः॥
मातरिश्वा प्रकुपितो योनिद्वारस्य संवृतिम्।
कुरुते रुद्धमार्गत्वात् पुनरन्तर्गतोऽनिलः॥
निरुणद्ध्याशयद्वारं पीडयन् गर्भसंस्थितम्।
निरुद्धवदनोच्छ्वासो गर्भश्चाशु विपद्यते॥
रुजा संरुध्य हृदयं नाशयत्यथ गर्भिणीम्।
योनिसंवरणं नाम व्याधिरेष प्रचक्ष्यते॥

मूढगर्भस्य चिकित्सा।

याभिः सङ्कटकालेऽपि बहुशो नार्य्यः प्रसाविताः।
सम्यग् लब्धयशस्तास्तु नार्य्यः कुर्य्युरिमां क्रियाम्॥
गर्भे जीवति मूढे तु गर्भं यत्नेन निर्हरेत्।
हस्तेन सर्पिषाक्तेन योनेरन्तर्गतेन सा॥
मृते तु गर्भे गर्भिण्या योनौ शस्त्रं प्रवेशयेत्।
शस्त्रशास्त्रार्थविदुषी लघुहस्ता भयोज्झिता॥
सचेतनन्तु शस्त्रेण न कथञ्चन दारयेत्।
स दीर्य्यमाणो जननीमात्मानञ्चापि मारयेत्॥
नोपेक्षेत मृतं गर्भं मुहूर्त्तमपि पण्डितः।

तदाशु जननी हन्ति प्रभूतान्न यथा पशुम् ॥

प्रभूतान्नमतिमात्रमन्नम् ।

यद् यदङ्ग हि गर्भस्य योनौ सक्तन्तु तद्भिषक् ।
सम्यग् विनिर्हरेच्छित्वा रक्षेन्नारी प्रयत्नत ॥
शङ्कुना निर्हरेद् गर्भमथवा यौग्मशङ्कुना ॥
एव निर्हृतशल्याना सिञ्चेदुष्णेन वारिणा ।
ततोऽभ्यक्तशरीराया योनौ स्नेह विधारयेत् ॥
एव मृद्वी भवेद् योनिस्तच्छूलञ्चोपशाम्यति ॥
तुम्बीपत्र तथा लोध्र समभाग सुपेषयेत् ।
तेन लेपो भगे कार्य्य शीघ्र स्याद् योनिरक्षणम् ॥
प्रसूता वनिता वृद्धकुक्षिह्रासाय सपिबेत् ।
प्रातर्मथितसमिश्र त्रिसप्ताहात् कणाजटाम् ॥
या सूते षोडशे वर्षे तत्र या धृतगर्भिका ।
मृत्युस्तस्या सपुत्रायास्तत्पितुश्चापि सम्मत ॥
सर्व्वौषध्यम्बुना स्नान सर्व्वा दैवी क्रियामपि ।
प्रयत्नेन प्रकुर्व्वीत तद्दोषस्य प्रशान्तये ॥

मक्कल्लस्य निदान सम्प्राप्तिर्लक्षणञ्च ।

वनिताया प्रसूताया वातो रूक्षेण वर्द्धित ।
तीक्ष्णोष्णशोषित रक्त रुद्ध्वा ग्रन्थि करोति हि ॥
नाभ्यध पार्श्वयोर्वस्तौ वस्तिमूर्द्धनि वापि वा ।
ततश्च नाभौ वस्तौ च भवेच्छूल तथोदरे ॥
भवेत् पक्वाशयाध्मान मूत्रसङ्गश्च जायते ।
एतद्भिषग्भिरुदित मक्कल्लामयलक्षणम् ॥

मक्कल्लशूल प्रसूताया अप्रसूतायाश्चापि भवति

मक्कल्लस्य चिकित्सा।

सञ्चूर्णित यवक्षार पिबेत् कोष्णेण वारिणा।
सर्पिषा वा पिबेन्नारी मक्कल्लस्य निवृत्तये॥
पिप्पली पिप्पलीमूल मरिच गजपिप्पली।
नागर चित्रक चव्य रेणुकेलाजमोदिकाम्॥
सर्षपो हिङ्गु भार्गी च पाठेन्द्रयव जीरका।
महानिम्बश्च मूर्व्वा च विषा तिक्ता विडङ्गकम्॥
पिप्पल्यादिर्गणो ह्येष कफमारुतनाशन।
क्वाथमेषा पिबेन्नारी लवणेन समन्वितम॥
गुल्मशूलज्वरहर दीपनञ्चामपाचनम।
मक्कलशूलगुल्मघ्न कफानिलहर परम्॥
प्रसूता युक्तमाहार विहारञ्च समाचरेत्।
व्यायाम मैथुन क्रोध शीतसेवाञ्च वर्ज्जयेत्॥
मिथ्याचारात् सूतिकाया यो व्याधिरुपजायते।
स कृच्छ्रसाध्योऽसाध्यो वा भवेत् तत् पथ्यमाचरेत्॥

सूतिकारोगस्य निदानम्।

मिथ्योपचारात सक्लेशाद्विषमाजीर्णभोजनात्।
सूतिकायास्तु ये रोगा जायन्ते दारुणाश्च ते॥

मिथ्योपचारात् अनुचिताचरणात् प्रवातादि सेवनात्। सक्लिश्यन्ते उत्क्लिश्यन्ते दोषा अनेनेति सक्लेशो दोषजनकमात्रम्। दारुणा कष्टसाध्या।

अङ्गमर्द्दो ज्वर कम्प पिपासा गुरुगात्रता।
शोथ शूलातिसारौ च सूतिकारोगलक्षणम्॥
ज्वरातिसारशोथाश्च शूलानाहबलक्षया।

तन्द्रारुचिप्रसेकाद्या वातश्लेष्मसमुद्भवा ॥
कृच्छ्रसाध्या हि ये रोगा चीणमासबलाश्रिता ।
ते सर्व्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवा ॥

सूतिकाभवत्वेन सूतिकानाम्ना ते रोगा आश्रया श्रितयोरभेदोपचारात्। ते चाप्युपद्रवा इति त एव ज्वराद्य उक्ताना रोगाणामन्यतम प्रधानीकृत्योपद्रवाश्च भवन्तीत्यर्थ ।

सूतिकारोगस्य चिकित्सा ।

सूतिकारोगशान्त्यर्थं कुर्य्याद् वातहरी क्रियाम् ।
दशमूलकृत क्वाथ कोष्ण दद्याद् घृतान्वितम ॥

सूतिकादशमूलम् ।

शालपर्णी पृश्निपर्णी वृहतीद्वय गोक्षुरम् ।
दासी प्रसारणी विश्व गुडूची मुस्तक तथा ॥
निर्हन्ति सूतिकारोग ज्वर दाहसमन्वितम ॥
सहाचरकृत क्वाथ पिप्पलीचूर्णसयुत ।
दीपनो ज्वरदोषामसूतिकारोगनाशन ॥
भद्रोत्कटाद्य लेह्य घृत भद्रोत्कटादिकम ।
सौभाग्यशुण्ठीनामान मोदक जीरकादिकम ॥
सूतिकारि रसञ्चापि बुद्ध्वा युञ्ज्यात तदामये ॥
प्रसूता सार्द्धमासान्ते दृष्टे वा पुनरार्त्तवे ।
सूतिकानामहीना स्यादिति धन्वन्तरेर्मतम् ॥
उपद्रवविहीना च बलवह्निसमन्विता ।
ऊर्द्ध चतुर्थी मासेभ्य परिहार विवर्ज्जयेत् ॥

---

# स्तनरोगाधिकारः ।

— ० —

## स्तनरोगस्य सम्प्राप्ति ।

सक्षीरौ वाप्यदुग्धौ वा दोष प्राप्तस्तनौ स्त्रिया ।
रक्त मासञ्च सन्दूष्य स्तनरोगाय कल्पते ॥
पञ्चानामपि तेषा हि रक्तज विद्रधि विना ।
लक्षणानि समानानि वाह्यविद्रधिलक्षणै ॥

पञ्चाना वातपित्तकफसन्निपातागन्तुजानाम । आगन्तुस्तन रोगोऽभिघातेन शल्येन च बोद्धव्य । रक्तजस्यासम्भव स्वभावात् ।

गुरुभिर्विविधैरन्नैर्दुष्टैर्दोषे प्रदूषितम् ।
क्षीर धात्र्या कुमारस्य नानारोगाय कल्पते ।
कषाय सलिलप्लावि स्तन्य मारुतदूषितम् ॥
कट्वम्ललवण पीतराजीमत् पित्तसयुतम् ॥
कफदुष्ट घन तोये निमज्जति च पिच्छिलम् ।
द्विलिङ्ग द्वन्द्वज विद्यात् सर्व्वलिङ्ग त्रिदोषजम् ॥
अदुष्टञ्चाम्बुनिक्षिप्तमेकीभवति पाण्डरम् ।
मधुरञ्चाविवर्णञ्च प्रसन्न तत् प्रशस्यते ॥

## स्तनरोगस्य चिकित्सा ।

शोथ स्तनोत्थितमवेक्ष्य भिषग् विदध्याद्
यद्विद्रधावभिमत बहुधा विधानम् ।
आमे विदाहिनि तथैव च तस्य पाके
तस्या स्तनौ सततमेव हि निर्दुहीत ॥

पित्तघ्नानि तु शीतानि द्रव्याण्यत्र प्रयोजयेत् ।
जलौकोभिर्हरेद्रक्तं न स्तनावुपनाहयेत् ॥
उपनाहयेत् स्वेदयेत् ।
लेपो विशालामूलेन हन्ति पीडां स्तनोत्थिताम् ।
निशाकनककल्काभ्यां लेपः प्रोक्तः स्तनार्त्तिहा ॥
निरीक्ष्य विकृतं स्तन्यं दोषमालोच्य वै भिषक् ।
तद्दोषशमनं पानमन्नमौषधमाचरेत् ॥
बृंहणीयं विधिं कुर्य्याद् दृष्ट्वाऽदुग्धौ स्तनौ स्त्रियाः ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
प्रदरादिस्त्रीरोगाधिकारः ऊनाशीतितमोऽध्यायः ।

---

# अशीतितमोऽध्यायः ।

—— o ——

## बालरोगाधिकारः ।

### बालरोगाणां निदानम् ।

धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा ।
दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति ॥
मिथ्याहारविहारिण्या दुष्टा वातादयस्त्रयः ।
दूषयन्ति पयस्तेन जायन्ते व्याधयः शिशोः ॥
वातदुष्टं शिशुः स्तन्यं पिबन् वातगदातुरः ।
क्षामस्वरः कृशाङ्गः स्याद्बद्धविण्मूत्रमारुतः ॥

स्विन्नो भिन्नमलो बाल कामलापित्तरोगवान्।
तृष्णालुरुष्णसर्व्वाङ्ग पित्तदुष्ट पय पिबन् ॥
श्लेष्मदुष्ट पिबन् क्षीर लालालु श्लेष्मरोगवान्।
निद्रार्हितो जड शूनो वक्राच्च्छर्द्दन शिशु ॥
ज्वराद्या व्याधय सर्व्वे महता ये पुरेरिता।
बालानामपि ते तद्वद् बोध्यव्या भिषगुत्तमै ॥
बालानामेव ये रोगा भवन्ति महता न च।
तालुकण्टकमुख्यास्तानवधारय यत्नत ॥

तत्रादौ तालुकण्टकलक्षणमाह।

तालुमांसे कफ क्रुद्ध कुरुते तालुकण्टकम्।
तेन तालुप्रदेशस्य निम्नता मूर्द्ध्नि जायते ॥
तालुपातात् स्तनद्वेष कृच्छ्रात्पानं शकृद्द्रवम्।
तृडक्षिकण्ठास्यरुजा ग्रीवादुर्द्धरता वमि ॥

महापद्ममाह।

विसर्पस्तु शिशो प्राणनाशनो व[illegible]।
पद्मवर्णो महापद्मरोगो दोषत्रयोद्भव ॥
शङ्खाभ्यां हृदय याति हृदयाच्च गुदं व्रजेत् ॥
पद्मवर्णो लोहितपद्मवर्ण । तत्र शीर्षजो विसर्पं शङ्खाभ्यां हृदय याति हृदयाच्च गुद व्रजेत्। एव वस्तिजो गुदं याति गुदतो हृदय हृदयाच्छिरो यातीति बोद्धव्यम्।

कुकूणकमाह।

कुकूणक क्षीरदोषाच्छिशूनामक्षिवर्त्मनि।
जायते सरुजं नेत्र कण्डूरस्स स्रवेन्मुहु ॥

शिशु कुर्य्याल्ललाटाक्षिकूटनासावघर्षणम् ।
शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षम ॥

पारिगर्भिकमाह ।

मातु कुमारो गर्भिण्या स्तन्य प्राय पिवन्नपि ।
कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमै ॥
युज्यते कोष्ठवृद्ध्या च तमाहु पारिगर्भिकम् ।
रोग परिभवाख्यञ्च युञ्ज्यात् तत्राग्निदीपनम् ॥
पिबन्नपीति अपिशब्दादपिबन्नपि ।

क्षुद्ररोगे च कथिते त्वजगल्लग्रहिपूतने ॥
वातेनाध्मापिता नाभि सरुजा तुण्डिरुच्यते ।
बालस्य गुदपाकाख्यो व्याधि पित्तेन जायते ॥

अथ दन्तोद्भेदकान् रोगानाह ।

दन्तोद्भेद शिशो सर्व्वरोगाणां कारण स्मृतम् ।
विशेषाज्ज्वरविड्भेदकासाक्षेपशिरोरुजाम् ॥
पोथकीस्यन्दवान्तोना विसर्पस्य च जायते ।
कारणमित्यन्वय । पोथकी वर्त्मरोगविशेष ।
बालग्रहा अनाचारात् पीडयन्ति शिशु यत ।
तस्मात् तदुपसर्गेभ्यो रक्षेद्बाल प्रयत्नत ॥
कुलेषु येषु नेज्यन्ते देवा पितर एव च ।
ब्राह्मणा साधवो वापि गुरवोऽतिथयस्तथा ॥
निवृत्तशौचाचारेषु तथा कुत्सितवृत्तिषु ।
निवृत्तभिक्षाबलिषु भग्नकांस्यगृहेषु च ॥
ते वै बालावृतास्तान् हि ग्रहा हिंसन्त्यशङ्किता ॥

सामान्यग्रहजुष्टाना रोगानाह ।

क्षणादुद्विजते बाल क्षणात् त्रस्यति रोदिति ।
नखैर्दन्तैर्दारयति धात्रीमात्मानमेव च ॥
ऊर्द्ध निरीक्षते दन्तान् खादेत् कूजति जृम्भते ।
भ्रुवौ क्षिपति दन्तौष्ठ फेन वमति चासकृत् ॥
क्षामोऽति निशि जागर्त्ति शूनाक्षो भिन्नविट्स्वर ।
मासशोणितगन्धो च न चाश्नाति यथा पुरा ॥
दुर्ब्बलो मलिनाङ्गश्च नष्टसत्त्वश्च जायते ।
सामान्यग्रहजुष्टस्य लक्षण समुदाहृतम् ॥

विशिष्टग्रहजुष्टाना लक्षणानि ।

तत्र स्कन्दग्रहजुष्टस्य लक्षणम ।

स्रस्ताङ्ग क्षतजगन्धिक स्तनद्विड्
वक्रास्यो हतचरणैकपक्षनेत्र ।
उद्विग्न' ससलिलचक्षुरल्परोदी
स्कन्दार्त्तो भवति च गाढमुष्टिवन्ध ॥

स्कन्दापस्मारजुष्टस्य लक्षणम् ।

नि सज्ञो भवति पुनर्लभेत सज्ञा
संस्तब्ध करचरणैश्च नृत्यतीव ।
विण्मूत्रे सृजति चिरेण जृम्भमाण
फेन वा सृजति तत्सखाभिजुष्ट ॥

तत्सखाभिजुष्ट स्कन्दापस्मारयुक्त ।

शकुनिजुष्टस्य लक्षणम् ।

स्रस्ताङ्गो भयचकितो विहङ्गगन्धि
सास्रावव्रणपरिपीडित समन्तात् ।

स्फोटैश्च प्रचिततनु सदाहपाकै
र्विज्ञेयो भवति शिशु क्षत शकुन्या ॥

रेवतीजुष्टस्य लक्षणम् ।

रक्ताक्षो हरितमलोऽतिपाण्डुदेह
श्यावो वा मुखकरपाकवेदनार्त्त ।
गृह्णाति व्यथिततनुश्च कर्णनास
रेवत्या भृशमभिपीडित कुमार ॥

पूतनाजुष्टस्य लक्षणम् ।

अतीसारो ज्वरस्तृष्णा तिर्य्यक्प्रेक्षणरोदनम् ।
नष्टनिद्रस्तथोद्विग्नो ग्रस्त पूतनया शिशु ॥

अन्धपूतनाजुष्टस्य लक्षणम् ।

छर्द्दि कासो ज्वरस्तृष्णा वसागन्धोऽतिरोदनम् ।
स्तन्यद्वेषोऽतिसारश्च चान्धपूतनया भवेत् ॥

शीतपूतनाजुष्टस्य लक्षणम् ।

[illegible]चकित सुवेपमान
सलीनो भवति व्यथान्त्रकूजयुक्त ।
स्रस्ताङ्गो भृशमतिशीर्य्यते च शीतात्
त ब्रूयाद्भिषगथ शीतपूतनार्त्तम् ॥

मुखमुण्डिकाजुष्टस्य लक्षणम् ।

प्रसन्नवर्णवदन शिराभिरभिसवृत ।
मूत्रगन्धो च बह्वाशी मुखमुण्डतिकाग्रही ॥

नैगमेयजुष्टस्य लक्षणम् ।

य फेन वमति विनम्यते च मध्ये
सोद्वेगो विहसति चोद्ववीक्षमाण ।

कूजेच्च प्रयतमथो वसासृगन्धो
नि सङ्गो भवति स नैगमेयजुष्ट ॥
अङ्गप्रत्यङ्गदेशेषु रुजा यत्रास्य जायते।
मुहुर्मुहु स्पृशति त स्पृश्यमाने च रोदिति ॥
निमीलिताक्षो मूर्द्धस्थे रोगे नो धारयेच्छिर ।
वस्तिस्थे मूत्रसङ्गार्त्त क्षुधा त्वऽपि गच्छति ॥
विण्मूत्रसङ्गवकल्याच्छर्द्याध्मानान्त्रकूजने ।
कोष्ठे व्याधीन् विजानीयात् सर्व्वत्रस्थाश्च रोदने. ॥
शिशोस्तीव्रामतीव्राञ्च रोदनाल्लक्षयेद्रुजम् ॥

बालरोगाना चिकित्सा।

त्रिविध कथितो बाल क्षीरान्नोभयवर्त्तक ।
स्वास्थ्य ताभ्यामदुष्टाभ्या दुष्टाभ्या रोगसम्भव ॥
क्षीरपस्यौषध धात्र्या क्षीरान्नादस्य चोभयो.।
अन्नेन वा शिशौ देय भेषज भिषजा सदा ॥
मात्रया लङ्घयेद्धात्री शिशोर्नेष्ट विशोषणम्।
सर्व्वं निवार्य्यते बाले स्तन्यन्तु न निवार्य्यते ॥
मात्रया लङ्घयेत् लघु भोजयेत्।
यो बालोऽचिरजात स्तन्य न गृह्णाति तस्य सद्यसैव।
धात्रीमधुघृतपथ्याकल्केनाघर्षयेज्जिह्वाम् ॥
स्तन्याभावे पयश्छाग गव्य वा तद्गुण पिवेत् ॥
मृत्पिण्डेनाग्नितप्तेन क्षीरसिक्तेन सोष्मणा।
स्वेदयेदुत्थिता नाभि शोथस्तेनोपशाम्यति ॥
नाभिपाके निशालोध्रप्रियङ्गुमधुक शृतम्।
तैलमभ्यञ्जने शस्तमेभिर्वाप्यवचूर्णनम् ॥

भेषज पूर्व्वमुद्दिष्ट नराणा यज्ज्वरादिषु ।
कार्य्यं तदेव बालाना मात्रा तत्र कनीयसी ॥
त एव दोषा दूष्याश्च ज्वराद्या व्याधयश्च ते ।
अतस्तदेव भैषज्य मात्रा तत्र कनीयसी ॥
विरेकवस्तिवमनान्यृते कुर्य्याच्च नात्ययात् ॥

अत्ययात् विनाशकरकष्टाद्दते विना विरेकवस्तिवमनानि न कुर्य्यात् ।

भद्रमुस्ताभयानिम्बपटोलमधुकै क्रत. ।
क्वाथ काष्ण शिशोरेष नि शेषाज्ज्वरनाशन. ॥

चातुर्भद्रिका ।

घनकृष्णारुणाशृङ्गीचूर्णं चौद्रेण सयुतम् ।
शिशोर्ज्वरातिसारघ्न कास श्वास वमि हरेत् ॥

विल्वञ्च पुष्पाणि च धातकीना
जल सलोध्र गजपिप्पली च ।
क्वाथावलेहौ मधुना विमिश्रौ
बालेषु योज्यावतिसारितेषु ॥

समङ्गाधातकीलोध्रसारिवाभि श्टत जलम् ।
दुर्धरेऽपि शिशोर्देयमतीसारे समाक्षिकम् ॥

समङ्गा लज्जालुमूलम् ।

विडङ्गान्यजमोदा च पिप्पलीतण्डुलानि च ।
एषामालोड्य चूर्णानि सुखतप्तेन वारिणा ॥
आमे प्रवृत्तेऽतिसारे कुमार पाययेद्भिषक् ॥
मोचारस समङ्गा च धातकी पद्मकेशरम् ।
पिष्टैरेतैर्यवागू स्याद्रक्तातीसारनाशिनी ॥

नागरातिविषामुस्ता बालकेन्द्रयवै श्रृतम्।
कुमार पाययेत्प्रात सर्व्वातीसारनाशनम्॥
लाजा सयष्टीमधुका शर्करा चौद्रमेव च।
तण्डुलोदकयोगेन चिप्र हन्ति प्रवाहिकाम्॥
रजनी सरलो दारु वृहती गजपिप्पली।
पृश्निपर्णी शताह्वा च लीढ़ा माचिकसर्पिषा॥
दीपन ग्रहणी हन्ति मारुतार्त्ति सकामलाम्।
ज्वरातीसारपाण्डुघ्न बालाना सर्व्वरोगनुत्॥
पौष्करातिविषा वासा कणा शृङ्गीरस लिहेत्।
मधुना मुच्यते बाल कासै पञ्चभिरुत्थितै॥
द्राक्षावासाभयाकृष्णाचूर्ण चौद्रेण सर्पिषा।
लीढ श्वास निहन्त्याशु कासञ्च तमक तथा॥
चूर्ण कटुकरोहिण्या मधुना सह योजयेत्।
हिक्का प्रशमयेत् चिप्र छर्द्दिञ्चापि चिरोत्थिताम्॥
आम्रास्थिलाजसिन्धूत्थ सचौद्र छर्द्दिनुद्भवेत्॥
पीत पीत वमेद् यस्तु स्तन्य तन्मधुसर्पिषा।
द्विवार्त्ताकीफलरस पञ्चकोलञ्च लेहयेत्॥
घृतेन सिन्धुविश्वैलाहिङ्गुभार्गीरजो लिहन्।
आनाह वातिक शूल हन्यात् तोयेन वा शिशु.॥
बिल्वमूलकषायेण लाजा चैव सशर्कराम्।
आलोड्य पाययेद्बाल छर्द्यतीसारनाशनम्॥
गृहधूमनिशाकुष्ठराजिकेन्द्रयवै शिशो।
लेपस्तक्रेण हन्याशु सिध्मपामाविचर्च्चिका:॥
सारिवा तिल लोध्राणा कषायो मधुकस्य च।

सञ्चाविणि मुखे शस्तो धावनार्थं शिशो सदा ॥
अश्वत्थत्वग्दलक्षौद्रैर्मुखपाके प्रलेपनम् ॥
पिप्पलीत्रिफलाचूर्णं घृतक्षौद्रपरिप्लुतम् ।
बालो रोदिति यस्तस्मै लीढ दद्यात् सुखावहम् ।
हरीतकी वचाकुष्ठ कल्क माक्षिकसयुतम् ।
पीत्वा कुमार स्तन्येन मुच्यते तालुकण्टकात् ॥

फलत्रिक लोध्रपुनर्नवे च
सशृङ्गवेर बृहतीद्वयञ्च ।
आलेपन श्लेष्महर सुखोष्ण
कुकूणके कार्य्यमुदाहरन्ति ॥

दन्तपालीन्तु मधुना चूर्णेन प्रतिसारयेत् ।
धातकीपुष्पपिप्पल्योर्धात्रीफलरसेन वा ॥
दन्तोद्भवेषु रोगेषु न बालमतियन्त्रयेत् ।
स्वयमेवोपशाम्यन्ति जातदन्तस्य ते गदा ॥
विभीतकफल कुष्ठ हरिताल मन शिला ।
एभिस्तैल विपक्तव्य बालाना पूतिकर्णके ॥
सुवर्णं गैरिकस्यापि चूर्णानि मधुना सह ।
लीढ्वा सुखमवाप्नोति क्षिप्र हिक्कार्दित शिशु ॥
पारिगर्भिकरोगे तु पूज्यते वह्निदीपनम् ॥
कणोषणसिताक्षौद्र सूक्ष्मैलासैन्धवै कृत ।
मूत्रग्रहे प्रयोक्तव्य शिशूना लेह उत्तम ॥
दुष्टमन्नादिभिर्मातु स्तन्य मपिबत शिशो ।
यदा प्रकुपित पित्त गुद समभिधावति ॥
तदा सञ्जायते तत्र जलौकोदरसन्निभ ।

व्रण सदाहो व्यक्तोष्मा तदास्य स्याज्ज्वर पर ॥
हरित पीतक वापि वर्च्चस्तेन भवेद्ध्रुवम्।
व्रण पश्चारुजो नाम व्याधि परमदारुण' ॥
चन्दन शारिवे द्वे च शङ्खिनीति समायुतै । ;
पश्चारुजे प्रलेपोऽयमवलेहश्च शस्यते ॥
दाडिमस्य च वीजानि जीरक नागकेशरम्।
चूर्णित शर्कराक्षौद्रलीढ तृष्णानिवारणम् ॥
वीक्ष्य व्याधिञ्च दोषञ्च वङ्क्षेश्चापि बलाबलम्।
भेषजानि प्रयुञ्जीत बालेषु भिषगुत्तम ॥

बालयकृदरिलौह ।

सहस्रपुटितञ्चाभ्र लौहञ्चैव तथा रस ।
जम्बीरवीजातिविषे मूल प्लीहारिसम्भवम् ॥
रक्तचन्दन मञ्जञ्च प्रत्येकञ्च समासक ।
गुडूची स्वरसेनैव धान्यद्वयमिता वटी ॥
बालाना यकृत घोर ज्वर प्लीहानमेव च ।
शोथ विबन्ध पाण्डुञ्च कास मुखगद तथा ॥
उदर नाशयेदाशु भास्करस्तिमिर यथा ।
बालयकृदरिर्नाम लौह श्रीशिवभाषित' ॥
अश्वगन्धाघृत बालचाङ्गेर्य्याख्य घृत तथा ।
घृत कुमारकल्याण मष्टमङ्गलनामकम् ॥
तैल लाक्षादिक नाम रसो बालगदान्तक ।
एवमादीन्यौषधानि बालरोगहराणि हि ॥
बलिशान्तीष्टकर्म्माणि कार्य्याणि ग्रहशान्तये ॥
कुमारतन्त्रकथिता क्रिया सर्व्वाश्च कारयेत् ॥

शत्रु मित्र न जानाति शुभ वाप्यशुभञ्च य ।
त शिशु यत्नतो रक्षेद्दीर्घ्य धर्म्म सनातनम् ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
बालरोगाधिकारोऽशीतितमोऽध्याय ।

---

# एकाशीतितमोऽध्याय ।

— o —

अथ क्षुद्ररोगाधिकार ।

अजगल्लिकाया लक्षणम् ।

स्निग्धा' सवर्णा ग्रथिता नीरुजा मुद्गसन्निभा ।
कफवातोत्थिता ज्ञेया बालानामजगल्लिका ॥

यवप्रख्याया लक्षणम् ।

यवाकारा सुकठिना ग्रथिता मांससंस्थिता ।
पीडका कफवाताभ्या यवप्रख्येति सोच्यते ॥

अन्त्रालज्या लक्षणम् ।

घनामवक्त्रां पिडका मुन्नता परिमण्डलाम् ।
[illegible]लजी मल्पपूया तां विद्यात् कफवातजाम्

[illegible] लक्षणम् ।

[illegible]स्यां महादाहा पक्वोडुम्बरसन्निभाम् ।
परिमण्डलां पित्तकृतां विवृतां नाम ता विदु' ॥

कच्छपिकाया लक्षणम् ।

ग्रथिता पञ्च वा षड् वा दारुणा कच्छपोपमा ।
कफानिलाभ्या पिडका ज्ञेया कच्छपिका बुधैः ॥

वल्मीकस्य लक्षणम् ।

ग्रीवासकक्षाकरपाददेशे
सन्धौ गले वा त्रिभिरेव दोषै ।
ग्रन्थि स वल्मीकवदक्रियाया
जात क्रमेणैव गत प्रवृद्धिम् ॥
मुखैरनेकै स्रुति तोदवद्भि
र्विसर्पवत् सर्पति चोन्नताग्रै ।
वल्मीकमाहुर्भिषजा विकार
निष्प्रत्यनीक चिरज विशेषात् ॥

कक्षा बाहुमूलम् ।

इन्द्रविद्धाया लक्षणम् ।

पद्मकर्णिकवन्मध्ये पिडकाभि समाचिताम् ।
इन्द्रविद्धा तु ता विद्याद्वातपित्तोत्थिता भिषक् ॥

गर्द्दभिकाया लक्षणम् ।

मण्डल वृत्तमुत्सन्न सरक्त पीडकाचितम् ।
रुजाकरी गर्द्दभिका ता विद्याद्वातपित्तजाम् ॥

पाषाणगर्द्दभस्य लक्षणम् ।

वातश्लेष्मसमुद्भूत श्वयथुर्हनुसन्धिज ।
स्थिरो मन्दरुज स्निग्धो ज्ञेय पाषाणगर्द्दभः ॥

पनसिकाया लक्षणम्।

कर्णस्याभ्यन्तरे जाता पिडकामुग्रवेदनाम्।
स्थिरा पनसिका तान्तु विद्यादन्त प्रपाकिणीम् ॥

जालगर्द्दभस्य लक्षणम्।

विसर्पवत् सर्पति य शोथस्तनुरपाकवान्।
दाहज्वरकर पित्तात् स ज्ञेयो जालगर्द्दभ ॥

इरिवेल्लिकाया लक्षणम्।

पिडका मुत्तमाङ्गस्था वृत्तामुग्ररुजाज्वराम्।
सर्व्वात्मिका सर्व्वलिङ्गा जानीयादिरिवेल्लिकाम् ॥

कक्षाया लक्षणम्।

बाहुपार्श्वांसकक्षेषु कृष्णस्फोटा सवेदनाम्।
पित्तप्रकोपसम्भूता कक्षामित्यभिनिर्द्दिशेत् ॥

गन्धनाम्नो लक्षणम्।

एकामेतादृशी दृष्ट्वा पिडका स्फोटसन्निभाम्।
त्वग्गता पित्तकोपेन गन्धनामा प्रचक्ष्यते ॥

अग्निरोहिण्या लक्षणम्।

कक्षभागेषु ये स्फोटा जायन्ते मांसदारणा।
अन्तर्दाह ज्वरकरा दीप्तपावकसन्निभा ॥
सप्ताहाद्वा दशाहाद्वा पक्षाद्वा घ्नन्ति मानवम्।
तामग्निरोहिणीं विद्यादसाध्या सर्व्वदोषजाम् ॥

चिप्पस्य लक्षणम्।

नखमांसमधिष्ठाय वायु पित्तञ्च देहिनाम्।
कुरुते दाहपाकौ च त व्याधिं चिप्पमादिशेत् ॥

कुनखस्य लक्षणम्।

तदेवाल्पतरैर्दोषै पुरुष कुनख वदेत्॥

अनुशय्या लक्षणम्।

गम्भीरामल्पसरम्भा सवर्णामुपरि स्थिताम्।
पादस्यानूशयी तान्तु विद्यादन्त प्रपाकिणीम्॥

विदारिकाया लक्षणम्।

विदारीकन्दवद्वृत्ता कच्चावङ्क्षणसन्धिषु।
विदारिकेति ता विद्यात् सर्व्वजा सर्व्वलक्षणाम्॥

शर्कराव्वुंदस्य लक्षणम्।

प्राप्य मासशिरास्नायु श्लेष्मा मेदस्तथानिल।
ग्रन्थि करोत्यसौ भिन्नो मधुसर्पिर्वसानिभम्॥
स्रवत्यास्रावमनिल स्तत्र वृद्धि पुनर्गत।
मास सशोष्य ग्रथिता शर्करा जनयेत्तत॥
दुर्गन्धि क्लिन्नमत्यर्थं नानावर्णं तत शिरा।
स्रवन्ति रक्त सहसा ता विद्याच्छर्कराव्वुंदम्॥

पाददार्य्या लक्षणम्।

परिक्रमणशीलस्य वायुरत्यर्थं रूक्षयो।
पादयो कुरुते दारी पाददारी तमादिशेत्॥

कदरस्य लक्षणम्।

शर्करोन्मथिते पादे क्षते वा कण्टकादिभि।
ग्रन्थि कीलवदुत्सन्नो जायते कदर हि तत्॥

शर्करात्र वालुका। उत्सन्न उन्नत.।

अलसस्य लक्षणम्।

क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुजान्वितौ।
दुष्टकर्दमसंस्पर्शादलसं तं विभावयेत्॥

इन्द्रलुप्तस्य लक्षणम्।

रोमकूपानुगं पित्तं वातेन सह मूर्च्छितम्।
प्रच्यावयति रोमाणि ततः श्लेष्मा सशोणितः॥
रुणद्धि रोमकूपांस्तु ततोऽन्येषामसम्भवः।
तदिन्द्रलुप्तं खालित्यं रुज्यते च विभाव्यते॥

दारुणकस्य लक्षणम्।

दारुणा कण्डुरा रूक्षा केशभूमिं प्रपाट्यते।
कफमारुतकोपेन विद्याद्दारुणकन्तु तम्॥

अरूंषिकाया लक्षणम्।

अरूंषि बहुवक्त्राणि बहुक्लेदीनि मूर्द्धनि तु।
कफासृक्क्रिमिकोपेन नृणां विद्यादरूंषिकाम्॥

पलितस्य लक्षणम्।

क्रोधशोकश्रमकृतः शरीरोष्मा शिरोगतः।
पित्तञ्च केशान् पचति पलितं तेन जायते॥

मुखदूषिकाया लक्षणम्।

शाल्मलिकण्टकप्रख्याः कफमारुतरक्तजाः।
युवानपिडका यूनां विज्ञेया मुखदूषिकाः॥
युवानपिडका पृषोदरादित्वात् साधुः।

पद्मिनीकण्टकस्य लक्षणम्।

कण्टकैराचितं वृत्तं मण्डलं पाण्डु कण्डुरम्।
पद्मिनीकण्टकप्रख्यैस्तदाख्यं कफवातजम्॥

जतुमणेर्लक्षणम्।

सममुत्सन्नमरुजं मण्डलं कफरक्तजम्।
सहजं लक्ष्म चैकेषां लक्ष्यो जतुमणिस्तु सः॥

माषकस्य लक्षणम्।

अवेदनं स्थिरञ्चैव यस्मिन् गात्रे प्रदृश्यते।
माषवत् कृष्णमुत्सन्नमनिलान्माषकन्तु तम्॥

तिलकालकस्य लक्षणम्।

कृष्णानि तिलमात्राणि नीरुजानि समानि च।
वातपित्तकफोद्रेकात् तान् विद्यात्तिलकालकान्॥

न्यच्छस्य लक्षणम्।

महद्वा यदि वाऽल्पं श्यावं वा यदि वासितम्।
नीरुजं मण्डलं गात्रे न्यच्छमित्यभिधीयते॥

व्यङ्गस्य लक्षणम्।

क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः।
मुखमासाद्य सहसा मण्डलं विसृजत्यतः॥
नीरुजं तनुकं श्यावं मुखव्यङ्गं तमादिशेत्॥

नीलिकाया लक्षणम्।

कृष्णमेवं गुणं गात्रे मुखे वा नीलिकां विदुः॥

परिवर्त्तिकाया लक्षणम्।

मर्द्दनात् पीडनाद्वापि तथैवाप्यभिघाततः।
मेढ्रचर्म्म यदा वायुर्भजते सर्व्वतश्चरन्।
तदा वातोपसृष्टत्वात् तच्चर्म्म परिवर्त्तते।
मणेरधस्तात् कोषश्च ग्रन्थिरूपेण लम्बते॥

परिवर्त्तिकेति ता विद्यात् सरुजा वातसम्भवाम् ।
सकण्डू कठिना वापि सैव श्लेषसमुत्थिता ॥

अवपाटिकाया लक्षणम् ।

अल्पीय खा यदा हर्षाद्बलाद्गच्छेत् स्त्रिय नर ।
हस्ताभिघातादथवा चर्म्मण्युद्वर्त्तिते बलात् ॥
यस्यावपाद्यते चर्म्म ता विद्यादवपाटिकाम् ॥

निरुद्धप्रकशस्य लक्षणम् ।

वातोपसृष्टे मेढ्रे वै चर्म्म सन्नयते मणिम् ।
मणिश्चर्म्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च ॥
निरुद्धप्रकशे तस्मिन् मन्दधार सवेदनम् ।
मूत्र प्रवर्त्तते जन्तो र्मणिर्विव्रियते न च ॥
निरुद्धप्रकश विद्यात् सरुज वातसम्भवम् ॥
निरुद्धप्रकाश इत्यत्र निरुद्धप्रकश पदमार्षम् ।

सन्निरुद्धगुदस्य लक्षणम् ।

वेगसन्धारणाद्वायु र्विहितो गुदसंश्रित ।
निरुणद्धि महास्रोत सूक्ष्मद्वार करोति च ॥
मार्गस्य सौक्ष्मात् कृच्छ्रेण पुरीषं तस्य गच्छति ।
सन्निरुद्धगुद व्याधिमेत विद्यात् सुदारुणम् ॥

अहिपूतनस्य लक्षणम् ।

शकृन्मूत्रसमायुक्तेऽधौतेऽपाने शिशोर्भवेत ।
स्विन्ने वा स्नाप्यमाने वा कण्डू रक्तकफोद्भवा ॥
कण्डूयनात्तत क्षिप्र स्फोटस्रावश्च जायते ।
एकीभूत व्रणं घोर त विद्यादहिपूतनम् ॥

वृषणकच्छ्वा लक्षणम् ।

स्नानोत्सादनहीनस्य मलो वृषणसंस्थित ।
यदा प्रक्लिद्यते स्वेदात् कण्डू जनयते तदा ॥
कण्डूयनात्तत क्षिप्र स्फोट स्रावश्च जायते ।
प्राहुर्वृषणकच्छूं ता श्लेष्मरक्त प्रकोपजाम् ॥

गुदभ्रंशस्य लक्षणम् ।

प्रवाहणातिसाराभ्या निर्गच्छति गुदो वहि ।
रूक्षदुर्ब्बलदेहस्य गुदभ्रंश तमादिशेत् ॥

शूकरदंष्ट्रस्य लक्षणम ।

सदाहो रक्तपर्य्यन्त स्त्वक्पाकी तीव्रवेदन ।
कण्डूमान् ज्वरकारी च स स्याच्छूकरदंष्ट्रक ॥

क्षुद्ररोगाणा चिकित्सा ।

तत्राजगल्लिकामामा जलौकाभिरुपाचरेत् ।
शुक्ति सौराष्ट्रिका क्षार कल्कैश्चालेपयेन्मुहु ॥
नवीन कण्टकार्य्याश्च कण्टकैर्वेधमात्रत ।
किमाश्चर्य्यं विपच्याशु प्रशाम्यन्त्यजगल्लिका ॥
वृषमूल विशालाभ्या लेपो हन्त्यजगल्लिकाम् ॥
कठिना क्षारयोगैश्च द्रावयेदजगल्लिकाम् ॥
श्लेष्मविद्रधि कल्पेन जयेदनुशयी भिषक् ।
विवृतामिन्द्रविद्धाञ्च गर्द्दभी जालगर्द्दभम् ॥
इरिवेल्लिका गन्धमाला जयेत् पित्तविसर्पवत् ।
मधुरौषधसिद्धेन सर्पिषा शमयेद् व्रणम् ॥
रक्तावसेकैर्बहुभि स्वेदनैरपतर्पणै ।
जयेद् विदारिका लेपै शिग्रु देवद्रुमोद्भवै ।

पनसिका कच्छपिकामनेन विधिना भिषक् ।
साधयेत् कठिनानन्यान् शोथान् दोषसमुद्भवान् ॥
अन्त्रालजो कच्छपिका तथा पाषाणगर्द्दभम् ।
सुरदारु शिलाकुष्ठे स्वेदयित्वा प्रलेपयेत् ॥
कफमारुत शोथघ्नो लेप पाषाणगर्द्दभे ॥
शस्त्रेणोद्धृत्य वल्मीक चाराग्निभ्यां प्रसाधयेत् ।
मन शिलाल भल्लात सूक्ष्मैलागुरुचन्दनै ॥
जातीपल्लव कल्कैश्च निम्बतैल विपाचयेत् ।
वल्मीक नाशयेत्तद्धि बहुच्छिद्र बहुद्रवम् ॥
सशोथ व्रणगन्धच्च प्रवृद्ध मर्म्मसु स्थितम् ।
हस्तपादस्थितञ्चापि वल्मीक परिवर्ज्जयेत् ॥
पाददारीषु तु शिरा वेधयेत्तलशोधिनीम् ।
स्नेहस्वेदोपपन्नौ तु पादौ चालेपयेन्मुहु ॥
मधूच्छिष्ट वसा मज्ज घृतक्षारैर्विमिश्रयेत् ॥
गुड लवण घृत चेत्तिन्तिडी युक्तमेतद्
द्विगुणमिह विदध्यान्मूत्रमेकत्र क्लत्वा ।
दिन कतिचिदपेद किञ्चिदाशोथ लेपात्
स्फुटित पदतल स्यात् पद्मपत्राभमाशु ॥
सर्जाख्य सिन्धूद्भवयोश्चूर्णं मधुघृतप्लुतम् ।
निर्म्मथ्य कटुतैलाक्त हन्ति पादप्रमार्ज्जनम् ॥

उपोदिका सर्षप निम्ब मोच-
कर्कारुकैर्व्वारुकभस्म तोये ।
तैल विपक्व लवण सकल्क
तत् पाददारी विनिहन्ति शीघ्रम् ॥

अलसेऽम्लेश्चिर सिक्तौ चरणौ परिलेपयेत् ।
पटोलारिष्ट कासीस त्रिफलाभि र्मुहुर्मुहु ॥
करञ्जवीज रजनी कासीस मधुक मधु ।
रोचना हरितालञ्च लेपोऽयमलसे हित ॥
लाक्षाभयारसालेप कार्य्य रक्तस्य मोक्षणम् ।
बृहतीरस सिद्धेन तैलेनाभ्यज्य बुद्धिमान् ॥
शिला रोचन कासीस चूर्णैर्वा प्रतिसारयेत् ॥
दहेत् कदरमुत्कृत्य तैलेन दहनेन वा ॥
क्षिप्यमुष्णाम्बुना खिन्न मुत्कृत्याभ्यज्य त व्रणम् ।
दत्त्वा सर्ज्जरस चूर्ण बुद्धा व्रणवदाचरेत् ॥
स्वरसेन हरिद्राया पात्रे कृष्णायसेऽभयाम ।
घृष्ट्वा तज्जेन कल्केन लिम्पेत्क्षिप्य मुहुर्मुहु ॥
नखकोटीप्रविष्टेन टङ्कनेन प्रशाम्यति ।
कुनखश्चेत् तदा भ्रात शैलोऽपि प्लवते जले ॥
काश्मर्य्या सप्तभि पत्रै कोमलै परिवेष्टित ।
अङ्गुलीवेष्टक पुसो ध्रुवमाशु व्यपोहति ॥
निम्बोदकेन वमन पद्मिनीकण्टके हितम् ।
निम्बोदकक्कृत सर्पि सक्षौद्र पानमिष्यते ॥
शनाल कृत क्षार पद्मिनी हन्ति लेपनात् ।
निम्बारग्वध कल्कैर्वा मुहुरुद्वर्त्तन हितम ॥
पटोलमूलाभ्या साज्याभ्या लेपन हितम् ।
लगर्द्दभ रोगे तु सद्यो हन्ति च वेदनाम् ॥
हिपूतनके धात्र्या पूर्व्व स्तन्य विशोधयेत् ।
त्रिफला खदिर क्वाथै र्व्रणाना धावन सदा ॥

करञ्ज त्रिफला तिक्तै सर्पिः सिद्ध शिशोर्हितम् ।
रसाञ्जन विशेषेण पानालेपनयोर्हितम् ॥
गुदभ्रंशे गुद स्नेहैरभ्यज्याशु प्रवेशयेत् ।
प्रविष्ट स्वेदयेच्चापि वद्ध गोस्फणया भृशम् ॥
गोस्फणावन्धनविशेष । मलनिर्गमार्थं सच्छिद्रेण चर्म्मणा कौपीनवन्ध कार्य्य ।

कोमल नलिनीपत्र य खादेच्छर्कराम्वितम् ।
अचिरेण शम याति गुदभ्रंशो रुजान्वित ॥
वृक्षाम्लानल चाङ्गेरी विल्व पाठा यवाग्रजम् ।
क्षारेण शीलयेत् पायुभ्रंशार्त्तोऽनलदीपनम ॥
गुदञ्च गव्यवसया म्रक्षयेदविशङ्कित ।
दुष्प्रवेशो गुदभ्रंशो विशत्याशु न सशय ॥
मूषिकाणा वसाभिर्वा गुदे सम्यक् प्रलेपनम् ।
खिन्नमूषिकमांसेन चाथवा स्वेदयेद् गुदम् ॥
गोतैलाभ्यञ्जनात शीघ्र प्रविशेन्निर्गतो गुद ॥

चाङ्गेरीघृतम ।

चाङ्गेरी कोल दध्यम्ल नागर क्षारसयुतम् ।
घृत सुतक्वथित पेय गुदभ्रंशरुजापहम् ॥
शुण्ठीक्षारावत्र कल्कौ शिष्टन्तु द्रवमिष्यते ॥

मूषिकाद्य तैलम् ।

क्षीरे महत्पञ्चमूल मूषिकामन्त्रवर्ज्जिताम ।
पक्त्वा तस्मिन पचेत्तैल वातघ्नौषध सयुतम ॥
गुदभ्रंशमिद तैल पानाभ्यङ्गात प्रसाधयेत् ॥
चर्म्मकीलं जतुमणि मशकास्तिलकालकान् ।

उत्कृत्य शस्त्रेण दहेत् चाराग्निभ्यामशेषत ॥
रुवुनालात्तु चूर्णेन घर्षो मशक नाशन ।
निर्म्मोकभस्मघर्षाद्वा मश शान्ति व्रजेद्‌द्रुतम् ॥
युवानपिडका न्यच्छ नीलिका व्यङ्ग शर्करा ।
शिराविधै प्रलेपैश्च जयेदभ्यञ्जनैस्तथा ॥
लोध्र धान्य वचा लेपस्तारुण्यपिडकापह ।
तद्वद्‌ गोरोचना युक्त मरिच मुखलेपनम ॥
वमनञ्च निहन्त्याशु पिडका यौवनोद्भवाम् ॥
व्यङ्गेषु चार्ज्जुनत्वग् वा मञ्जिष्ठा वा समाक्षिका ।
लेप सनवनीता वा श्वेताश्वखुरजा मसी ॥
रक्तचन्दन मञ्जिष्ठा कुष्ठ लोध्र प्रियङ्गव ।
वटाङ्कुरा मसूराश्च व्यङ्गघ्ना मुखकान्तिदा ॥
वटाङ्कुरा वटस्य अभिनवपत्रमुकुला ।
व्यङ्गाना लेपन शस्त रुधिरेण शशस्य च ।
दृष्टफलमेतत् ।
केवलान् पयसा पिष्ट्वा तीक्ष्णान् शाल्मलिकण्टकान् ।
आलिप्त त्र्यहमेतेन भवेत् पद्मोपम मुखम् ।
मसूरै सर्पिषा भृष्टैर्लिप्तमास्य पयोऽन्वितै ।
ससरात्राद्‌ भवेत् सत्य पुण्डरीकदलप्रभम् ॥
मातुलुङ्गजटा सर्पि शिला गोशकृतो रस ।
मुखकान्तिकरो लेप पिडकातिलकालजित् ॥
नवनीत गुड क्षौद्र कोलमज्ज प्रलेपनम ।
व्यङ्गजिद्‌ वरुणत्वग वा च्छागक्षीर प्रपेषिता ॥
जातीफल कल्कलेपो नीली व्यङ्गादि नाशन ।

सायञ्च कटुतैलेनाभ्यङ्गो वक्त्र प्रसाधन ॥
कालीयकोत्पलामयदधिसर वदराखि मध्यफलिनीभि ।
लिप्त भवति हि वदन शशिप्रभ सप्तरात्रेण ॥
तुषरहित मसृण यवचूर्ण सम यष्टीमधुक लोध्रलेपेन ।
भवति मुख परिनिर्ज्जितचामीकरचारुसौभाग्यम् ॥
रक्षोघ्न शर्व्वरीद्वय मञ्जिष्ठा गैरिकाज्य वस्तपय ।
सिद्धेन लिप्तमाननमुद्यद्विधु विम्बवद् विभाति ॥
परिणत दधिशरपुङ्खै कुवलयदल कुष्ठ चन्दनोशीरै ।
मुखकमल कान्तिकारी लेप भ्रुकुटि तिलकालकान् जयति।

अर्कक्षीर हरिद्राभ्या मर्द्दयित्वा विलेपनात् ।
मुखकार्ष्ण्य शम याति चिरकालोद्भव ध्रुवम् ॥
हरिद्राद्वय यष्ट्याह्व कालीयक कुचन्दनै ।
प्रपौण्डरीक मञ्जिष्ठा पद्म पद्मक कुङ्कुमै ॥
कपित्थ तिन्दुक प्लक्ष वटपत्रै पयोऽन्वितै ।
लेपयेत् कल्कितै रेभि स्तैलञ्चाभ्यञ्जन पचेत् ॥
पिप्लव नीलिका व्यङ्गास्तिलकान् मुखदूषिकाम् ।
नित्यसेवी जयेत् क्षिप्र मुख कुर्य्यान्मनोरमम् ॥

सारिवादि क्काथ अर्कश्च ।

शारिवाद्वययष्ट्याह्व त्रिवृदेलायमानिका ।
तालमूली वरी द्राक्षा विदारी कटुरोहिणी ॥
फलत्रयञ्च जीवन्ती क्काथ एषा रसायन ।
रक्तदोषहर सर्व्वक्षुद्रामयनिसूदन. ॥

सारिवाद्यर्क ।

मयूराख्येण यन्त्रेण यद्येषा स्राव्यते रस ।
स पीयूषनिभो ज्ञेय सर्व्वव्याधिहर शुभः॥

कनकतैलम्।

मधुकस्य कषायेण तैलस्य कुडव पचेत्।
कल्कै प्रियङ्गु मञ्जिष्ठा चन्दनोत्पलकेशरै ॥
कनक नाम तत्तैल मुखकान्तिकर परम्।
आभोरु नीलिका व्यङ्ग शोधन परमर्च्चितम्॥

मञ्जिष्ठाद्य तैलम्।

मञ्जिष्ठा मधुक लाक्षा मातुलुङ्ग सयष्टिकम्।
कर्षप्रमाणैरेतस्तु तैलस्य कुडव तथा॥
आज पयस्तद्द्विगुण शनै र्मृद्वग्निना पचेत्।
नीलिका पिडका व्यङ्गानभ्यङ्गादेव नाशयेत्॥
मुख प्रपन्नोपचित वलीपलित वर्ज्जितम्।
सप्तरात्र प्रयोगेण भवेत् कनकसन्निभम्॥

कुङ्कुमाद्य तैलम्।

कुङ्कुम चन्दन लाक्षा मञ्जिष्ठा मधुयष्टिका।
कालीयक मुशीरञ्च पद्मक नीलमुत्पलम्॥
न्यग्रोधपादा प्लक्षस्य मूल पद्मस्य केशरम्।
द्विपञ्चमूल सहितै कषाये पलिकै पृथक्॥
जलाढक विपक्तव्य पादशेषमथोद्धरेत्।
मञ्जिष्ठा मधुक लाक्षा पत्तङ्ग मधुयष्टिकै॥
कर्षप्रमाणैरेतैस्तु तैलस्य कुडव पचेत्।

अजाक्षीर द्विगुणित शनैर्मृदग्निना पचेत् ॥
सम्यक् पक्व पर श्रीतन्मुखवर्णं प्रसादनम् ।
नीलिका पिडका व्यङ्गानभ्यङ्गादेव नाशयेत् ॥
सप्तरात्र प्रयोगेण भवेत् काञ्चनसन्निभम् ।
कङ्कुमाद्यमिद तैलमश्विभ्या निर्म्मित पुरा ॥
कषायार्थं पठितमपि कुङ्कुम सिद्धतैले प्रक्षिपन्ति

कुङ्कुमाद्य तैलम् ।

कुङ्कुम किंशुक लाक्षा मञ्जिष्ठा रक्तचन्दनम् ।
कालीयक पद्मकञ्च मातुलुङ्गस्य केशरम् ॥
कुसुम्भ मधुयष्टि च फलिनी मदयन्तिका ।
निशे द्वे रोचना पद्ममुत्पलञ्च मन शिला ॥
काकोल्यादि समायुक्तै रेतैरक्षसमैर्भिषक् ।
लाक्षा रस पयोभ्याञ्च तैल प्रस्थ विपाचयेत् ॥
कुङ्कुमाद्यमिद तैल मभ्यङ्गात् काञ्चनोपमम् ।
करोति वदन सद्य पुष्टि लावण्य कान्तिदम् ॥
सौभाग्यलक्ष्मी जनन वशीकरण मुत्तमम् ॥

वर्णकघृतम् ।

मधुक चन्दन कङ्गु सर्षप पद्मक तथा ।
कालीयक हरिद्रा च लोध्रमेभिश्च कल्कितै ॥
विपचेद्धि घृत वैद्य स्तत्पक्व वस्त्रगालितम् ।
पादाश कुङ्कुम सिक्थ क्षिप्ता मन्दानले पचेत् ॥
तत् सिद्ध शिशिरे नीरे प्रक्षिप्याकर्षयेत्तत ।
तदेतद्वर्णकं नाम घृत वक्त्र प्रसादनम् ॥

अनेनाभ्याससलिप्तं हि वलीभूतमपि क्रमात्।
निष्कलङ्केन्दुबिम्बाभं स्याद्विलासवतीमुखम्॥

कुङ्कुमं सिक्थयोर्मिलित्वा पादांशं। सिक्थकस्य द्रवीकरणार्थं स्वल्पं पाकं दत्त्वा शीतलं जले कियत्क्षणं स्थापयित्वा शीतलं सत् अनुगुप्तं निधापयेत्।

अरूंषिकायां रुधिरेऽवसिक्ते
शिराव्यधेनाथ जलौकसा वा।
निम्बाम्बुसिक्ते शिरसि प्रलेपो
देयोऽश्ववर्च्चोरससैन्धवाभ्याम्॥

पुराणमथ पिण्याकं पुरीषं कुक्कुटस्य वा।
मूत्रपिष्टं प्रलेपोऽयं शीघ्रं हन्यादरूंषिकाम्॥

अरूंषीघ्नं भृष्टकुष्ठचूर्णं तैलेन संयुतम्॥

खोलके कुष्ठं भृष्ट्वा कटुतैलेन तद्भस्म लेपः।

द्विहरिद्राद्यं तैलम्।

हरिद्राद्वयं भूनिम्बं त्रिफलारिष्टं चन्दनैः।
एतत्तैलमरूंषीणां सिद्धमभ्यञ्जने हितम्॥

दारुणे तु शिरां विध्येत् स्निग्धस्विन्नां ललाटजाम्।
अवपीडशिरोवस्तीनभ्यङ्गांश्चावचारयेत्॥

कोद्रवाणां तृणक्षारपानीयं परिधावने॥

काश्मर्यां दारुणके मूर्द्ध्नि प्रलेपो मधुसंयुतः।
पियालबीजं मधुकं कुष्ठमाषैः ससैन्धवैः॥

काञ्जिकस्थास्थिसम्पाद्य माषा दारुणकापहा॥

सह नीलोत्पलकेशरं यष्टिमधु तिलं सममामलकम्।
चिरजातमपि शीर्षे दारुणरोगं शमं नयति॥

त्रिफलाद्य तैलम् ।

त्रिफलायोरजो यष्टि मार्कवोत्पल शारिवै ।
ससैन्धवै पचेत्तैलमभ्यङ्गात्कुञ्चिका जयेत् ॥

वङ्गितैलम् ।

चित्रक दन्तीमूलञ्च कोषातकि समन्वितम् ।
कल्क पिष्ट्वा पचेत्तैल केशदद्रु विनाशनम् ॥

गुञ्जातैलम् ।

गुञ्जाफलै पचेत्तैल भृङ्गराजरसेन तु ।
कण्डूदारुणजित् कुष्ठ कपाल व्याधिनाशनम् ॥

स्वल्पभृङ्गराजतैलम् ।

भृङ्गरज त्रिफलोत्पल शारि
लौहपुरीष समन्वितकारि ।
तैल मिद पच दारुणहारि
कुञ्चित केश घन स्थिर कारि ॥

महाभृङ्गराज तैलम् ।

आनूपदेशसम्भूत गृहीत्वा मार्कव शुभम् ।
सुधौत जर्ज्जरीकृत्य स्वरस तस्य चाहरेत् ॥
चतुर्गुणेन तेनैव तैल प्रस्थ विपाचयेत् ।
चीरपिष्टैरिमैर्द्रव्यै सयोज्य मतिमान् भिषक् ॥
मञ्जिष्ठा पद्मक लोध्र चन्दन गैरिक बला ।
रजन्यौ केशरञ्चैव प्रियङ्गुर्मधुयष्टिका ॥
प्रपौण्डरीक गोपी च पलिकान्यत्र दापयेत् ।
सम्यक् पक्क ततो ज्ञात्वा शुभे भाण्डे निधापयेत् ।
केशपाते शिरोदुष्टे मन्यास्तम्भे गलग्रहे ।

शिर कर्णाक्षि रोगेषु नस्येऽभ्यङ्गे च योजयेत् ॥
कुञ्चितायानतिस्निग्धान् कचान् कुर्य्यात् बहू स्तथा ।
खालित्यमिन्द्रलुप्तञ्च तैलमेतद् व्यपोहति ॥

प्रपौण्डरीकाद्य तैलम् ।

प्रपौण्डरीक मधुक पिप्पली चन्दनोत्पलै ।
कार्षिकैस्तैल कुडव स्रैर्हिरामलकी रस ॥
साध्य स प्रतिमर्ष स्यात् सर्व्वशीर्ष गदापह ॥

मालत्याद्य तैलम् ।

मालती करवीराग्नि नक्तमाल विपाचितम् ।
तैलमभ्यञ्जने शस्त मिन्द्रलुप्तापह परम् ॥
इद हि त्वरित हन्ति दारुण दारुण नृणाम् ॥
धात्र्याम्रमज्जलेपात् स्यात् स्थिरोरुस्निग्धकेशता ।
इन्द्रलुप्ते शिरा विद्धा शिला कासीस तुत्थकै ।
लेपयेत् परित कल्कै स्तैलञ्चाभ्यञ्जने हितम् ॥
कुटन्नट शिखी जाती करञ्ज करवीरजै ॥
अवगाढ पदञ्चैव प्रच्छयित्वा पुन पुन ।
गुञ्जाफलैश्चिर लिम्पेत् केशभूमि समन्तत. ॥
हस्तिदन्त मसी कृत्वा मुख्यञ्चैव रसाञ्जनम् ।
लोमान्यनेन जायन्ते नृणा पाणितलेष्वपि ॥
हस्तिदन्त मसी कृत्वा तैलेन सह योजयेत् ।
हस्तेष्वपि प्रजायन्ते केशा नास्त्यत्र सशय ॥
भल्लातक बृहतीफल गुञ्जामूल फलैश्च एकेन ।
मधु सहितेन विलिप्त सुरपतिलुप्त शम याति ॥

गुञ्जा फल रस पिष्ट गुञ्जामूल मिन्द्रलुप्तस्य ।
कनकफल निघृष्टस्य सतोय दातव्य प्रच्छितस्य सदा ।
घृष्टस्य कर्कशै पत्रैरिन्द्रलुप्तस्य गुण्डनम् ।
चूर्णितैर्मरिचै कार्य्यमिन्द्रलुप्तविनाशनम् ॥
छागचीर रसाञ्जन पुटदग्ध गजदन्त मसीलिप्ता ।
जायन्ते सप्त दिनात् खल्यामपि कुञ्चिताश्चिकुरा ॥
मधुकेन्दीवर मूर्व्वा तिलाज्य गोचीर भृङ्ग लेपेन ।
अचिराद्ध भवन्ति केशा घनदृढमूलायतानृजव ॥

## गुञ्जाद्य तैलम् ।

गुञ्जोपय पयोऽर्कस्य मार्कवो लाङ्गली विसम् ।
मूत्रमाज सगोमूत्र रक्तिका सेन्द्रवारुणी ॥
सिद्धार्थ तीच्यातैलञ्च गर्भं दत्त्वा विचक्षण ।
वह्निना मृदुना पक्क तैल खालित्य नाशनम् ॥
कूर्म्मपृष्ठ समानापि रुच्या या रोमतस्करी ।
दिग्धा सानेन जायेत ऋच्च शरीर लोमशा ॥
वटावरोहकेशिन्यो चूर्णेनादित्य पाचितम् ।
गुडूचीखरसे तैलमभ्यङ्गात् केशरोहणम् ॥

## चन्दनाद्य तैलम् ।

चन्दन मधुक मूर्व्वा त्रिफला नीलमुत्पलम् ।
कान्ता वटावरोहश्च गुडूची विसमेव च ॥
लौहचूर्णं तथा केशी शारिवे द्वे तथैव च ।
मार्कवखरसेनैव तैलं मृद्वग्निना पचेत् ॥
शिरस्युपचिता केशा जायन्ते घन कुञ्चिता ।

स्निग्धाश्च दृढमूलाश्च तथा भ्रमरसन्निभा ॥
नस्येनाकाल पलित निहन्यात्तैल मुत्तमम ॥

यष्टीमध्वाद्य तैलम्।

तैल सयष्टिमधुकै चीरे धात्री फले शृतम्।
नस्ये दत्त जनयति केशान् श्मश्रूणि चाप्यथ ॥

केशरञ्जक ।

त्रिफला नीलिनीपत्र लौह भृङ्गरज समम्।
अविमूत्रेण सयुक्त कृष्णीकरण मुत्तमम् ॥
त्रिफलाचूर्ण सयुक्त लौहचूर्ण विनिक्षिपेत्।
ईषत् पक्वे नारिकेले भृङ्गराज रसान्विते ॥
मासमेकन्तु निक्षिप्य सम्यग्गर्त्तात् समुद्धरेत्।
तत शिरो मुण्डयित्वा लेप दत्त्वा भिषग्वर ॥
सवेष्ट्य कदली पत्रै मोचयेत् सप्तमे दिने।
क्षालयेत् त्रिफला क्वाथै चीरमासरसाशिन ॥
कपाल रञ्जनञ्चैतत् कृष्णीकरणमुत्तमम् ॥
उत्पल पयसा सार्द्ध मास भूमौ निधापयेत्।
केशाना कृष्णीकरण स्नेहनञ्च विधीयते ॥
भृङ्गपुष्प जवापुष्प मेषदुग्ध प्रपेषितम्।
तेनैवालोडित लौहपात्रस्थ भूम्यध कृतम् ॥
सप्ताहादुद्धृत पश्चाद् भृङ्गराज रसेन तु।
आलोड्या..न च शिरो वेष्टयित्वा वसेन्निशाम् ॥
प्रातस्तु क्षालण कार्य्यमेव स्यान्मूर्द्ध रञ्जनम्।
एव सिन्दूर बालाम्र शङ्ख भृङ्गरसै क्रिया ॥
नरदग्ध शङ्खचूर्ण काञ्चिक रससयुत हि सीसक घृष्टा।

लेपात्कचानकंदलावदातान् शुभ्रान् करोतिनीलतरान् ॥
लौह मल कल्कै सजवाकुसुमैर्नर सदा स्नायी ।
पलितानीह न पश्यति गङ्गास्नायीव नरकाणि ॥

निम्बस्य वीजानि हि भावितानि
भृङ्गस्य तोयेन तथाशनस्य ।
तैलन्तु तेषा विनिहन्ति नस्यात्
दुग्धाम्बुभोक्तु पलित समूलम् ॥
निम्बस्य तैल प्रकृतिस्थमेव
नस्तो निषिक्त विधिना यथावत् ।
मासेन गोक्षीर भुजो नरस्य
यवाग्रभूत पलित निहन्ति ॥

क्षीरात् समार्कवरसात् द्विप्रस्थे मधुकात् पले ।
तैलस्य कुडव पक्व तन्नस्य पलितापहम् ॥

## महानीलतैलम् ।

आदानी वल्गा मूलानि कृष्णशैरीयकस्य च ।
सुरसस्य च पत्राणि फल कृष्णशणस्य च ॥
मार्कव काकमाची च मधुकं देवदारु च ।
पृथक् दशपलाशानि पिप्पल्य स्त्रिफलाञ्जनम् ॥
प्रपौण्डरीक मञ्जिष्ठा लोध्र कृष्णागुरूत्पलम् ।
आम्रास्थि कर्द्दम कृष्णो मृणाली रक्तचन्दनम् ॥
नीली भल्लातकास्थीनि कासीस मदयन्तिका ।
सोमराज्यशन शस्त्र कृष्णौ पिण्डीत चित्रकौ ॥
पुष्पाख्यर्ज्जुन काश्मर्य्यौ राम्रजम्बू फलानि च ।

पृथक् पञ्चपलैर्भागै सुपिष्टैराढक पचेत् ॥
विभीतकस्य तैलस्य धात्रीरस चतुर्गुणम्।
कुर्य्यादादित्य पाक वा यावत् शुष्को भवेद्रस ॥
लौहपात्रे तत पूत सगृह्य सुपयोजयेत्।
पाने नस्तक्रियायाञ्च शिरोऽभ्यङ्गे तथैव च ॥
एतच्चक्षुष्य मायुष्य शिरस सर्व्वरोगनुत्।
महानीलमिति ख्यात पलितघ्नमनुत्तमम् ॥

भृङ्गराजघृतम्।

भृङ्गराज रसे पक्व शिखिपित्तेन कल्कितम्।
घृत नस्येन पलित हन्यात् सप्ताह योगत ॥
काञ्जिक पिष्ट शेलुफल मज्जनि सच्छिद्र लौहगे।
यदर्क पातात् पतति तैल तन्नस्य रक्षणात् ॥
केशा नीलालिसकाशा, सद्य स्निग्धा भवन्ति च।
नयन श्रवण ग्रीवा दन्तरोगाश्च हन्त्यद' ॥
कासीस रोचना तुत्य हरिताल रसाञ्जनै ।
अम्लपिष्टै प्रलेपोऽय व्रण कच्छ्वहिपूतयो ॥
पटोलपत्र त्रिफला रसाञ्जन विपाचितम्।
पीत घृत नाशयति कच्छ्वामप्यहिपूतनाम् ॥
रजनीमार्कवमूल पिष्ट शीतेन वारिणा तुल्यम्।
हन्ति विसर्प लेपाद्व वराहदशनाह्वय घोरम् ॥
नाडीचवीजकल्क पीतो गव्येन सर्पिषा प्रातः।
शमयति शूकरदंष्ट्र सदाहपाकज्वर घोरम् ॥
विसर्पोक्त प्रतीकार कार्य्य शूकरदष्ट्रके ॥

### मधुल्यादि ।

मधूत्य त्रिभाग वसाया द्विभाग
तथा नारिकेलोद्भव तैलमेकम् ।
शरालस्य भाग द्रुत वह्नितापै-
स्ततो वस्त्रखण्डे विलग्न विदध्यात् ॥
क्षत सर्व्वरूप नखोत्यञ्च चिप्पा-
ङ्गुली वेष्टकी च मधुल्यादि हन्ति ॥

### क्षारघृतम् ।

मुष्कक कुटज गुञ्जा चित्रक कदली वृषम् ।
अर्कस्नुह्यावपामार्गमश्वमार विभीतकम् ॥
पलाश पारिभद्रञ्च नक्तमालञ्च सन्दहेत् ।
तत प्रस्थ समादाय क्षारस्य षड्गुणाम्भसा ॥
त्रि सप्तकृत्वो विस्राव्य पचेत् सर्पिस्तदम्बुना ।
कल्क क्षारत्रय दत्त्वा नातितीव्रेण वह्निना ॥
क्षारसर्पिरिद हन्यात् मशक तिलकालकम् ।
पद्मिनीकण्टक चिप्पमलस दद्रु सिध्मनी ॥

### अमृताङ्कुरवटी ।

अमृत पारद गन्ध लौहमभ्र शिलाजतु ।
गुञ्जासात्रा वटी कुर्य्यान्मर्द्दयित्वामृताम्भसा ॥
एषामृताङ्कुरवटी पीता धात्र्यम्भसा सह ।
क्षुद्ररोगानशेषांस्तु गदान् पित्तास्रकोपजान् ॥
ज्वर जीर्णं प्रमेहञ्च कार्श्यमग्निक्षय तथा ।
नाशयेज्जनयेत् पुष्टि कान्ति मेधा प्रभा मतिम् ॥

चन्द्रप्रभारस ।

चन्द्रप्रभा तुगाक्षीरी सैन्धवञ्च शिलाजतु ।
कौशिकञ्चाक्षमानन्तु हेमार रौप्यमभ्रकम् ॥
माक्षिक शाणमानञ्च मधुना परिमर्द्दयेत् ।
ततो द्विवल्लमानेन वटिका परिकल्पयेत् ॥
अनुपान विशेषेण योजितोऽय महारस ।
सर्व्वान् क्षुद्रगदान् हन्ति प्रमेहानपि दुस्तरान् ॥
वातव्याधीनशेषाञ्च पित्तजान् कफसम्भवान् ।
चिरप्रनष्टमग्निञ्च दीपयेज्जनयेद् बलम् ॥

कुङ्कुमादि घृतम् ।

कुङ्कुमेन निशाभ्याञ्च कणया वह्निवारिणा ।
घृत पक्व निराकुर्य्यान्नीलिका मुखदूषिकाम् ॥
सिध्मादींस्त्वग्गदान् सर्व्वान् व्याधीन् कफसमुद्भवान् ।
शिरोऽर्त्तिं नाशयेच्चाशु लावण्य जनयेत् परम् ।
जगतामुपकाराय दस्राभ्या विहितन्त्विदम् ।
पानेऽभ्यङ्गे तथा नस्ये युक्त्या योज्य विचक्षणै ॥

सप्तच्छदादितैलम् ।

सप्तच्छदस्य वासाया पिचुमर्द्दस्य चाम्भसा ।
तैलप्रस्थ पचेत् क[illegible]र्व्वी फलत्रिकै ॥
व्योषेन्द्रयव मञ्जिष्ठा खदिर क्षार सैन्धवै ।
पद्मिनीकण्टक चिप्प कदर व्यङ्ग नीलिके ।
जालगर्द्दभकश्चैतत् त्वग् गदाश्च विनाशयेत् ॥

सहाचरघृतम् ।

सहाचर तुलाक्काथे क्काथे च दशमूलजे ।
शिरीषस्य कषाये च घृतप्रस्थ विपाचयेत् ॥
कल्कान् दत्त्वा पञ्चकोल क्रिमिघ्न पटुपञ्चकम् ।
चारत्रय वृश्चिकालीं सिन्दूरमपि गैरिकम् ॥
हन्यादेतद् घृत न्यच्छ नीलिका तिलकालकम् ।
अङ्गुलीवेष्टक पाददारीञ्च मुखदूषिकाम् ॥

क्षुद्ररोगेषु पथ्यापथ्यनिर्णय ।

वातानुलोमन यच्च शकृन्मूत्र प्रवर्त्तनम ।
शोधन शोणितस्यापि त्रिदोषघ्नानि यानि च ॥
द्रव्याणि क्षुद्ररोगेषु हितान्येवविधानि च ।
विपरीतानि सर्व्वाणि वर्ज्जनीयानि यत्नत ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
एकाशीतितमोऽध्याय ।

---

# द्व्यशीतितमोऽध्यायः ।

— o —

विषाधिकार ।

तत्र विषस्य द्वैविध्यमाह ।

स्थावर जङ्गमञ्चैव द्विविध विषमुच्यते ।
मूलाद्यात्मकमाद्य स्यात् पर सर्पादि सम्भवम ॥

स्थावरविषस्य दशाश्रया।

मूल पत्र फल पुष्प त्वक् क्षीर सारमेव च।
निर्य्यासो धातव कन्द स्थावरस्याश्रया दश॥

मूलविषस्य कार्य्यम्।

उद्वेष्टन मूलविषैर्मोह प्रलपन तथा॥

पत्रविषस्य कार्य्यम्।

जृम्भण वेपन श्वासो तृणा पत्रविषैर्भवेत्॥

फलविषस्य कार्य्यम्।

मुष्कशोथ. फलविषैर्दाहो द्वेषश्च भोजने॥

पुष्पविषस्य कार्य्यम्।

भवेत् पुष्पविषैश्छर्द्दिराध्मान मूर्च्छन तथा॥

त्वक्सारनिर्य्यासविषाणा कार्य्याणि।

त्वक्सारनिर्य्यासविषैरुपभुक्तैर्भवन्ति हि।
आस्यदौर्गन्ध्यपारुष्यशिरोरुक्कफसम्भवा॥

क्षीरविषस्य कार्य्यम्।

फेनागम क्षीरविषैर्विड्भेदो गुरुजिह्वता।

धातुविषस्य कार्य्यम्।

हृत्पीडन धातुविषैर्मूर्च्छा दाहश्च तालुनि।
प्रायेण कालघातीनि विषाण्येतानि निर्दिशेत्॥

एतानि मूलानि नवविधानि विषाणि।

कन्दविषस्य कार्य्यम्।

कन्दजान्युग्रवीर्य्याणि यान्युक्तानि त्रयोदश।
सर्व्वाण्येतानि कुशलैर्ज्ञेयानि दशभिर्गुणै॥

स्थावरं जङ्गमं वापि कृत्रिमञ्चापि यद्विषम् ।
सद्यो निहन्ति तत् सर्व्वं गुणैश्च दशभिर्युतम् ॥

विषस्य दश गुणाः ।

रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशु व्यवायि च ।
विकाशि विशदञ्चैव लघुपाकि च ते दश ॥

तैर्गुणैर्विषस्य कार्य्यमाह ।

तद्रौक्ष्यात् कोपयेद्वायुमौष्ण्यात्पित्तं सशोणितम् ।
तैक्ष्ण्यान्मतिं मोहयति मर्म्मबन्धांश्छिनत्ति च ॥
शरीरावयवान् सौक्ष्म्यात् प्रविशेद्विकरोति च ।
आशुत्वादाशु तत् प्रोक्तं व्यवायात्प्रकृतिं हरेत् ॥
विकाशित्वात् क्षपयति दोषान् धातून् मलानपि ।
अतिरिच्यते वैशद्याद् दुश्चिकित्स्यञ्च लाघवात् ॥
दुर्ज्जरञ्चाविपाकित्वात् तस्मात् क्लेशयते चिरम् ॥

स्थावरविषाणां सामान्यं कार्य्यम् ।

स्थावरञ्च ज्वरं हिक्कां दन्तहर्षं गलग्रहम् ।
फेनच्छर्द्यरुचिश्वासान् मूर्च्छाञ्च कुरुते विषम् ॥

जङ्गमविषाणां कार्य्यम्

निद्रां तन्द्रां क्लमं दाहमपाकं लोमहर्षणम् ।
शोथञ्चैवातिसारञ्च जङ्गमं कुरुते विषम् ॥

विषलिप्तशस्त्रहतस्य लक्षणम् ।

सद्यः क्षतं पच्यते यस्य जन्तो
स्रवेद्रक्तं पच्यते चाप्यभीक्ष्णम्
कृष्णीभूतं क्लिन्नमत्यर्थपूति
क्षतान्मांसं शीर्य्यते चापि यस्य ॥

तृष्णा मूर्च्छा ज्वरदाहौ च यस्य
दिग्धाहत त पुरुष व्यवस्येत्।
लिङ्गान्येतान्येव कुर्य्यादमित्रै
र्दत्त क्ष्वेडो वा व्रणे यस्य चापि॥

विषपीतस्य लक्षणम्।

सपीत गृहधूमाभ पुरीष योऽतिसार्य्यते।
फेनमुद्वमते चापि विषपीत तमादिशेत्॥

विषदातुर्लक्षणम्।

इङ्गितज्ञो मनुष्याणा वाक्चेष्टामुखवैकृतै।
जानीयाद्विषदातारमेभिर्लिङ्गैश्च बुद्धिमान्॥
न ददात्युत्तर पृष्टो विवक्षुर्मोहमेति च।
अपार्थं बहु सङ्कीर्णं भाषते चापि मूढवत्॥
अङ्गुली स्फोटयेदुर्व्वीं विलिखेत प्रहसेदपि।
वेपथुश्चास्य भवति त्रस्तश्चैकैकमीक्षते॥
विवर्णवक्त्रो ध्यामश्च नखै किञ्चिच्छिनत्ति च।
आलभेतासकृद्दीन करेण च शिरोरुहान्॥
निर्य्यियासुरपद्वारैर्वीक्षते च पुन पुन।
वर्त्तते विपरीतश्च विषदाता विचेतन॥

ध्यामो दग्धसमानवर्ण। आलभेत स्पृशेत्। विपरीत
यथा स्यात्तथैव वर्त्तते।

अथ सर्पा।

वातपित्तकफात्मानो भोगि मण्डलि राजिला।
यथाक्रम समाख्याता द्व्यन्तरा द्वन्द्वरूपिण॥

फणिनो भोगिनो ज्ञेया सङ्ख्यातास्तेऽत्र विंशतिः ।
मण्डलैर्विविधैश्चित्राः पृथवो मन्दगामिनः ॥
षट् ते मण्डलिनो ज्ञेया ज्वलनार्कविषाः स्मृताः ।
स्निग्धा विविधवर्णाभिस्तिर्य्यगूर्द्ध्वञ्च राजिभिः ॥
विचित्रा इव ये भान्ति राजिलास्ते हि तेऽपि षट् ॥

एते यथाक्रमं वातपित्तकफात्मानः । द्व्यन्तरा इति अन्तरे द्वौ येषां ते द्व्यन्तराः, तथा भोगिनः कृष्णसर्पात् मण्डलिन्यां गोनस्यां जाता मण्डलिनो गोनसात् भोगिनाः फणिन्यां कृष्णसर्प्यां जाता एवमन्येऽपि जातिसङ्कराः ऊह्याः ।

दंशलक्षणमाह ।

दंशो भोगिकृतः कृष्णः सर्व्ववातविकारकृत् ।
पीतो मण्डलिनः शोथो मृदुः पित्तविकारवान् ॥
राजिलोत्थो भवेद्दंशः स्थिरशोथश्च पिच्छिलः ।
पाण्डुः स्निग्धोऽतिसान्द्रासृक् सर्व्वश्लेष्मविकारकृत् ॥

देशविशेषे कालविशेषे च दष्टस्यासाध्यत्वमाह ।

अश्वत्थदेवायतनश्मशानवल्मीकसन्ध्यासु चतुष्पथेषु ।
याम्ये च पित्र्ये परिवर्ज्जनीया
ऋक्षे नरा मर्म्मसु ये च दष्टाः ॥
याम्ये भरण्यां, पित्र्ये मघायाम् ।
दर्व्वीकराणां विषमाशु हन्ति
मेघानिलोष्णे द्विगुणीभवन्ति ॥
सर्व्वाणि विषाणि द्विगुणीभवन्ति इत्यर्थः ।

दर्व्वीकरलक्षणमाह।

रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिण।

ज्ञेया दर्व्वीकरा सर्पा फणिन शीघ्रगामिन॥

अजीर्णपित्तातपपीडितेषु

बालेषु वृद्धेषु बुभुक्षितेषु।

क्षीणे क्षते मेहिनि कुष्ठजुष्टे

रूक्षेऽबले गर्भवतीसु चापि॥

शस्त्रक्षते यस्य न रक्तमस्ति

राज्यो लताभिश्च न सम्भवन्ति।

शीताभिरद्भिश्च न रोमहर्षो

विषाभिभूत परिवर्ज्जयेत्तम्॥

जिह्म मुख यस्य च केशपातो

नासावसादश्च सकण्ठभङ्ग।

कृष्णश्च रक्त श्वयथुश्च दंशे

हन्वो स्थिरत्वञ्च विवर्ज्जनीयम॥

केशपात आकर्षणात्। नासावसाद नासाया नतत्वम्। कण्ठभङ्ग ग्रीवाधारणाशक्ति। हन्वो स्थिरत्व हनुद्वयस्तम्भ।

वर्त्तिर्घना यस्य निरेति वक्त्राद्

रक्त स्रवेदूर्द्ध्वमधश्च यस्य।

दंष्ट्रानिपाताश्चतुरश्च पश्येद्

यश्चापि वैद्य परिवर्ज्जनीय॥

वर्त्तिघनेति नानारूपा वर्त्ति। यस्य च नासामुखलिङ्ग-गुदादिभ्यो रक्त स्रवेत्। वैद्य पश्येदित्यन्वय। स परिवर्ज्जनीय इत्यर्थ।

उन्मत्तमत्यर्थमुपद्रुतं वा
हीनस्वरं वाप्यथवा विवर्णम्।
सारिष्टमत्यर्थमवेगिनञ्च
ज्ञात्वा नरं कर्म्म न तत्र कुर्य्यात्॥

दूषीविषलक्षणमाह।

जीर्णं विषघ्नौषधिभिर्हतं वा
दावाग्निवातातपशोषितं वा।
स्वभावतो वा गुणविप्रहीनं
विषं हि दूषीविषतामुपैति॥

जीर्णमतिपुराणम। विषघ्नौषधिभिर्हतं निर्विषीकृतम्। स्वभावतो वा गुणविप्रहीनं स्वभावादेव दशानां गुणानां मध्ये एकद्वित्र्यादिगुणहीनम।

दूषीविषस्य कार्य्यमाह।

वीर्य्याल्पभावान्न निपातयेत् तत्
कफान्वितं वर्षगणानुवन्धि।
तेनार्द्दितो भिन्नपुरीषवर्णो
वैगन्ध्यवैरस्ययुतः पिपासी॥
मूर्च्छां भ्रमं गद्गदवाग्वमिञ्च
विचेष्टमानोऽरतिमाप्नुयाद्वा॥

न निपातयेत् न मारयति कफान्वितं कफेन मन्दी कृतौष्ण्यादिगुणं वर्षगणानुवन्धि कफेनाग्नेर्मान्द्यादित्वाट पाकाच्चिरस्थायितया दूषीविषजदद्रुरोगवता भिन्नपुरीषवर्णो भिन्नपुरीषो द्रुतमलो भिन्नवर्च्चो विवर्णो विचेष्टमानो विरुद्धां चेष्टां कुर्व्वन् मूर्च्छादीन् व्याधीन् लभते।

आमाशयस्थे कफवातरोगी
पक्वाशयस्थेऽनिलपित्तरोगी ।
भवेत् समुद्ध्वस्तशिरोऽङ्गरुट्को
विलूनपक्षस्तु यथा विहङ्गः ॥

समुद्ध्वस्तशिरोऽङ्गरुट्क समुद्ध्वस्ता शिरोरुहा केशा अङ्गरुहाणि लोमानि च यस्य स । एतदपि लिङ्गं पक्वाशयस्थे दूषीविषे बोध्यव्यम् ।

स्थित रसादिष्वथ तद्रु यथोक्तान्
करोति धातुप्रभवान् विकारान् ।

यथोक्तान् सुश्रुते व्याधिसमुद्देशीयोक्तान् ।

दूषीविषस्य प्रकोपसमयमाह ।

कोपन्तु शीतानिलदुर्द्दिनेषु
यात्याशु पूर्व्वं शृणु तस्य रूपम् ॥

कुपितस्य दूषीविषस्य पूर्व्वरूपमाह ।

निद्रागुरुत्वञ्च विजृम्भणञ्च
विश्लेषहर्षावथवाङ्गमर्द्द ॥

तस्य रूपमाह ।

तत करोत्यन्नमदाविपाका
वरोचकं मण्डलकोठजन्म ।
मांसक्षयं पाणिपदे प्रशोथ
मूर्च्छां तथा च्छर्द्दिमथातिसारम् ॥
दूषीविष श्वासतृषाज्वरांश्च
कुर्य्यात् प्रवृद्धिं जठरस्य चापि ॥

अन्ने भुक्ते पूगफलेनेव मद ।

दूषीविषभेदेन विकारभेदमाह ।

उन्मादमन्यज्जनयेत तथान्य-

दानाहमन्यत् क्षपयेच्च शुक्रम् ।

गद्गद्यमन्यज्जनयेच्च कुष्ठं

तांस्तान् विकारांश्च बहुप्रकारान् ॥

अन्यद्दूषीविषं तांस्तान् विकारान् विसर्पविस्फोटकादीन् ।

दूषीविषस्य निरुक्तिमाह ।

दूषितं देशकालान्नदिवास्वप्नैरभीक्ष्णशः ।

यस्मात् सन्दूषयेद्धातूंस्तस्माद्दूषीविषं स्मृतम् ॥

देशः अनूपादिः । कालो दुर्दिनादिः । अन्नं कुलत्थ-तिलमसूरादि । धातुदूषकत्वाद्दूषीविषम् ।

दूषीविषस्य साध्यत्वादिकमाह ।

साध्यमात्मवतः सद्यो याप्यं संवत्सरोत्थितम् ।

दूषीविषमसाध्यं स्यात् क्षीणस्याहितसेविनः ॥

कृत्रिमं विषं द्विविधम् एकं सविषं दूषीविषसंज्ञं अपरम-विषं तदेव गरसंज्ञम् । तथाच काश्यपसंहितायाम्

संयोगजञ्च द्विविधं द्वितीयं विषमुच्यते ।

दूषीविषन्तु सविषमविषं गर उच्यते ॥

तत्र दूषीविषमभिधाय गरं दर्शयितुमाह ।

सौभाग्यार्थं स्त्रियः स्वेदरजोनानाङ्गजान् मलान् ।

शत्रुप्रयुक्ताश्च गरान् प्रयच्छन्त्यन्नमिश्रितान् ॥

स्त्रियः सौभाग्यार्थं शत्रुप्रयुक्त्या वा सविषाविषजन्तुना स्वेदादिजातान् मलान् अन्नेन प्रयच्छन्ति ।

गरकार्य्यमाह।

तै स्यात् पाण्डु कृशोऽल्पाग्निर्गरश्चास्योपजायते।
मर्म्मप्रधमनाध्मान हस्तयो शोथसम्भव ॥
जठर ग्रहणीदोषो यक्ष्मा गुल्म क्षयो ज्वर।
एवंविधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥

तै स्वेदरज प्रभृतिभि। गरश्चास्योपजायते इति अन्नापाकात् जठरावस्थितस्वेदादिरेव गर। अतएव तस्योदरामय किंवा वक्ष्यमाणमर्म्म प्रधमनादिलक्षणो व्याधिगर। मर्म्मप्रधमन मर्म्मव्यथा। क्षयो धातुक्षय।

लूतानामुत्पत्ति निरुक्त सङ्ख्याश्चाह।

यस्माल्लून तृण प्राप्ता मुने प्रस्वेदविन्दव।
तेभ्यो जातास्तथा लूता इत्याख्यातास्तु षोडश ॥

अत्र सुश्रुत।

विश्वामित्रो नृपवर कदाचिदृषिसत्तमम्।
वशिष्ठ कोपयामास गत्वाश्रमपद किल ॥
कुपितस्य मुनेस्तस्य ललाटात् स्वेदविन्दव।
अपतन् दर्शनादेव ह्यधस्तात् तीव्रवर्च्चस ॥
लूने तृणे महर्षेस्तु धेन्वर्थे सम्भृतेऽपि च।
ततो जातास्त्विमा घोरा नानारूपा महाविषा ॥
तासामष्टौ कष्टसाध्या वर्ज्ज्यास्त्वष्टौ च कीर्त्तिता ॥

तत्र चित्रमण्डलप्रभृतयोऽष्टौ कष्टसाध्या सौवर्णिकप्रभृतयोऽष्टावसाध्या।

लूतानां दंशलक्षणम् ।

ताभिर्दष्टे दंशकोथः प्रवृत्तिः क्षतजस्य च ।
ज्वरो दाहोऽतिसारश्च गदाः स्युश्च त्रिदोषजाः ॥
पिडका विविधाकारा मण्डलानि महान्ति च ।
शोथा महान्तो मृदवो रक्ताः श्यावाश्चलास्तथा ॥
सामान्यं सर्व्वलूतानामिदं दंशस्य लक्षणम् ॥

दंशकोथः दंशमध्ये पूतिभावः ।

दंशमध्ये तु यत्कृष्णं श्यावं वा जालकावृतम् ।
दग्धाकृति भृशं पाकक्लेदशोथज्वरान्वितम् ॥
दूषीविषाभिर्लूताभिस्तद्दष्टमिति निर्द्दिशेत् ॥

सौवर्णिकादिदष्टलक्षणमाह ।

शोषः श्वेतासिता रक्ता पीता च पिडका ज्वरः ।
प्राणान्तिको भवेद् दाहः श्वासहिक्काशिरोग्रहाः ॥

आखुविषलक्षणमाह ।

आदंशाच्छोणितं पाण्डुमण्डलानि ज्वरोऽरुचिः ।
लोमहर्षश्च दाहश्चाप्याखुदूषीविषार्द्दिते ॥

प्राणहरमूषिकविषकार्य्यमाह ।

मूर्च्छाङ्गशोथवैवर्ण्यक्लेदशब्दाश्रुतिज्वराः ।
शिरोगुरुत्वं लालासृक्छर्द्दिश्चासाध्यमूषकात् ॥
अङ्गशोथोऽत्र मूषकाकारो बोद्धव्यः ।

कृकलासदष्टस्य लक्षणम् ।

शोथस्य कार्ष्ण्यमथवा नानावर्णत्वमेव च ।
मोहोऽथ वर्च्चसो भेदो दष्टस्य कृकलासके ॥

वृश्चिकविषस्य लक्षणम्।

दहत्यग्निरिवादौ तु भिनत्तीवोर्द्ध्वमाशु च।
वृश्चिकस्य विषं याति पश्चाद् दंशेऽवतिष्ठते॥

असाध्यवृश्चिकदष्टस्य लक्षणम्।

दष्टोऽसाध्यैस्तु हृद्घ्राणरसनोपहतो नरः।
मांसैः पतद्भिरत्यर्थं वेदनार्त्तो जहात्यसून्॥

असाध्यैर्वृश्चिकैस्तेषामेवानुवृत्तेः। हृदादिषु उपहतः हृदादिकार्य्यरहितो भवति। अत्यर्थं वेदनार्त्त इत्यन्वयः।

कणभदष्टस्य लक्षणम्।

विसर्पः श्वयथुः शूलं ज्वरश्छर्द्दिरथापि वा।
लक्षणं कणभैर्दष्टे दंशश्चैवावशीर्य्यते॥

उच्चिटिङ्गदष्टस्य लक्षणम्।

कृष्णलोमोच्चिटिङ्गेन स्तब्धलिङ्गो भृशार्त्तिमान्।
दष्टः शीतोदकेनेव सिक्तान्यङ्गानि मन्यते॥

कृष्णलोमा अधिकतरकृष्णरोमा उच्चिटिङ्गः कीटविशेषः।

सविषमण्डूकदष्टस्य लक्षणम्।

एकदंष्ट्रार्द्दितः शूनः सरुजः पीतकः सतृट्।
सनिद्रश्छर्द्दिमान् दष्टो मण्डूकैः सविषैर्भवेत्॥

एकदंष्ट्रार्द्दितः स्वभावादेकयैव दंष्ट्रया दष्टो भवति।

मत्स्यविषस्य कार्य्यमाह।

मत्स्यास्तु सविषाः कुर्य्युर्दाहं शोथं रुजं तथा॥

जलौकोविषकार्य्यमाह।

कण्डूं शोथं ज्वरं मूर्च्छां सविषास्तु जलौकसः॥

गृहगोधिकाविषकार्य्यमाह ।

विदाह श्वयथु तोद प्रस्वेद गृहगोधिका ॥

कुर्य्युरिति शेष ।

शतपदीविषकार्य्यमाह ।

दंशे स्वेद रुज दाह कुर्य्याच्छतपदीविषम् ॥

मशकविषकार्य्यमाह ।

कण्डूमान् मशकैरोषच्छोथ स्यान्मन्दवेदन ॥

असाध्यमशकलक्षणमाह ।

असाध्यकीटसदृशमसाध्य मशकक्षतम ॥

असाध्यकीटसदृशम असाध्यै कीटैर्लूतादिभि कृत यत क्षत तत्सदृशवेदनम ।

मक्षिकादंशलक्षणमाह ।

सद्य सस्राविणी श्यावा दाहमूर्च्छाज्वरान्विता ।

पिडका मक्षिकादंशे तासान्तु स्थगिकासुहृत् ॥

तासा सुश्रुतोक्ताना षण्णा मक्षिकाणा मध्ये स्थगिका नाम्नी मक्षिका असुहृत प्राणनाशिनी शीघ्र जीवित हरतीत्यर्थ ।

व्याघ्रादिविषाणा कार्य्यमाह ।

चतुष्पाद्भिर्द्विपाद्भिर्वा नखैर्दन्तैश्च यत क्षतम् ।

शूयते पच्यते तत्तु स्रवति ज्वरयत्यपि ॥

चतुष्पाद्भिर्व्याघ्रादिभि । द्विपाद्भि वनमनुष्यादिभि । शूयते शूनं भवति ।

विषोजझितस्य लक्षणम ।

प्रसन्नदोष प्रकृतिस्थधात्

मन्नाभिकाम सममूत्रविट्कम ।

प्रसन्नवर्णेन्द्रियचित्तचेष्ट
वैद्योऽवगच्छेदविष मनुष्यम्॥
प्रसन्नदोष प्रकृतिस्थदोष शेष सुगमम।

स्थावरविषस्य चिकित्सा।

स्थावरेण विषेणार्त्त नर यत्नेन वामयेत्।
वमनेन सम नास्ति यतस्तस्य चिकित्सितम्॥
विषमत्यर्थमुष्णञ्च तीक्ष्णञ्च कथित यत।
अत सर्व्वविषेषूक्त परिषेकस्तु शीतल॥
औष्ण्यात् तैक्ष्ण्याद्विशेषेण विष पित्त प्रकोपयेत्।
वमित सेचयेत् तस्माच्छीतलेन जलेन च॥
पाययेन्मधुसर्पिर्भ्यां विषघ्न भेषज द्रुतम्।
भोक्तुमम्ल रस दद्यात् सितया च समन्वितम्॥
यस्य यस्य च दोषस्य पश्येल्लिङ्गानि भूरिश।
तस्य तस्यौषधै कुर्य्याद्विपरीतगुणै क्रियाम्॥
मूलत्वक्पत्रपुष्पाणि वीजञ्चेति शिरीषत।
गवा मूत्रेण सम्पिष्ट लेपाद्विषहर परम्॥
दूषीविषार्त्त सुस्निग्धमूर्द्ध्वञ्चाधश्च शोधनम्।
पाययेदगद मुख्यमिद दूषीविषापहम्॥
पिप्पलीध्यामक मासी लोध्रमेला सुवर्च्चिका।
मरिच वालकञ्चैला तथा कनकगैरिकम्॥
क्षौद्रयुक्त कषायोऽय दूषीविषमपोहति॥

ध्यामक रोहिष तदभावे उशीर देयम्। कनकगैरिक मत्यन्तमारक्त गैरिक सोनागेरि इति लोके।

जङ्गमविषस्य चिकित्सा ।

तत्रादौ सर्पविषप्रतीकार ।

सर्वैरेवादित सर्पै शाखादष्टस्य देहिन ।
दंशस्योपरि बध्नीयादरिष्टाश्चतुरङ्गुले ॥
न गच्छति विष देहमरिष्टाभिर्निवारितम् ॥
दहेद् दंशमथोत्कृत्य यत्र बन्धो न जायते ।
देवब्रह्मर्षिभि पोक्ता मन्त्रा सत्यतपोमया ।
भवन्ति नान्यथा क्षिप्र विष हन्यु सुदुस्तरम् ॥
मन्त्रास्त्वविधिना प्रोक्ता हीना वा स्वरवर्णत ।
यस्मान्न सिद्धिमायान्ति तस्माद् योज्योऽगदक्रम ॥
समन्तादगदैर्दंश प्रच्छयित्वा प्रलेपयेत् ।
चन्दनोशीरयुक्तेन वारिणा परिषेचयेत् ॥
पाययेदगदास्तास्तान् क्षीरक्षौद्र घृतादिभि ।
तदभावे हिता वा स्यात् कृष्णा वल्मीकमृत्तिका ॥
कोविदारशिरीषार्ककटभिर्वापि भक्षयेत् ।
न पिबेत् तैलकौलत्थमद्यसौवीरकाणि च ॥
द्रवमन्यत्तु यत्किञ्चित् पीत्वा पीत्वा तदुद्वमेत ।
प्रायो हि वमनेनैव सुख निर्ह्रियते विषम् ॥
शिरीषपुष्पस्वरसे भावित मरिच सितम् ।
सप्ताह सर्पदष्टाना नस्यपानाञ्जने हितम् ॥
कुलिकमूलनस्येन कालदष्टोऽपि जीवति ॥
गृहधूमो हरिद्रे द्वे समूल तण्डुलीयकम् ।
अपि वासुकिना दष्ट पिबेद्दधिघृतप्लुतम् ॥
द्विपल नतकुष्ठाभ्या घृतक्षौद्रचतु पलम् ।

अपि तक्षकदष्टाना पानमेतत् सुखप्रदम ॥
वन्यकर्कोटज मूल छागमूत्रेण भावितम ।
नस्य काञ्जिकसम्पिष्ट दोषोपहतचेतस
जयपालभवा मज्जा भावयेन्निम्बुकद्रवै ।
एकविंशतिवेलन्तु ततो वर्त्ति प्रकल्पयेत् ॥
मनुष्यलालया घृष्ट्वा ततो नेत्रे तथाञ्जयेत् ।
सर्पदष्टविष जित्वा सञ्जीवयति मानवम ॥
विषस्य वमन पाने त्वग्योगे सेचनादिकम् ॥
कोष्ठदाहरुजाध्मान मूत्रसङ्गरुगन्वितम् ।
विरेचयेच्छकृद्वायुसङ्गपित्तातुर नरम ॥
शूनाक्षिकूट निद्रार्त्त विवर्णाविललोचनम ।
विवर्णञ्चापि पश्यन्तमञ्जनै समुपाचरेत् ॥
शिरोरुग्गौरवालस्यहनुस्तम्भगलग्रहे ।
शिरो विरेचयेत् क्षिप्र मन्यास्तम्भे च दारुणे ॥
नष्टसञ्ज्ञ विवृत्ताक्ष भग्नग्रीव विरेचनैः ।
चूर्णैः प्रधमनैस्तीक्ष्णैर्विषार्त्त समुपाचरेत् ॥
ताडयेच्च शिरा क्षिप्र तस्य शाखाललाटजा ।
तास्वसृ सिच्यमानासु मूर्द्ध्नि शस्त्रेण शस्त्रवित् ।
कुर्य्यात् काकपदाकार व्रणमेव स्रवन्ति ता ॥
वादयेद्विषागदैर्लिप्ता दुन्दुभीस्तस्य पार्श्वयो ।
तद्वत्तस्य पुनश्चैनमूर्द्ध्वञ्चाधश्च शोधयेत् ॥
निःशेष निर्हरेच्चापि विष परमदुर्ज्जयम् ।
अल्पमप्यवशिष्ट हि भूयो वेगाय कल्पते ॥
कुर्य्याद्वा सादवैवर्ण्ये ज्वरकासशिरोरुज ।

शोथशोषप्रतिश्याय तिमिरारुचिपीनसान् ॥
तेषु चापि यथादोष प्रतिकर्म्म प्रयोजयेत् ।
विषार्त्तोपद्रवाश्चापि यथास्व समुपाचरेत् ॥
एव क्रियाक्रमैर्मन्त्रैरौषधीभिश्च यत्नत ।
विषे हृतगुणे देहाद् यदा दोष प्रकुप्यति ॥
तदा पवनमुद्वृत्त स्नेहाद्यै समुपाचरेत् ।
तैलमत्स्यकुलत्थाम्लवर्ज्जैर्मांसरसाशनै ॥
पित्तज्वरहरै पित्त कषायै स्नेहबस्तिभि ।
कफमारग्वधाद्येन सक्षौद्रेण गणेन तु ॥
क्षेमघ्नैरगदैश्चापि तिक्तैरूक्षैश्च भोजनै ॥

अथागदा ।

महागद ।

त्रिवृद्विशल्ये मधुक हरिद्रे
रक्ता नरेन्द्रो लवणस्य वर्ग ।
कटुत्रिक चैव विचूर्णितानि
शृङ्गे निदध्यान्मधुसयुतानि ॥
एषोऽगदो हन्ति विष प्रयुक्त
पानाञ्जनाभ्यञ्जननस्ययोगै ।
अवार्य्यवीर्य्यो विषवेगहन्ता
महागदो नाम महाप्रभाव ॥

अजितागद ।

विडङ्गपाठात्रिफलाजमोदा-
हिङ्गूनि वक्र त्रिकटूनि चैव ।

सर्व्वश्च वर्गो लवणस्य सूक्ष्म
सचित्रक चौद्रयुतो निधेय ॥
शृङ्गे गवा शृङ्गमयेन चैव
प्रच्छादित पक्षमुपेक्षितश्च ।
एषोऽगद स्थावरजङ्गमाना
जेता विषाणामजितो हि नाम्ना ॥

तार्च्यागद ।

प्रपौण्डरीक सुरदारु मुस्ता-
कालानुसार्य्या कटुरोहिणी च।
स्थौणेयकध्यामकपद्मकानि
पुन्नागतालीशसुवर्च्चिकाश्च ॥
कुटन्नटैलासितसिन्धुवारा
शैलेयकुष्ठे तगर प्रियङ्गु।
रोध्र जल काञ्चनगैरिकञ्च
समागध चन्दनसैन्धवञ्च ॥
सूक्ष्माणि चूर्णानि समानि कृत्वा
शृङ्गे निदध्यान्मधुसयुतानि।
एषोऽगदस्तार्च्य इति प्रदिष्टो
विष निहन्यादपि तक्षकस्य ॥

दशाङ्गागद ।

वचाहिङ्गुविडङ्गानि सैन्धव गजपिप्पली।
पाठाप्रतिविषाव्योष काश्यपेन विनिर्म्मितम् ॥
दशाङ्गमगद पीत्वा सर्व्वकीटविष जयेत् ॥

कीटविषहरयोग ।

समूलपुष्पाङ्कुरवल्कवीजात्
क्काथ शिरीषात् त्रिकटुप्रगाढ ।
सलावण चौद्रयुतोऽथ पीतो
विशेषत कीटविष निहन्ति ॥

मूषिकविषहरयोग ।

अगारधूममञ्जिष्ठारजनीलवणोत्तमै ।
लेपो जयत्याखुविष शोणितस्रवण तथा ॥

वृश्चिकविषहरयोग ।

उष्ण गव्यघृतञ्चापि सैन्धवेन समन्वितम् ।
वृश्चिकस्य विष हन्ति लेपनात् पर्व्वतात्मजे ॥
स्नुहीचीरप्रलेपेन विष वृश्चिकज जयेत् ॥

कुक्कुरविषचिकित्सा ।

शिरीषस्य तु वीज वै स्नुहीचीरेण घर्षितम् ।
तल्लेपेन महादेवि नश्येत् कुक्कुरज विषम् ॥

मूषिकविषचिकित्सा ।

कुष्ठ त्रिकटुक दार्व्वी मधुक लवणद्वयम् ।
मालतीनागपुष्पञ्च सर्व्वाणि मधुराणि च ॥
कपित्थरसपिष्टोऽय शर्कराचौद्रसयुत ।
विष हन्त्यगद सर्व्व मूषिकाणा विशेषत ॥

शृगालादिविषकार्य्य तत्प्रतीकारश्च ।

शृगालाश्वतरच्वृच्चव्याघ्रादीना यदानिल ।
श्लेष्मप्रदुष्टो मुष्णाति सज्ञा सज्ञावहाश्रित ॥

तदा ग्रस्तलाङ्गूलहनुस्कन्धोऽतिलालवान् ।
अत्यर्थवधिरोऽन्धश्च सोऽन्योन्यमभिधावति ।
तेनोन्मत्तेन दष्टस्य दंष्ट्रिणा सविषेण तु ।
सुप्तता जायते दंशे कृष्णाञ्चातिस्रवत्यसृक् ॥
दिग्धविद्धस्य लिङ्गेन प्रायशश्चोपलक्षित ।
येन चापि भवेद्दष्टस्तस्य चेष्टारतो नर ॥
बहुश प्रतिकुर्व्वाण क्रियाहीनो विनश्यति ॥
दंष्ट्रिणा येन दष्टश्च तद्रूप यदि पश्यति ॥
अप्सु वा यदि वादर्शे रिष्ट तस्य विनिर्द्दिशेत् ।
त्रस्यत्यकस्माद् योऽभीक्ष्ण श्रुत्वा दृष्ट्वापि वा जलम् ॥
जलत्रासन्तु विद्यात् त रिष्ट तदपि कीर्तितम् ।
अदष्टो वा जलत्रासी न कथञ्चन सिध्यति ।
प्रसुप्तोऽथोत्थितो वापि स्वस्थस्त्रस्तो न सिध्यति ॥
विस्राव्य दश तैर्दंष्टे सर्पिषा परिदाहितम् ।
प्रदिह्यादगदै सर्पि पुराण वापि पाययेत् ॥
अर्कक्षीरयुतञ्चास्य दद्याच्छीर्षविरेचनम् ।
श्वेता पुनर्नवाञ्चास्य दद्याद्धुत्तूरकायुतम् ॥
कुपीलुविजयासर्पि सेवनाद्दैवकर्म्मणा ।
उन्मत्तजम्बुकादीना विषमाशु विनश्यति ॥
पलल तिलतैलञ्च रूपिकाया पयो गुड ।
निहन्ति विषमालर्क मेघवृन्दमिवानिल ॥

रूपिकाया श्वेतार्कस्य पय शुभ्रवर्णरस । गुड पुरातन ।

यदा यस्य च दोषस्य प्रकोप परिलक्ष्यते ।
तदा त प्रतिकुर्व्वीत पाययेदगदास्तथा ॥

विषस्य समबलचिकित्सा ।

तदन्यत् तत्समबल द्रव्य तद्धि विनाशयेत् ।
नतु हीनबल द्रव्य वारयेद्बलवत्तरम ॥
आहु स्म मुनय सर्व्वे भिषजश्च पुरातना ।
प्रतियोगिनमालक्ष्य प्रतियोगी निवर्त्तते ॥

प्रतियोग्यत्र समबलविरोधी ।

हरिणा हन्यते हस्ती हरिणेन कदापि न ।
जम्बुका परिभूयन्ते श्वभिरुग्रैस्वजैर्नहि ॥
विषमेकविध हन्याद्विषमन्यत् तथागुणम् ।
अतो भिषग्भिरुद्दिष्ट विषस्य विषमौषधम् ॥
सन्निपातज्वरे घोरे विष वर्ष्मणि जायते ।
तद्विषस्य विनाशाय कृष्णसर्पविष क्षमम् ॥
स्वयमुत्पद्यते देहे विष व्याधिप्रभावत ।
तल्लक्षणस्य जनक विष तद्विनिवारयेत् ॥
यान्येक जनयेद्द्रव्य लक्षणानि ततोऽपरम् ।
कुरुते यदि तान्येव द्वय समबल मतम् ॥
एक देहसमुत्पन्नमन्यद्वाह्य विष यदि ।
सम प्रकुरुते लिङ्ग तद्द्वय समशक्तिकम् ॥
अतोऽतत्सेविनो व्याविर्य्य कश्चिदभिजायते ।
तद्व्याधेर्जनयित्रासौ तदन्येन हि वार्य्यते ॥
यद्द्रव्य नि सरेद्देहात् तच्छीलेनेतरेण हि
प्रवृत्ति तस्य रुध्येत विधिरेष सनातन ॥

विपरीत तदाकर्षि सम तद्विनिवारकम्।
नियमोऽव्यभिचार्य्येष जगत्या परिदृश्यते॥
युक्त्यानयैव वपुषि यदभाव प्रजायते।
तदभावस्य जनक तदभाव निवारयेत्॥
क्वचित् समगुणा कार्य्या विपरीतात्मिका क्वचित्।
चिकित्सा द्विविधा चापि कालभेदे प्रशस्यते॥
बहुना येन यत्कार्य्य साध्यते तस्य चाणुश।
साध्यते विपरीत हि सर्व्वत्रैष विनिश्चय॥
दुर्निवार कोष्ठरोध फणिफेनो निवारयेत्।
जयपालभव वीज मलभेदे महौषधम्॥
शैत्ययोगेन सन्तापो विनिर्याति शरीरत।
उष्णवस्त्रादियोगेन तद्गति प्रतिरुध्यते॥
ज्वरेण देहे सन्तप्ते तैलतोयनिषेवणम्।
न प्रोक्त मुनिभि पूर्व्वं स्वेदस्तत्र सुखावह॥
इति दार्शनिकी युक्तिश्चिकित्साया प्रदर्शिता।
एतामाश्रित्य मतिमान् विचरेदिह कर्म्मसु॥

इत्यायुर्व्वेदविज्ञाने विषाधिकारो दशशीतितमोऽध्याय।

# त्र्यशीतितमोऽध्याय ।

—— ० ——

### अपमृत्य्वधिकार ।

श्वासरोधो मतो हेतुर्मरणे मज्जनादिना ।
अत श्वासे समानीते प्राणी प्राणिति यत्नत ॥
उष्ण कायोऽस्ति वै यावदङ्गानि शिथिलानि च ।
तावच्चिकित्सा कर्त्तव्या प्रायो दण्डान्ततो मृति ॥

### जलमज्जनचिकित्सा ।

जलमग्न समुत्थाप्य व्यवलम्ब्योर्द्ध्ववर्त्म च ।
मुखान्नि सारयेत्तोय कफ लालाञ्च निर्हरेत् ॥
जनता वारयेत् तत्र यथा वायुर्न दूष्यति ॥

### लुप्तश्वासस्य पुनरानयनविधि ।

शायितस्यास्य पार्श्वे तु तीव्रनस्य नसि क्षिपेत् ।
अङ्गुल्या संस्पृशेत कण्ठ श्लक्ष्णेन दारुणाथवा ॥
अनेन विधिना वेगे क्षवस्य वमनस्य वा ।
जाते श्वास समायाति विपन्नश्चापि जीवति ॥
मुख वक्षश्च सघृष्य तत्र शीताम्बुसेचनम् ।
कुर्य्याच्छ्वासस्तथायाति विपन्नश्चापि जीवति ॥
एव श्वासो नचेदायाद्भिषक् कुर्य्यात् क्रियामिमाम् ।
श्वासक्रिया प्रवृत्त्यर्थं जितहस्त कृतक्रिय ॥
कृत्वावाक्शायिन वैद्यस्तथोपधानवक्षसम् ।
पार्श्वे तत शाययित्वा तद्युग्म परिपीडयेत् ॥
षड्धा वा सप्तधा कुर्य्यात् पलमध्ये क्रियामिमाम् ।

यावच्छ्वासो न चायाति नाथवा मृत्युनिश्चय ॥
कृत्वोपधानपृष्ठ वा तमुत्तान प्रशाययेत्।
ततश्चाकर्षयेज्जिह्वा कर्षेद्वाहू स्वय तथा ॥
शीर्षे समीप आसीन कुर्य्याद्वस्ताबुरोगतौ।
गत्क्लव सप्तक्लवो वा पले कुर्य्यात् क्रियामिमाम्।
यावच्छ्वासो न चायाति नाथवा मृत्युनिश्चय ॥
श्वासो नायाति यद्येव बाहू सक्थ्नी च यत्नत।
विमर्द्य निम्नतश्चोर्द्ध रुक्षस्वेदश्च कारयेत् ॥
निश्छिन्ने कम्प्रमिश्चैव श्वासे वृत्ते च जीवति।
विपन्ने पाययेदेन सुरा सलिलसयुताम्।
निद्रावेगे स्वापयेच्च पथ्येनातश्च वर्त्तयेत् ॥

उद्बन्धनचिकित्सा।

अनेनैव विधानेन चिकित्स्येत कुशलो भिषक्।
उद्बन्धाद्विमुक्तञ्च श्वासस्यानयनादिना ॥
रज्जु कण्ठस्य सञ्छिद्य सर्पिषोष्णेन मर्द्दयेत्।
सम्यग्वातप्रवाहार्थं तालवृन्त प्रचालयेत् ॥
चैतन्ये पुनरायाते द्रव्य पथ्य प्रदापयेत।
यावत् सम्यग् बल न स्याच्छ्रमादिभ्यश्च वारयेत् ॥
नद्यादत्युत्कटाद्वापि वज्राग्निपरितापत।
नष्टसञ्ज्ञ चिकित्सेच्च पूर्व्वरीत्यनुसारत ॥
वज्राग्निपरितप्तस्य हितातिशीतला क्रिया।
वृक्षादिपतितश्चापि चिकित्सेदेवमेव हि ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
अपमृत्युर्व्वधिकारस्त्र्यशीतितमोऽध्याय।

## चतुरशीतितमोऽध्याय ।

—— ० ——

### वीर्य्यस्तम्भाधिकार ।

शूरण तुलसीमूल ताम्बूले सह भक्षयेत् ।
न मुञ्चति नरो वीर्य्यमेकैकेन न सशय ॥
चटकाण्डन्तु सगृह्य नवनीतेन पेषयेत् ।
तेन लेपयत पादौ शुक्रस्तम्भ प्रजायते ।
यावन्न स्पृशते भूमि तावद्वीर्य्य न मुञ्चति ॥
नीलोत्पल सितपङ्कजकेशर मधुशर्करावलिप्तेन ।
सुरते सुचिर रमते दृढलिङ्गो नाभिविवरेण ॥
सिद्ध कुसुम्भतैल भूमिलताचूर्ण मिश्रित कुरुते ।
चरणाभ्यङ्गेन रते वीर्य्यस्तम्भाद दृढ लिङ्गम् ॥
अहिफेनप्रयोगेण वीर्य्यस्तम्भो भवेद्ध्रुवम् ॥
गोरिकोन्नतशृङ्गत्वग्भव चूर्णेन धूपित वस्त्रम् ।
परिधाय भजत ललना नैकान्तो भवति हर्षात्त ॥
योगजवराङ्गवन्ध मथितेन क्षालित हन्ति ॥
उन्मुखगोशृङ्गोद्भवलेपो योगजध्वजभङ्गहर ॥

### शक्रवल्लभो रस ।

रस गन्धक लौहाभ्ररौप्यहेमानि माक्षिकम ।
शाणमानेन सगृह्य तुगाक्षीरीञ्च कार्षिकीम् ॥
पलप्रमाण विजयावीजञ्चैकत्र मर्द्दयेत् ।
विजयावारिणा पश्चान्माषमाना वटी चरेत ॥
एकैका भक्षणीयैषा पेयञ्चानु पय पलम् ।

श्रीशक्रवल्लभो नाम रसो वाजीकर पर ॥
वीर्य्यस्तम्भकरोऽप्यथ प्रमदामदनाशन ।
गतो ह्यप्सरसा शक्रो वाल्लभ्य यत्प्रसादत ॥

अर्ज्जकादिवटी नागवल्लयाद्य चूर्णमेव च ।
कामिनीद्रावणरस रसश्च शक्रवल्लभ ।
भेषजान्येवमादीनि वीर्य्यस्तम्भकराणि हि ॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
वीर्य्यस्तम्भाधिकारश्चतुरशीतितमोऽध्याय ।

---

## पञ्चाशीतितमोऽध्याय ।

### रसायनाधिकार ।

#### रसायनस्य लक्षणम् ।

यज्जराव्याधिविध्वसि वयस्तम्भकर तथा ।
चक्षुष्य बृहण वृष्य भेषज तद्रसायनम् ॥
अन्यच्च । यज्जराव्याधिविध्वसि भेषज तद्रसायनम् ।
पूर्व्वे वयसि मध्ये वा शुद्धकाय समाचरेत् ॥
नाविशुद्धशरीरस्य युक्तो रासायनो विधि ।
न भाति वाससि क्लिष्टे रङ्गयोग इवाहित ॥
दीर्घमायु स्मृति मेधामारोग्य तरुण वय ।
देहेन्द्रियबल कान्ति नरो विन्देद्रसायनात् ॥

नित्यग्राम्याहारविहारसेविना रसायनस्यावश्यकता ।

सर्व्वे शरीरदोषा भवन्ति ग्राम्यादाहारात् । अम्ल लवण कटुक चार शुष्कशाक माष तिल पलल पिष्टान्नभोजिना विरूढ नव शूक शमोधान्य विरुद्धासात्म्र रुच चाराभिष्यन्दि भोजिना, क्लिन्न गुरु पूति पर्य्यु षितभोजिना, विषमाध्यशन दिवास्वप्न स्त्री मद्यनित्याना, विषमातिमात्र व्यायाम सच्चो भितशरीराणा, भय क्रोध शोक लोभ मोहायासबहुलानाम् । अतो निमित्त हि शिथिलीभवन्ति मासानि विमुच्यन्ते सन्धयो विदह्यते रक्त निष्यन्दते चानल्प मेदो न सन्धीयतेऽस्थिषु मज्जा शुक्र न प्रवर्त्तते चयमुपैत्योज । स एवभूतो ग्लायति सीदति निद्रा तन्द्रालस्य समन्वितो निरुत्साह श्वसिति असमर्थं चेष्टाना शारीरमानमाना, नष्टस्मृतिबुद्धिच्छायो रोगाणा मधिष्ठानभूतो न सर्व्वमायुरवाप्नोति । तस्मादेतान् दोषान् अवेच्यमाण सर्व्वान् यथोक्तानहितानपास्याहारविहारान् रसायनानि च प्रयोक्तुमर्हति ।

आहारोऽत्र उपलक्षण विहारोऽपि । आयासो यत्र शारीरिको मानसिकश्च ।

शीतोदक पय चौद्र घृतमेकैकशो द्विश ।
त्रिश समस्तमथवा प्राक् पीत स्थापयेद्वय ॥
माचिकेण तुगाचीरी पिप्पल्या लवणेन च ।
त्रिफला सितया वापि युक्ता सिद्ध रसायनम् ॥

मण्डूकपर्ण्या स्वरस प्रभाते
चीरेण यष्टिमधुकस्य चूर्णम् ।

( द, ५२ )

रसो गुडूच्यास्तु समूलपुष्प्या
कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः ॥

मण्डूकपर्णी ब्राह्मी तदलाभे मञ्जिष्ठा ग्राह्या तस्यापि रसायनत्वात् ।

अभ्रस प्रसृतानष्टौ रवावनुदिते पिबन् ।
वातपित्तगदान् हत्वा जीवेद्वर्षशत नर ॥

ये मासमेक स्वरस पिबन्ति
दिने दिने भृङ्गरज समुत्थम ।
क्षीराशिनस्ते बलवर्णयुक्ता
समा शत जीवितमाप्नुवन्ति ॥

पीताश्वगन्धा पयसार्द्धमास
घृतेन तैलेन सुखाम्बुना वा ।
कृशस्य पुष्टि वपुषो विधत्ते
बालस्य शस्यस्य यथाम्बु वृष्टि ॥

महानीलकण्ठ रस ।

पलैक नागभस्माथ भावयेत्तिमिपित्तत ।
तन्नाग सुमृत स्वर्ण तोलैक वापि मिश्रयेत् ॥
द्विपल भस्म सूतस्य त्रिपल मृतमभ्रकम् ।
त्रिपल लौहभस्माथ सर्व्वमेकत्र कारयेत् ॥
भावयेच्च पृथक् कन्या ब्राह्मी निर्गुण्डिका शमी ।
मुण्डी शतावरी छिन्ना कोकिलाक्षस्य बीजकै ॥
मूषली वृद्धदारोऽग्नि द्रवैरेभि र्भिषग्वर ।
तत सचूर्णयेत् सर्व्वं तुल्य मेकादशाभिधम् ॥
वरा व्योषाब्द वक्रैला जातीफल लवङ्गकम् ।

पूजयेत् वृषपुष्पाद्यैर्नीलकण्ठ महेश्वरम ॥
द्विगुञ्ज भक्षयेदस्य मृत्युञ्जय मनुस्मरन् ।
जय मेकादशविध ग्रहणी रक्तपित्तकम् ।
विविधान् वातजान् रोगान् चत्वारिंशच्च पैत्तिकान् ।
हन्ति सर्व्वामयानेष कामिनीना शत व्रजेत् ॥
एकविंशति रात्रञ्च परिहार्य्य त्यजेदिह ।
यथेष्टाहारचेष्टो हि कन्दर्पसदृशो नर ॥
मेधावी बलवान् प्राज्ञो वह्न्याशो भीमविक्रम ।
पुत्रार्थिनी तथा नारी दिव्य पुत्र प्रसूयते ॥
जानात्येतस्य माहात्म्य नीलकण्ठो न चापर ।

ऋतुहरीतकी ।

सिन्धूत्थशर्कराशुण्ठी कणामधुगुडै क्रमात् ।
वर्षादिष्वभया सेव्या रसायनगुणैषिणा ॥
व्याधयो विनिवर्त्तन्ते धातुसाम्यञ्च जायते ।
तार्क्ष्यस्येव भवेद्दृष्टिस्त्रिफलाया निषेवणात् ॥

श्रीसिद्धमोदकश्चैव वसन्तकुसुमाकर ।
पूर्णचन्द्ररसो लक्ष्मीविलासाख्यो रसस्तथा ॥
त्रैलोक्यचिन्तामणिकस्तथाष्टावक्रसञ्ज्ञक ।
भेषजान्येवमादीनि रसायनवराणि हि ॥

सिद्धमकरध्वज ।

पलमान रस सम्यग् बहुसस्कार सस्कृतम् ।
तथा पलद्वय गन्ध शुद्ध हेम द्विकार्षिकम् ॥
कैलासाचलसम्भूते सुदृढे च सुचिक्कणे ।

श्रोणप्रस्तरजे खल्ले सर्व्वं सस्थाप्य मिश्रयेत् ॥
मर्द्दयेद् यत्नतो वैद्यो यामानष्टौ निरन्तरम् ।
रक्तकार्पासपुष्पस्य श्वेताङ्कोठफलस्य च ॥
कुमार्य्याश्च रसै सम्यग् भावयित्वा पृथक् पृथक् ।
स्थापयित्वा काचकूपीमध्ये सर्व्वं प्रयत्नत ॥
रक्ताङ्ग माल सरल खदिर श्रीफलोद्भवाम् ।
काष्ठेनान्यतमेनैव नीरसेन प्रतापयेत ॥
मृदुनानलयोगेन प्राग् यामद्वितय पचेत् ।
पुनर्यामद्वय पाच्य मध्यतापेन वह्निना ॥
अग्निना प्रखरेणैव ततो यामद्वय पचेत् ।
भूयो मन्दाग्निना पाच्यमवशिष्टद्वियामकम् ॥
स्वाङ्गशीतमथोद्धृत्य नवचूतदलोपमम् ।
भङ्गुर लोहित पिष्टे दाडिम्बकुसुमोपमम् ॥
ततोऽवतार्य्य गन्धेन द्विगुणेन विमर्द्दयेत् ।
भावयेत् पूर्व्ववद् भूय पाचयेच्च प्रयत्नत ॥
एव वारद्वय कुर्य्यात् सम्यगौषधसिद्धये ।
सन्निपात ज्वर घोर मन्दाग्नित्व मरोचकम् ।
आमशूल कटीशूल हृच्छूल पक्तिशूलकम् ॥
कास श्वासञ्च यक्ष्माण शूल कुष्ठमशेषत ।
गलोत्थानन्त्रवृद्धिञ्च तथातीसारमेव च ॥
श्लीपद कफवातोत्थ चिरज कुलज तथा ।
नाडीव्रण व्रण घोर गुदामय भगन्दरम् ॥
वाय बहुविध हन्ति ध्वजभङ्ग विशेषत ।
सेवनादस्य नश्यन्ति सर्व्वे रोगा न सशय ॥

करोत्यग्नि बल वोर्य्यं बलीपलितनाशन ।
विधिवत् सेवितो ह्येष मुमुर्षुमपि जीवयेत् ॥
स्वेच्छाचारविहारोऽपि न कदाचिद् विपद्यते ।
मेधायु कान्तिजनन कामोद्दीपनकृन् महान् ॥
वृद्धोऽपि तरुणस्पर्द्धी स्त्रीषु चापि वृषायते ।
सेवनादस्य सम्राजो गच्छन्ति प्रमदाशतम् ॥
त्रैलोक्यशुभद श्रीमदेष एव महौषधम् ।
मृत्युञ्जयो यथाभ्यासान्मृत्यु जयति देहिनाम् ॥
तथाय साधकेन्द्रस्य जरामरणनाशन ।
स्वय त्रैलोक्यनाथेन त्रैलोक्यहितमिच्छता ॥
समर्पितोऽय सिद्धेभ्य करुणार्द्रेण वै यत ।
अतोऽय भुवने ख्यात श्रीसिद्धमकरध्वज ॥
भास्वान् यथा तमो हन्ति केशरी करिण यथा ।
तुलासव यथा वह्निस्तथा रोगानसौ हरेत् ॥

त्रिफलादि वटी ।

त्रिफला पर्पट कट्वी त्रायन्ती च समाशिकाम् ।
सर्व्वं सम क्रुपीलुञ्च रक्तिद्वयमिता वटी ॥
नाशयेच्छुक्रतारल्य शोधयेच्छोणित भृषम् ।
हरेदिन्द्रियशैथिल्य बल वह्निञ्च वर्द्धयेत् ।

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
रसायनाधिकार पञ्चाशीतितमोऽध्याय ।

# षड़शीतितमोऽध्यायः ।

—— ० ——

## वाजीकरणाधिकार ।

### वाजीकरणस्य लक्षणम् ।

येन नारीषु सामर्थ्यं वाजिवल्लभते नर ।
येन वाप्यधिक वीर्य्यं वाजीकरणमेव तत् ॥

वाज शुक्र तदस्यास्तीति वाजी, अवाजी वाजीक्रियते ऽनेनेति वाजीकरणम्। अथवा रतौ वाजीव क्रियतेऽनेनेति वाजीकरणम् ।

### एतदकरणे दोषा ।

ग्लानि कम्पोऽवसादस्तदनु च कृशता क्षीणता चेन्द्रियाणाम् ।
शोषोच्छासोपदंशज्वरगुदजगदा क्षीणता सर्व्वधातौ ।
जायन्ते दुर्निवारा पवनपरिभवा क्लीवता लिङ्गभङ्गो
वामावश्यातियोगाद्भजत इह सदा वाजिकर्म्मच्युतस्य ॥
चिन्तया जरया शुक्र व्याधिभि कर्म्मकर्षणात् ।
क्षय गच्छत्यनशनात् स्त्रीणाञ्चातिनिषेवणात् ॥
यत् किञ्चिन्मधुर स्निग्ध जीवन बृंहण गुरु ।
हर्षण मनसश्चैव सर्व्वं तद्दृष्यमुच्यते ॥

### अथ वृष्याणि ।

घृतभृष्टमाषविदल दुग्धसिद्धञ्च शर्कराविमिश्रम् ।
भुक्का सदैव कुरुते तरुणीशतमैथुन पुरुष ॥
शतावरीसृत क्षीर प्रपिबेत् सितया युतम् ।

रममाणस्य विरति मृदुता याति नेन्द्रियम् ॥
वृद्धशाल्मलितोयस्य शर्करासहितस्य च ।
प्रयोगादेव सप्ताहाज्जायते रेतसोऽम्बुधि ॥
लघुशाल्मलिमूलेन तालमूली सुचूर्णिताम् ।
सर्पिसा पयसा पीत्वा रतौ चटकवद्भवेत् ॥
विदारीकन्दचूर्णञ्च घृतेन पयसा पिबेत् ।
उडुम्बररसेनैव वृद्धोऽपि तरुणायते ॥
मतधामलकीचूर्णमामलाम्बुविभावितम् ।
घृतेन मधुना लीढ्वा पिबेत् क्षीरपल नर ॥
वाजीकरणयोगोऽयमुत्तम परिकीर्त्तित ॥
पिप्पलीलवणोपेतौ वस्ताण्डौ क्षीरसर्पिषा ।
साधितौ भक्षयेद यस्तु स गच्छेत् प्रमदाशतम् ॥

अत्यन्तमुष्ण कटु तिक्त कषायमम्ल
क्षारञ्च शाकमथवा लवणाधिकञ्च ।
कामी सदैव रतिमान् वनिताभिलाषी
नो भक्षयेदिति समस्त जनप्रसिद्धि ॥

चूर्णञ्च नरसिंहाख्य गोधूमाद्यघृत तथा ।
अश्वगन्धाघृत चैव गुडकुष्माण्डक तथा ॥
शतावरीमोदकश्च श्रीकामेश्वरमोदक ।
कामाग्निसन्दीपनक कामिनीमदभञ्जन ॥
खण्डाम्नक मन्मथाभ्ररसश्च मकरध्वज ।
स्वर्णसिन्दूरकरसो गुडिका सुरसुन्दरी ॥
तथैव लक्ष्मणालौह तैल पल्लवसारकम् ।
श्रीगोपालाभिध तैल मृतसञ्जीवनीसुधा ॥

भेषजान्येवमादीनि श्रेष्ठ वाजीकरणानि हि।
बहुभार्य्यैं क्षीणशुक्रै सेव्यानि पुरुषै सदा॥

इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
वाजीकरणाधिकार षडशीतितमोऽध्याय।

---

## सप्ताशीतितमोऽध्याय'।



शातातपोक्त महापातकानि तद्भवरोगाश्च।

ब्रह्महत्या सुरापान स्तेय गुर्व्वङ्गनागम।
महान्ति पातकान्याहु ससर्गश्चापि तै सह॥
कुष्ठञ्च राजयक्ष्मा च प्रमेहो ग्रहणी तथा।
मूत्रकृच्छ्राश्मरी कासा अतीसारभगन्दरौ॥
दुष्टव्रण गण्डमाला पक्षाघातोऽक्षिनाशनम्।
इत्येवमादयो रोगा महापातोद्भवा स्मृता॥
बाधन्ते व्याधिरूपेण सप्तजन्मसु वै नृणाम्॥

उपपातकजरोगा।

जलोदर यकृत् प्लीह शूलरोग व्रणानि च।
श्वासाजीर्ण ज्वर च्छर्दि भ्रम मोह गलग्रहा॥
रक्तार्व्वुदविसर्पाद्या उपपापोद्भवा गदा॥

पातकजरोगा ।

दण्डापतानकश्चित्रवपु कम्प विचर्च्चिका ।
वल्मीक पुण्डरीकाद्या रोगा पापसमुद्भवा ॥

अतिपातकजरोगा ।

अर्शआद्या नृणा रोगा अतिपापाद्भवन्ति हि ।
अन्ये च बहुधा रोगा जायन्ते रोगसङ्करा ॥

आद्या इतिपदेन सर्व्वाङ्गव्यापि कुष्ठ ज्ञेयम् । कुष्ठप्रति-तकौ अर्शोवाश्चेति प्रयोगात् ।

न पापेन विना दु ख व्याधयो दु खदा यत ।
अतो रोगा हि निखिला पापादेव भवन्ति हि ॥
विहितस्याननुष्ठानात् निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणा नर पतनमृच्छति ॥
ख्यापनेनानुतापेन तपसाध्ययनेन च ।
पापकृन्मुच्यते पापात् तथा दानेन चागदि ॥
ये रोगा नैव साध्यन्ते भैषज्यैर्विविधैरपि ।
ते ज्ञेया प्राक्पातकजा प्रायश्चित्तनिवर्हणा ॥
प्रायश्चित्त विधायाथ कार्य्या भेषजकल्पना ।
एव झटिति रोगाणा शान्ति स्यान्नात्र सशय ॥

- इत्यायुर्व्वेदविज्ञाने निदानचिकित्सितस्थाने
सप्ताशीतितमोऽध्याय ।

---

## परिशिष्टम् ।

द्वैकालिकज्वरे—लोकनाथवटी ।

जीवकर्षभकौ मेदे चम्पक नागर विषाम् ।
कासोसञ्च सम सर्व्व सर्व्वतुल्य रसाञ्जनम् ॥
यष्टीमधु कषायेण रसै खर्ज्जूरपत्रजै ।
मर्द्दयित्वा वटी कार्य्या रक्तिद्वयमिता शुभा ॥
ज्वर द्वैकालिक हन्ति लोकनाथवटी ध्रुवम् ॥

शिरोरोगे—मिहिरोदय वटी ।

लौहमभ्र सुवर्णञ्च विद्रुम राजपट्टकम ।
सर्व्व सम प्रदातव्य सिन्दूरञ्च द्विभागिकम् ।
एरण्डमूलजेनैव रसेन परिभावयेत् ।
क्वाथैस्तथा जटामास्या वटी रक्तिद्वयात्मिका ॥
पथ्यापयोऽनुपानेन वटीय मिहिरोदया ।
अर्द्धावभेदक हन्ति पीता वातमनन्तकम् ॥
सूर्य्यावर्त्त तथा शङ्खैकजञ्च द्विदोषजम् ।
त्रिदोषज शिरोरोग साध्यासाध्य न सशय ॥

वातरक्ते—वृहद्वातरक्तान्तकलौह ।

अयोभागद्वय देय प्रत्येकञ्चैकभागकम ।
रस गन्धक मुक्ताभ्र खर्परागाञ्च काञ्चनम् ॥
भागार्द्धञ्च तथा ताल सर्व्वमेकत्र मिश्रयेत् ।
कुपीलोर्भेकपर्ण्याश्च द्रोणपुष्प्या रसैस्त्रिधा ॥
भावयेद्भावविन्मात्रा ज्ञेया रक्तिद्वयात्मिका ।
पथ्यापयोऽनुपानञ्च कर्त्तव्य हितमिच्छता ॥

वृहद्वातान्तको लौह सेवितो नितरा हरेत् ।

सोपद्रव दारुणवातरक्त
गम्भीर मुत्तानमथोपदशम् ।
प्रमेहमत्युग्रमथातिकृच्छ
जात विकार विविध नराणाम् ॥
कापालमौडुम्बरमृच्चजिह्व
सिध्म तथा मण्डलपुण्डरीके ।
कुर्य्याद्विशुद्धि खलु शोणितस्य
वर्णप्रकर्षञ्च बलाग्निवृद्धिम् ॥

अम्लशूले—अम्लपित्तान्तकचूर्णम् ।

विजौरक यमान्यौ च लवङ्ग विजया तथा ।
सर्व्वं सम समादाय सुभृष्ट च विचूर्णयेत् ॥
द्विक्षार पञ्चलवण सम पूर्व्वैश्च योजयेत् ।
द्वित्रिमाषमित खादेन्नारिकेलफलाम्बुना ॥
अम्लपित्तान्तक चूर्णमम्लपित्त सुदारुणम् ।
अग्निमान्द्य तथाजीर्ण शूलरोगञ्च दारुणम् ॥
अन्नद्रवाख्य शूलञ्च यच्छूल परिणामजम् ।
सानुवन्ध हरेत् तूर्णं भास्करस्तिमिर यथा ॥

सूक्ष्मैलारिष्ट ।

पञ्चविंशत्पल ग्राह्य सूक्ष्मैलायास्तथा त्रिवृत् ।
शुण्ठीषट्पलक देय त्रिफलायास्तथा दश ॥
चतुर्द्रोणे विपक्वाव्य द्रोणेऽर्द्धे चावतारयेत् ।
पूते मधु तुलामान तुलार्द्धं शर्करा तथा ॥
धातुपुष्प दशपल प्रदेयञ्चाल्पकुट्टितम् ॥

अजमोदा विडङ्गञ्च शतपुष्पा यमानिका ।
क्षारौ द्वौ फनिफेनञ्च पलार्द्धञ्च पृथक् पृथक् ॥
लवङ्ग द्विपल देय मृद्भाण्डे सन्निधापयेत् ।
मासेऽतीते समुत्तार्य्य सेवेत परम हितम् ॥
अम्लपित्तमजीर्णञ्च वह्निमान्द्यमरोचकम् ।
शूल शोथ ज्वर हन्ति भास्करस्तिमिर यथा ॥

---

श्रीगोविन्दपदारविन्दयुगल ध्यात्वाखिलेष्टप्रद
नित्यानन्दभिषग्वरस्य भुवने ख्यातस्य पौत्त्रो धिया ।
श्रीमद्राजकिशोरनामसुधिय पुत्त्रोऽम्बिकावासवान्
सजग्राह विनोदनामकभिषग ग्रन्थ यथाज्ञानत ।
भ्रमात् प्रमादाच्चाज्ञानादमाध्वच क्षत नु यत् ।
दयावन्तो महात्मान सुधिय शोधयन्तु तत् ॥
इत्यायुर्व्वेदविज्ञानग्रन्थ कृष्णप्रसादत ।
समाप्तिमागतस्तस्मात् सफल मम जीवनम् ॥
वसुवह्निगिरिक्षौणीमानेऽब्दे मासि माधवे ।
माधवस्य प्रसादेन ग्रन्थोऽय मुद्रित पुन ॥

समाप्तश्चाय ग्रन्थ ।